पेक्खूण आइपुरिसं महुआइपुण्णे
रण्णे णिए जिअदुअळ्ळदिसादुऊलं ।
पाए अ णेउरवअं रिअबालवेसं
सा तारिसी रविसुआ विअळा भुवीअ ॥ २५ ॥

छाया— दृष्ट्वादिपुरुषं मधूकादिपूर्णे-
ऽरण्ये निजे जितदुकूलदिग्दुकूलम् ।
पादे च नूपुरवृतं ऋतबालवेषं
सा तादृशी रविसुता विजला बभूव ॥

मधूको वृक्षविशेषः । आदिशब्देन शमीपलाशादयो गृह्यन्ते । तैर्मधूकादिभिः पूर्णे निजे स्वतीरभवे अरण्ये कानने । दिगेव दुकूलं दिग्दुकूलं, जितं दिग्दुकूलं यस्य तं प्रसिद्धपीतपट्टाम्बरधारणादपि तदानीं तस्या दिग्वासस्त्वम् अशोभतेत्यर्थः । पादे च नूपुरवृतं कंसभीत्या त्वरिताय पित्रे शीघ्रं मार्गदानार्थं स्वस्वरूपविज्ञापनाय बालोचितं मञ्जुशिञ्जितं मञ्जीरभूषणमञ्जसा दर्शयन्तमित्यर्थः । ऋतेति असत्यबालमपि सत्यबालवेषम् । विजला विगतप्रायजला समवर्तत ।

" इत्पुरुषे रोः " (१।२३) अनेन पुरुषशब्दे रेफात्परस्य उकारस्य इकारः, पुरिसं । " उदूतो मधूके " (१।२४) अनेन मधूकशब्दे आदेरूत उकारः । महुअ । " अद्दुकूले वा लस्य द्वित्वम् " (१।२५) अनेन दुकूलशब्दे ऊकारस्य सविकल्पमकारः । तदा लकारस्य द्वित्वं च दुअल्ल । तदभावे दुऊळ । " एन्नूपुरे " (१।२६) अनेन नूपुरशब्दे

१. 'वक्षो' क. ख. १. 'प्रेक्ष्यादि' घ.
३. 'वृतो' क. ख. घ. ४. 'धृत' क.
५. 'स्य विकल्पं विना एकारः' क.

ऊकारस्य एकारो भवति, णेउरं । 'ऋतोऽत्' (१।२७) अनेन ऋकारस्य अकारः, वअं । "अयुक्तस्य रिः" इत्यनेन केवलस्य ऋकारस्य रि इत्ययमादेशः, रिअ । अनेन क्वचिद् युक्तस्यापि । अनेन युक्तस्य ऋकारस्य रि इत्यादेशः, तारिसी इत्यादयः । वसन्ततिलकं वृत्तम् ।

स्तुत्यादियमुनातरणान्तं श्रीभागवतानुसारेणैवोक्तमिति द्रष्टव्यम् । 'अथैनमस्तौदवधार्य पूरुषं शेषोऽन्वगाद् वारि निवारयन् फणैः । भयानकावर्तशताकुला नदी मार्गं ददौ' इत्यादिदर्शनात् ॥

वसुदेवप्रवेशपुरस्सरं घोषं वर्णयति—

उत्तिण्णो सो इसीणं समकिदिहिअओ सारिघिट्ठी किसाहो
मन्ती किच्चं व सन्तं णइमह अ गओ घोसमुब्भिंगवण्णं ।
गिट्ठीणं दिट्ठिरम्मं किसरतिणमणुव्विच्छिअं णिस्सिअळ्ळं
भिंगारत्थिण्णछीरं रमणमुहमिअंकाविंतिण्हद्दजोसं ॥ २६ ॥

छाया— उत्तीर्णः स ऋषीणां समकृतिहृदयः सारिघृष्टिः कृशाघो
मन्त्री कृत्यामिव शान्तां नदीमथ च गतो घोषमुद्भृङ्गवर्णम् ।
गृष्टीनां दृष्टिरम्यं कृसरतृणमनुद्वृश्चिकं निस्सृगालं
भृङ्गारास्तीर्णक्षीरं रमणमुखमृगाङ्काबितृष्णार्द्रयोषम् ॥

ऋषीणां समा तुल्या कृतिः प्रवृत्तिः हृदयं च सदयत्वाद् यस्य तथा । सारिघृष्टिः अरिणा चक्रेण सहितत्वात् सारीत्यनेन हरिरुच्यते । तस्य घृष्टिर्गभस्तिः प्रभा यस्येति व्यधिकरणबहुव्रीहिः । अथवा सार-

---

१. 'आतोऽत्' क. ख. २. 'जका' क.
३. 'कारिसी' क. ख. ४. 'कृतो' क. ख.

युक्ता घृष्टयो यस्येति विग्रहः। तत्पक्षे दुस्तरयमुनातरणसन्तोषेण प्रभावानित्यर्थः। कृशाघः विनष्टप्रायपापः। भगवत्स्पर्शने सत्यपि निष्कलैक्यज्ञानाग्निना कर्मणां भस्मीकृतत्वाभावात् तथोक्तिः। एवम्भूतः स वसुदेवः। मन्त्रीति मन्त्रप्रयोक्ता। स्वमन्त्रप्रयोगशान्तां कृत्यामभिचारदेवतामिव शान्तां त्यक्तदर्पां शून्यप्रायजलां नदीम् उत्तीर्णः सन्ननन्तरं घोषं गतश्च। भृङ्गस्य वर्ण इव वर्णो यस्य सः भृङ्गवर्णः कृष्णः उद्धृतो भृङ्गवर्णो येन सः तथा। अथवा भृङ्गशब्दो नीलवर्णवाची। त्रैविक्रमे तथा दर्शनात्। घोषं विशिनष्टि— गृष्टीनां दृष्टिरम्यं 'गृष्टिः सकृत्प्रसूता स्याद्' इति सिंहः। तदुपलक्षितानां गवां दृष्टिषु रम्यम्। कुतः, कृसरतृणं कृसराणामिव तिलानामिव स्वादूनि तृणानि यस्य तत् कृसरतृणम्। अनुद्वृश्चिकं वृश्चिकानां कारणभूते गोमये प्रभूते सत्यपि अनुद्भूतवृश्चिकम्। गुल्मलतोपेतत्वे सत्यपि निस्सृगालं क्रोष्टुरहितं, भाविभगवत्सान्निध्येन प्रागेव दुष्टजन्तुरहितमित्यर्थः। भृङ्गारेषु स्वर्णपात्रविशेषेषु आस्तीर्णं क्षिप्तं क्षीरं यत्र स तथा। रमणेति रमणानां कान्तानां मुखमेव यो मृगाङ्कः तस्मिन्नवितृष्णा अलम्भावरहिता आर्द्रा विलीनहृदया योषा यत्र तं घोषं गत इति सम्बन्धः।

अत्र 'इदृष्यादिषु' (१।२८) इत्यनेन ऋष्यादे ऋत इत्वं विधीयते, इसीणं। ऋषिकृतिहृदयघृष्टिकृशकृत्याभृङ्गगृष्टिदृष्टिकृसरतृणवृश्चिकसृगालभृङ्गारमृगाङ्कवितृष्णाप्रकृतिघृतआकृतिभृत्यसृष्टिशब्दा ऋष्यादयः। अस्मिन् श्लोके वितृष्णान्ता उदाहृताः। शेषा उत्तरश्लोके उदाहरिष्यन्ते॥

अतः परमासर्गान्तं वक्ष्यमाणैर्दशभिः श्लोकैर्घोषवर्णनमेव क्रियत इत्यवसेयम्। घोषमित्यस्य विशेषणत्वेन तेषां सम्बन्धः। अस्य

श्लोकस्य स्रग्धरा वृत्तम् । "म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्" इति तल्लक्षणम् ॥

पइदिं व घिओहाणं आइदिज्जन्तभिच्चअं ।
भुवि गोसिट्ठिळोअं व ओइण्णं सेविउं हरिं ॥ २७॥

छाया— प्रकृतिमिव घृतौघानां आकृतिज्ञातभृत्यकम् ।
भुवि गोसृष्टिलोकमिवावतीर्णं सेवितुं हरिम् ॥

प्रकृतिरुपादानकारणं, तत्र हि कार्याणां बहुविधं स्वरूपं दृश्यते, यथा सुवर्णादिः प्रकृतिः स्वविकारकटकाद्यात्मा दृश्यते । एवं घोषोऽपि । तत्र घृतप्राचुर्यदर्शनात् तत्प्रकृतित्वमुत्प्रेक्ष्यते । आकृतीति, आकृत्या देहचेष्टया स्वामिन अभिप्रायं जानते ये ते स्वाम्यनुवर्तनकुशलत्वात् । अतस्त एव आप्ताश्च भृत्याश्च यत्र । भूमाववतीर्णं हरिं सेवितुं भूमाववतीर्णं गोसृष्टिलोकमिव गवां सृष्टिरत्रेति गोसृष्टिलोको गोलोकः, तमिव । गवां बहुगुणत्वबहुळत्वाभ्यामेवमुत्प्रेक्ष्यते । प्रकृतिघृतआकृतिभृत्यसृष्टिशब्दा अत्रोक्ताः । पथ्यावक्त्रं वृत्तम् । "युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्तितम्" इति तल्लक्षणम् ।

सोहमाणमुदुणा मुणाळिणी-
वैरिणा हरउदाण सत्तुणा ।
भाउएण मअणस्स पावुस-
क्खाइणा पुहविआहिमोइणा ॥ २८॥

---

१. 'पुअवि' क. ख.

छाया — शोभमानमृतुना मृणालिनी-
वैरिणा परभृतानां शत्रुणा ।
भ्रातृकेन मदनस्य प्रावृट्-
ख्यातिना पृथिविकाभिमोदिना ॥[1]

प्रावृडिति ख्यातिः प्रसिद्धिर्यस्य तेनर्तुना शोभमानमिति तत्कालविशेषणं घोषस्य। मृणालिनी पङ्कजिनी। तद्वैरित्वं स्वपत्युरादित्यस्य करस्पर्शनिरोधादिना। कोकिलानां शत्रुत्वं तदानीं तद्वाक्प्रसरनिरोधात्। अतैव भ्रातृकः[2] तस्य कालस्य कामोद्दीपनत्वात् पृथिविकाभिमोदिना पृथिव्येव पृथिविका[3], तस्या अभिमोदिना।

"उद्दत्वादिषु" (१।२९) इत्यनेन ऋत्वादिषु शब्देषु आदेर्ऋत उकारो विधीयते। ऋतुमृणालिनीपरभृतभ्रातृकप्रावृट्पृथिवीवृन्दावननिर्वृतसंवृतप्रवृत्तिवृत्तान्तमातृजामातृशब्दा ऋत्वादयः। अस्मिन् श्लोके पृथिव्यन्ताः प्रदर्शिताः। शिष्टा उत्तरश्लोके। रथोद्धतावृत्तम्॥

वुंदावणाहेहि वणेहि भद्दअं
णिव्वुत्तसोक्खं विवुदोच्चसड्ढलं।
पवुत्तिवुत्तन्तमणोज्जमाउआ-
सुअं सजामाउअसस्सुसम्मअं ॥ २९ ॥

छाया — वृन्दावनाभैर्वनैर्भद्रकं
निर्वृत्तसौख्यं विवृतोच्चशाड्वलम्।
प्रवृत्तिवृत्तान्तमनोज्ञमातृका-
सुतं सजामातृकश्वश्रूसम्मतम् ॥

1. 'पृथिव्यभि' घ. 2. 'कं' क. ख.
3. 'का पृथिवी भवानात् तस्य अभि' क,
'का पृथिवीभवानात् तस्याभि' ख.

वृन्दावनाभैः वृन्दावनसदृशैः वनैः । वृन्दावनस्य रमणीयत्वं सुप्रसिद्धं, तेनैवमुक्तम् । निर्वृत्तसौख्यं सर्वप्राणिनामपि सञ्जातसौख्यम् । विवृतेति- विवृतैरत्यन्तमसंश्लिष्टैर्गोतुण्डप्रचारसुखकरैः दीर्घतरैः शाड्वलैः सहितम् । प्रवृत्तीति- प्रवृत्तिभिः व्यापारैः वृत्तान्तैः वार्ताकथनश्रवणादिभिश्च मनोज्ञा रमणीयस्वभावा मातृकासुताः मातरः सुताश्च, एतैर्युक्तम् । जामातरो दुहितृपतयः । 'जामाता दुहितुः पतिः' इति सिंहः । तत्साहिताभिः श्वश्रूभिः सम्मतं बहुमानविषयम् । इति ऋत्वादयः । इन्द्रवज्रावृत्तं वंशस्थं च, अत उपजातिः ॥

सआलरुक्खं सुहचूअवच्छअं
किळित्तसज्जं विअणाइ दूरअं ।
सवेअणे संविरहे वि देअरे
सळज्जरामं दिअरच्चिअज्जअं ॥ ३० ॥

छाया— ससालवृक्षं शुभचूतवृक्षकं[2]
क्लृप्तसर्जं[1] वेदनाया दूरगम्[3] ।
स्ववेदने[4] संविरहेऽपि देवर
सलज्जरामं देवरार्चितार्यकम् ॥

क्लृप्तसर्जं मूले निवासार्थं क्लृप्ताः कैश्चित् कल्पितकुट्टिमाः सर्जा नाम महान्तो वृक्षविशेषाः । वेदनाया दूरगं वेदनारहितं दुःखरहितमित्यर्थः । घोषे हि सर्वेषां सदैकत्रावस्थानादिष्टादर्शनादिदुःखं प्रायशो न विद्यते । लक्ष्मणः सीतामिव यः कश्चिद् देवरः स्वज्येष्ठस्य

---

१. 'यम् इन्द्र' ख. २. 'वृक्षं' घ.
३. 'दूरं' ब. ४. 'सवे' ब.
५. 'नादिशिष्टा' क. ख.

भार्यां वीक्ष्य अभिवाद्य अर्थं तदात्मानं निवेदयति तत् स्ववेदनं स्वनि-वेदनम्। संविरहे- तासां स्वभर्तृभिः सहसा भूतो विरहः संविरहः तस्मिन् सति। देवरे स्वनिवेदनं कुर्वति ताः सलज्जा भवन्ति, तथाविधा रामा यस्मिन्। अपिः समुच्चये। सलज्जं रामं च।

*"वृक्षे वेन रुर्वा" (१।३२) इत्यनेन वृक्षशब्दे ऋकारस्य वका-रेण सह रुत्वं, रुक्खं। व्यवस्थितविभाषा चेयम्। यदा क्षकारस्य "ष्करुक्ष्मां खः" (३।२९) इत्यनेन खत्वं तदा रुत्वम्। यदा "अक्ष्यादिषु च्छः" (३।३०) इति च्छत्वं तदा 'ऋतोऽदि'त्यृकारस्यात्वं, वच्छअं[1] इति भवति। "लृतः क्लृप्त इलिः" (१।३३) इत्यनेन क्लृप्तशब्दे लृकारस्य इलिः, किलित्तं। "एत इद्वेदनादेवरयोः" (१।३४) इत्यनेन वेदनादेवरशब्दयोरेतः सविकल्पमिकारः, विअणाइ। सवेअणे, 'रुर्वे'-त्यतो मण्डूकप्लुत्या वाशब्दस्यानुवृत्तिः[2]। वंशस्थं वृत्तम्॥

सेण्णं दइच्चाण व ही! महुज्जळं
　　बुद्धं व सम्फुळ्ळचइच्चभूमिअं।
मणज्जसीअं[3] अ वइदेहअं विअ
　　चूअं व फुळ्ळं वइसाहसुन्दरं॥ ३१॥

---

* "ऋ रीति" [१।३०], "क्वचिद्युक्तस्यापि" [१।३१] इति सूत्रद्वयं नोदाहृतम्।

---

१. 'तदा कुतो ह्रस्युकारस्यात्वं वच्छअं' क. ख.

२. 'नुवृत्तिः॥ सेण्णं' ख.　　३. 'मणोज' क.

छाया— सैन्यं दैत्यानामिव ही ! मधूज्ज्वलं[1]
बुद्धमिव सम्फुल्लचैत्यभूमिकम्[2] ।
मनोज्ञसीतं[3] च वैदेहकमिव
चूतमिव फुल्लं वैशाखसुन्दरम् ॥

दैत्यानां सैन्यं मधुना लवणपित्रा कैटभपूर्वजेन वा उज्ज्वलम् । तथा घोषस्य मधुना वसन्तेनोज्ज्वलत्वं विद्यते तस्य वनमध्यगतत्वाद् वनस्य च वसन्ते विशेषरमणीयत्वादेवमुक्तिः । ही इति विस्मये । 'हा ही हू हन्त विस्मये' इत्युक्तेः । बुद्धः सुगतः । सम्फुल्लां शोभां वहन्ती चैत्यभूमिः विहारभूमिर्यस्य । "शेषाद्विभाषा" (पा०सू० ५.४. १५४) इति कप्रत्ययः । एतद् बुद्धपक्षे विशेषणम् । घोषपक्षे सम्फुल्लाः विकसितकुसुमाश्चैत्यवृक्षा यस्मिन् घोषे । ग्रामादीनां मध्ये तत्रत्यानां सम्भूय अवस्थानार्थं कल्पिता बद्धकुट्टिममूला महावृक्षाः चैत्यवृक्षाः । 'नीडारम्भैर्गृहबलिभुजामाकुलग्रामचैत्याः' इति मेघसन्देशे । मनोज्ञा सीता यत्र स मनोज्ञसीतो वैदेहः । घोषपक्षे मनोज्ञसी(शी)तम्[4] । तमिव । गवादीनां हिताय शीतलेषु प्रदेशेषु हि घोषाः कल्प्यन्ते । फुल्लं विकसित-कुसुमं चूतमिव । स हि वैशाखेन वसन्तद्वितीयमासेन सुन्दरः । घोषो-ऽपि वैशाखेन मन्थदण्डेन सुन्दरः । सेण्णं, "एत एत्" (१।३५)[5] इत्यनेन ऐकारस्य सामान्येन एकारो विधीयते । दइच्चाण, "दैत्या-दिष्वइ" (१।३६) इत्यनेन ऐकारस्य अइ । दैत्यचैत्यवैदेहवैशाख-भैरवस्वैरवैशिककैतववैदेशवैशम्पायना दैत्यादयः[6] । अत्र श्लोके वैशा-खान्ता उदाहृताः । शिष्टा उत्तरश्लोकयोः । इन्द्रवज्रावृत्तम् । तृतीयपादे

१. 'उज्जलिं' क. ख.
२. 'जम्' ख. 'जम् भूमिकमिति च' घ. ङ.
३. 'ज्ञशीतमिति च ।' घ.
४. 'ज्ञसीतमिव' क. ·.
५. 'मण्डद' क. ख.
६. 'यते, दैत्यचैत्य' क. ख.

वंशस्थम् । अत उपजातिः ॥

गअद्देसणं भइरवं व सङ्करं
सइरे सुहं च रइकामुअं विअ ।
रअहारिअं वइसिअं व वेसिअं
वसणोइअं कइदवं व अक्खअं ॥ ३१ ॥

छाया—

गतद्वेषणं (गजद्वेषणमिति च) भैरवमिव शङ्करं
सदा रे शुभं च (स्वैरे सुखमिति च) रतिकामुकमिव ।
रजोभारिकं[1] (रतभारिकमिति च) वैशिकमिव [2]वैषिकं
वसनोचित (व्यसनोचितमिति च)कैतवमिव [3]अक्षतम्* (अक्षजमिति च) ॥

गता नष्टाः द्वेषणाः शत्रवो यत्र स गतद्वेषणो घोषः । गजद्वेषणः गजरूपस्यासुरस्य द्वेषणः हन्ता । भैरवः शङ्करः । 'यो वा मन्दरवपुषं ममर्द मातङ्गवरममन्दरवपुषमि'ति युधिष्ठिरविजये । रे इति पादपूरणे । गवां निवासात् सदा शुभो मङ्गलो घोषः । स्वैरे स्वतन्त्रे यथेष्टचारिणि पुरुषे सुखः सुखकरो रतिकामुकः कामदेवः । चशब्दः वाक्यार्थं समुच्चिनोति । घोषं रजोभारिकं रजोभारयुक्तं तत्र सततं गवां प्रचारात् । 'गोरजश्छुरितकुन्तले'त्यादयः प्रयोगाः । वैषिकं वैशिकं वेषभवं वशीकरणसाधनं, तद्धि रतभारिकं भवति । वेष-

* 'छायान्तरम् —
गजद्वेषणं भैरवमिव शङ्करं स्वैरे सुखं च रतिकामुकमिव ।
रतभारिकं वैशिकमिव वैषिकं व्यसनोचितं कैतवमिवाक्षजम् ॥' ख.

१. 'भारिजं,' २. 'वेषिकं',
३. 'अक्षयं' घ.

विशेषयुक्तं लावण्यमित्यर्थः। रतभारिकं सम्भोगसम्पादकम्। वसनोचितं भगवन्निवासस्योचितं योग्यम् अक्षतं च इति घोषविशेषणम्। अक्षजं कैतवमिव अक्षाज्जातं कापट्यमिव। तद्धि युधिष्ठिरादीनामिव व्यसनाचितं व्यसनकालाभ्यस्यमानम्। वर्तमाने क्तः। 'यस्य नाम विलासोऽयं निषधे च युधिष्ठिरे। जागर्त्यद्याप्युपाख्यानैर्धीमान् कोऽत्रावसज्जते ॥' इत्यादिदर्शनात्। अत्र श्लोके भैरवादयः कैतवान्ताः चत्वारो दैत्यादयः प्रदर्शिताः। मञ्जुभाषिणीवृत्तम्। 'सजसा जगौ भवति मञ्जुभाषिणी' ॥

वइदेसजणाण अस्सअं
वइसम्पाअणवण्णणक्खमं।
दइवस्स अ दैव्वगोगणं[1]
वहमाणं समसिंधवे वसे[2] ॥ ३३ ॥

छाया— वैदेशजनानामाश्रयं
वैशम्पायनवर्णनक्षमम्।
दैवस्य च दैवगोगणं[3]
वहन्तं समसैन्धवान् वृषान्[4] ॥

विदेशभवाः वैदेशाः विदूरदेशादागताः तेषामाश्रयरहितानामाश्रयभूतः। अतिथिपूजोज्ज्वलमिति यावत्। वैशम्पायनवर्णनक्षमम् इति हरिवंशप्रवक्ता तेन घोषस्य वर्णितत्वादुक्तम्। दैवस्य च कृष्णस्य च दैवभूतः आदरविषयभूतो गोगणः यत्र घोषे। सैन्धवाः सिन्धुदेशभवाः अश्वाः, ते हि लोके प्रसिद्धाः। समास्तुल्याः सैन्धवा येषां वृषाणां तान् वृषान् वहन्तम्।

---

१. 'अणं' ङ. २. 'सहसीध' ख.
३. 'देवगो' ङ. ४. 'सहसै' ख.

वेदेशवैशम्पायनौ दैत्यादौ। "दैवे वा"(१।३७)इत्यनेन दैवशब्दे ऐकारस्य सविकल्पम् अइ इत्यक्षरद्वयादेशः, दइवस्स अ देव्वगोगणं। देव्वं इति "एत एत्" (१।३५) इत्यनेन। द्वित्वं तु सेवादित्वात्। "इत् सैन्धवे" (१।३८) इत्यनेन सैन्धवशब्दे ऐत इकारः समसिंधवे। "ए च सुपि-"(५।१२) इति शसि एत्वं, वसे। वैतालीयं वृत्तम्॥

मुणिधीरहारिमणिकंकणंचिअ-
प्फुरिअप्प[1]ओट्ठरमणिज्जगोपिअं।
[2]सेणवच्छरज्जुक्किणमिस्सभूसण-
च्छुरिअप्प[3]वट्ठणरजोव्वणोइअं॥ ३४॥

छाया— मुनिधैर्यहारिमणिकङ्कणाञ्चित-
स्फुरितप्रकोष्ठरमणीयगोपिकम्।
शणवत्सरज्जुकिणमिश्रभूषण-
च्छुरितप्रकोष्ठनरयौवनोचितम्॥

मुनीनामपि धैर्यं हरद्भिः मणिकङ्कणैरञ्चितैरत एव स्फुरितैः विलसितैः प्रकोष्ठैः उपेताभिः विशेषतो रमणीयाभिः गोपिकाभिरञ्चितम्। उपलक्षणं चैतत्। कुण्डलादिमण्डनमण्डलमण्डितगण्डाद्यवयवयुक्ताभिरित्यपि द्रष्टव्यम्। शणेति-शणैर्वत्सानां पाशैर्ये किणाः बलवद्भिर्गोवत्सैः इतस्ततः कर्षणवशात् सञ्जाताः, तैर्मिश्राणि मिळन्ति कनकवलयलक्षणानि भूषणानि यानि तैः छुरितप्रकोष्ठा भूषितप्रकोष्ठा ये नरास्तेषां यौवनस्य उचितं योग्यम्। एवम्भूतैर्यौवनयुक्तैर्गोपैरलङ्कृतमिति यावत्।

---

१. 'प्पखट्ट' क. ख. २. 'सणखच्छु' क. ख.
३. 'प्पखट्ट' क.

*'ई धैर्ये' (१।३९) इत्यनेन धैर्यशब्दे आदेरैत ईकारः धीर इति । "ओतोऽद्वा प्रकोष्ठे कस्य च वः" (१।४०) इत्यनेन प्रकोष्ठशब्दे ओकारस्य सविकल्पमकारः । तदानीं ककारस्य वत्वम् । ओत्पक्षे पओट्ठ इति । अन्यत्र पवट्ठ इति । "औत ओत्" (१।४१) अनेन आदेरौकारस्य सर्वत्र ओकारः । जोव्वण इति । मञ्जुभाषिणीवृत्तम् ॥

पउरविविहबाळकेळिरम्मं
कउरवराअपुरं व सुब्भअण्णं ।
पउरिसबहळं व सत्थगोपं
पउरववंसतरुं व पंडुपुप्फं ॥ ३५ ॥

छाया— प्रचुरविविधबालकेळिरम्यं
(पौरविविध इति च)
कौरवराजपुरमिव शुभ्रकन्यम् ।
(शुभ्रकर्णमिति च)
पौरुषबहळमिव शस्त्रगोपं
(शस्तगोपमिति च)
पौरववंशतरुमिव पाण्डुपुष्पम् ॥

कौरवराजस्य दुर्योधनस्य पुरमिव । तत् कीदृशम् । पौराणां पुरवासिनां विविधा नानाप्रकारा ये बालाः तेषां क्रीडाभी रम्यं मनोहरम् । घोषपक्षे तु सदा गोचरणादौ सम्भूय वर्तमानत्वात् प्रचुरा

* 'ईद् धैर्ये' इति मुद्रितपाठः ।

१. 'खः' क. ख. २. 'खत्वं' क. ख.
३. 'पखट्ठ' क. ख.

बहुत्वं प्राप्ता विविधा नानारूपाश्च ये बालाः तेषां क्रीडाभी रम्यमिति। कौरवराजपुरं शुभ्रकर्णं सहजकवचकुण्डलयुक्तत्वात् सदानमनस्कत्वाच्च कर्णस्य शुभ्रत्वं, शुभ्रः कर्णो यस्य। घोषपक्षे तु शुभ्रकन्यमिति शुभ्राः दुग्धमनोज्ञरूपाः कन्या यत्र तथा। पौरुषेण प्रतापेन बहळमपरिच्छेद्यं, यत् पुरमित्यर्थात् सिद्ध्यति। तत् शस्त्रगोपं भवति। शत्रुविजयादौ शस्त्राणां साधकतमत्वात् तानि शस्त्राणि गोपायतीति शस्त्रगोपम्। घोषपक्षे तु शस्तगोपमिति। शस्ताः प्रशस्ताः गोपाः पशुपा यत्रेति। पौरुषबहळत्वमुभयोः समानम्। पौरववंशतरुमिव पाण्डुपुष्पं, पुरोरयं पौरवः स एव वंशः पौरववंशः तत्स्वरूपः तरुरिव घोषः मकरध्वजादीपनस्यन्दमानमकरन्दलुब्धचञ्चळीकसुरभिबहळधवळकुसुमोपेतत्वात् तथोक्तः। वंशकाराख्यो(?) वृक्षविशेषः। स यथा पाण्डुपुष्पो भवति तथा पौरववंशः। तरुवत् स्थिरः पुरवंशोऽपि पाण्डुपुष्पः सुरभिमनोहररूपपुष्पसदृशेन पाण्डुना राज्ञा अलङ्कृत इत्यर्थः।

*"पौराकृतिष्वउ" (१.४२) इत्यनेन पौराकृतिषु पौरसदृशेषु शब्देषु आदरौकारस्य अउ इत्यक्षरद्वयं भवति। पउर, कउरव, पउरिस, पउरव। पुष्पिताग्रा ॥

सुंदेरसुंडणअणं व समत्थकामं
मुंजाअणाइरुइरं मुणिमंडलं व।
कुक्खेअअं व अहिआण सिरीण अन्तं†
१ण्णो दुवारिअजणं व पअं भअंतं ॥ ३६ ॥

---

* "पौरादिष्वउ" इति मुद्रितपाठः।

† इह गोइंदाहिसेए पाअडकव्वे सिरिकण्हलीलासुअमुणि विरइए सरकज्जविळसिअं णाम पढमो सग्गो। ङ.

---

१. 'आः मनोज्ञ' क.

छाया — सौन्दर्यशौण्डनयनमिव समस्तकामं
(समर्थकाममिति च)
मुञ्जायनादिरुचिरं मुनिमण्डलमिव ।
(मौञ्जायनादिरुचिरमिति च)
कौक्षेयकमिवाधिकानां श्रियामन्तं
(मिवाहितानामिति च)
राज्ञो दौवारिकजनमिव पदं भयान्तम् ॥
(प्रजृम्भमाणमिति च)*

सौन्दर्ये शौण्डं विदग्धं नयनं यस्य स तथा प्रकटितसौन्दर्य-नयनः पुरुष इव स्थितः घोषः । समस्तकामः काम्यन्त इति कामाः इष्टानि वस्तूनि समस्ताः कामा यत्र इति समस्तकामम् । पुरुषपक्षे तु समर्थः शक्तिस्थः कामो मनोभवः, नैव समस्तकामः । मुञ्जस्य तृण-विशेषस्य अयनमाश्रयो यो देशः । आदिशब्देन दर्भाद्ययनग्रहणं, तै रुचिरो घोषः । मौञ्जायनादिभिर्मुनिविशेषै रुचिरं मुनिमण्डलम् । अधिकानां श्रियाम् अन्तः अवसानभूतः घोषः । अन्यत्र कुत्राप्येवंवि-धायाः श्रियः अभावात् । कौक्षेयकोऽसिः । "कुलकुक्षिग्रीवाभ्यः श्वास्य-लङ्कारेषु (पा० सू० ४.२.९६)इति ढकञ् । कौक्षेयको ह्यहितानां श्रिया-मन्तः नाशकरः । भयान्तं भयस्यान्तं पदं स्थानं घोषम् । 'पदं व्यव-सितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इति सिंहः । राज्ञो दौवारिकः द्वारे नियुक्तो जनः प्रजृम्भमाणः तमिव । एवंविशेषणविशिष्टं घोषं प्राप्तो वसुदेवः ।

---

* 'प्रजृम्भकान्तामिति च । इति श्रीकृष्णलीलाशुकमुनिविरचिते गोविन्दा-भिषेके प्राकृतकाव्ये श्रीचिह्न- स्वरकाव्यविलासितं नाम प्रथमः सर्गः' । घ,

'गोविन्दाभिषेके प्रथमः सर्गः' । ङ.

*"उत् सौन्दर्यादिषु" (१।४४) इत्यनेन सौन्दर्यादिषु औकारस्य उकारः। सुन्देरसुंडं मुंजाअणं कुक्खेअअं दुवारिअ । वसन्ततिलका-वृत्तम् ॥

षडङ्गपद्यै रचितेऽत्र काव्ये
श्रीचिह्नसंज्ञे विवृतोऽयमाद्यः ।
सदृष्टि कात्यायनसूत्रलक्ष्यो
मुखे परिच्छेदवरे स सर्गः ॥

इति श्रीचिह्नकाव्ये प्रथमसर्गः
परिसमाप्तो विवृतश्च ।

---

* "आ च गौरवे" (१।४३) इति सूत्रं नोताहृतम् ।

१. 'रचितो' क. ख.

## अथ द्वितीयः सर्गः ।

नन्दघोषं गतो वसुदेव इत्यतीतसर्गे उक्तम् । स पुनः किं कृतवानित्याह—

इअ सअळजएसं मोअअं भीरुआणं
कअपअविउळाहं ळच्छिछाआइ जीअं ।
सुअमह वसुदेओ सत्थि काऊण णंदे
जउणमइगओ सो तस्स घेत्तूण कण्णं ॥ १ ॥

छाया—

इति सकलजगदीशं मोचकं भीरुजा[1]नां
कृतपदविपुलाभं लक्ष्मीच्छायाया जीवम् ।
सुतमथ वसुदेवः स्वस्ति कृत्वा नन्दे
यमुनामतिगतः स तस्य गृहीत्वा कन्याम् ॥

घोषवर्णनेन व्यवसितस्य[2] प्रमेयस्यानुसन्धानार्थमितिशब्दः । इति इत्थं यमुनां तीर्त्वा मधुरापुरीवद् विवृतकवाटं घोषं प्राप्य अथ अनन्तरं सकलजगतामीशं सकलजगतामीश्वरं, भियां रुजानां सकलोपद्रवाणां च मोचकं, भेददृष्ट्या दूरगतानामग्निशैत्यादिन्यायेनापाततो भयादिनिवर्तकम् अभेददृष्ट्या चात्यन्तान्तिकगतानां पुनर्जननादिपरिहारेण अशेषभयादीनामत्यन्तोच्छेदकं च । कृतपदा सङ्क्रान्ता विपुला आभा प्रभा यस्य तम् । छायावत् सदा सन्निहितत्वात् छाया,

१. 'जां' घ. ङ.    २. 'स्याप्रमे' क. ख.

लक्ष्मीरेव छाया लक्ष्मीच्छाया तस्या जीवमात्मानं श्रियः पतिमित्यर्थः। अनेन कुचेलादीनामिव सेवकानां सकलसम्पत्प्रदत्वं सूचितम्। उद्धवादेरिवाशेषानर्थनिवृत्तिनिरतिशयानन्दप्राप्तिहेतुभूतात्मविद्याप्रदत्वं च सूचितम्। 'आत्मविद्या च देवि! त्वम्' इति श्रिय एव आत्मविद्यात्वश्रवणात्। एवम्भूतं सुतं वसुदेवो यशोदायाः शयनन्यासद्वारा नन्दे कृत्वा। स्वस्तीति क्रियाविशेषणम्। तस्य नन्दस्य कन्यां मोहेन यशोदायाः स्वविषये स्त्रीपुंभेदबुद्धिम् अद्वैतज्ञाने सर्वस्त्रीपुरुषादिभेदबुद्धिमिवापनयन्तीं गृहीत्वा आदाय यमुनां पूर्ववत् स्थितामतीत्य अतिक्रम्य गतः। गत्वा च मधुरां प्राप्य तां कन्यावेषं बिभ्राणां पराशक्तिं देवकीशयने न्यस्तवानिति शेषः।

"अयुक्तस्यानादौ" (२।१) इदमधिकारसूत्रम्। पूर्वस्मिन् परिच्छेदे अचां क्रमेण कार्याण्युक्तानि। सम्प्रति स्वेन वान्येन वा योगरहितानामनादौ वर्तमानानां हलां कार्याण्युच्यन्त इत्यर्थः। अनादौ पदस्येति सिद्ध्यति। इतिशब्दस्य तकारात् परस्य इकारस्य "इतेस्तः —" (१।१४) इत्यत्वे तकारलोपे च सति इअ इति भवति। सकलजगदीशमिति स्थिते "कगचजतदपयवानां प्रायो लोपः" (२।२) इति कगयोर्बहुलं लोपे लस्य ळत्वे अन्त्यहल्लोपे "सन्धावचाम*-[1]ज्लोपे विशेषो बहुलम्" (४।१) इति विशेषरूपे गुणे "शषोः सः" (२।४३) इति सत्वे "अतोऽमः" (५।३) इत्यमोऽकारस्य च लोपे सअळजएसं इति भवति। मोचकशब्दस्याधिकारप्राप्तस्य चकारस्य लोपे पूर्ववत् कलोपे च मोअअं इति भवति। भीरुजानामिति स्थिते

* 'अज्लोपविशेषा बहुलं', 'अजूविशेषा बहुलं' इति च मुद्रितपाठः।

१. 'ग्लोपे' क. ख.

अधिकारप्राप्तजकारस्य च लोपे "टामोर्णः" (५।४) इति णकारे बिन्दुर्वेति योगविभागेन बिन्दौ कृते भीरुआणं इति भवति। "आमन्त्रणे बिन्दुर्वा" (५।३७) इत्यतो बिन्दुर्वेति योगविभागः। विभागस्य लिङ्गं "क्त्वासुपोस्तु सुणात्" इति त्रैविक्रमं सूत्रम्। तत्र तुशब्दो विकल्पार्थः। कृतपदविपुलाभामिति स्थिते "ऋतोऽत्" (१।२७) इति ऋकारस्य अत्वे अधिकारप्राप्तानां तदपानां लोपे "खघथधभां हः" (२।२८) इति भकारस्य हत्वे कअपअविउळाहं इति भवति। लक्ष्मीच्छायाया इति स्थिते योगविभागाल्लस्य ळत्वे "अधो मनयाम्" (३।२) इति मकारस्य लोपे, "अक्ष्यादिषु छः" (३।३०) इति क्षकारस्य छत्वे, अधिकारप्राप्तस्य यकारस्य प्रायोलोपे, "टाङस्ङीनामिदेददातः" (५।२२) इति ङसि इत्वे योगविभागाद् ह्रस्वे ळच्छिछाआइ इति भवति। जीवं इति स्थिते अधिकारप्राप्तस्य वकारस्य लोपे जीअं इति भवति। सुतमित्यत्र तकारलोपः सुअं। अथ इत्यत्र 'खघे'त्यादिना थकारस्य हकारः अह। वसुदेव इत्यत्र "‡अत ओ सौ" (५।१) इत्यकारस्य ओत्वम्। "अन्त्यहलः" (४।६) इति सकारलोपः। वसुदेओ इति भवति। स्वस्तीत्यत्र "सर्वत्र लवराणाम्" (३।३) इति वकारलोपः। 'स्तस्य थः' (३।१२) इति थकारः। आदेशथकारस्य द्वित्वं, सत्थि। कृत्वा "कृञः का भूतभविष्यतोश्च" (८।१७) इति कादेशः। "क्त्वस्तूण"(४।२३) इति तूणादेशः। तूणतकारस्य प्रायोलोपः, काऊण। नन्दे "नो णः" (२।४२) इति णत्वं, ङेरेत्वं, णंदे। यमुनामिति स्थिते "आदेर्यो जः" (२।३) इति यकारस्य जकारे "यमुनायां मस्य" (२।३) इति यमुनामकारस्य लोपः। नस्य णत्वे "अमि ह्रस्वः" (५।२१) इति स्त्रियामापो ह्रस्वे जउणं इति

---

१. 'न्त्रणे वा बिन्दुः' इति मुद्रितपाठः। २. 'गः। योगविभा' ख. ३. 'कका' क.

---

‡ 'अत ओत् सौ' इति मुद्रितपाठः।

भवति। अतिगतः पूर्ववत् तकारद्वयलोपः। अइगओ। सो इत्यत्र ओत्वमेव विशेषः। तस्य इत्यत्र तच्छब्दस्य "अन्त्यहलः" (४।६) इति दकारलोपे, "स्सो ङसः" (५।८) इति स्सकारे तस्स इति भवति। गृहीत्वा इत्यस्य "क्त्वस्तूण" इति तूणादेशे "घेत् क्त्वातुमुन्तव्येषु" (८।१६) इति ग्रहिधातोर्घेत् इत्यादेशे घेत्तूण इति भवति। कन्या णत्वे यलोपे द्वित्वे च कण्णं इति भवति। मालिनीवृत्तम्। 'स्वध्वनिप्रतिबोधं सा विद्विषामकरोत्तदा। कन्या भगवती दुर्गा स्वभक्तानां सतामिव ॥

णवरिअ महुराए णाअओ देवईए
 फळिहणिहसहासं कण्णअं हम्मिउं तं।
चळिअचिउरपुप्फं आअओ वज्झठाणं
 असिइ हसिअसोहा सीहरुच्चंदिमस्सम ॥ २ ॥

छाया—

अनन्तरं मधुराया नायको देवक्याः
 स्फटिकनिकषहा[2]सं कन्यकां हन्तुं ताम् ॥
चलितचिकुरपु[3]ष्पमागतो वध्यस्थानम्
 अशितिहसितशोभाशीकरोचन्द्रिकास्याम् ॥

णवरि अ अनन्तरं देवकीशयनन्यस्ताया बालाया ध्वनिश्रवणोत्थितगृहपालनिवेदनानन्तरं मधुराया नायकः कंसः देवक्यास्तां कन्याम्। कंसबुद्ध्यनुसारेणैवमुक्तम्। हन्तुमागतः। सूतिगृहमिति शेषः। निकषणान्निकषः। स्फटिकस्पर्धिहासो यथा भवति तथेति कंसस्यागमनक्रियाविशेषणम्।

---

१. 'पुक' इति क. ख. २. 'हासां' ख. ङ. ३. 'ष्पा' ख. ङ.

'सूतीगृहमगाच्छीघ्रं प्रस्खलन्मुक्तमूर्धजः' इति श्रीभागवते। अतश्चलितेत्याद्यपि क्रियाविशेषणम् । सम्भ्रमसञ्जातमूर्धजश्लथनकाले तद्गतपुष्पगळनमुपपद्यते । हासो गमनत्वरा च हिंसारुचित्वादित्यवगन्तव्यम् । ततः कन्यां पादयोर्गृहीत्वा वध्यस्थानशिलातलमागत इति अत्रापि सम्बद्ध्यते । तदानीं कंसेनावलम्बितार्धकायायाः कन्यायाः सविशेषो मुखविकास एव जात इत्याह अशितीति । अशिति धवलं निर्मलं यद्धसितं हासः तस्य ये शोभाशीकराः शोभाप्रसरविशेषाः तैः उच्चन्द्रिकमुद्भूतचान्द्रिकमास्यं यस्याः सा तथा । चन्द्रिकासान्निध्यादास्येन्दुरिति गम्यते । तेन युक्ता ।

"*स्फटिकनिकषचिकुरसीकरेषु को हः" (२।४) स्फटिकादिषु चतुर्षु ककारस्य हकारो विशेषविधिः । फलिह णिहस चिहुर सीहर । "चन्द्रि¶काया मः"(२।६)इत्यनेन चन्द्रिकाशब्दे ककारस्य च मकारो विशेषविधिः चंदिमं । "आनन्तर्ये $णवरिअ" (९।८) इति णवरिअ। मधुराया इति स्थिते धकारस्य हकारे "टाङसी"त्यादिना ङस एकारे महुराए इति भवति । नायकशब्दस्य नकारस्य णत्वे कस्य लोपे ओत्वे च णाअओ इति भवति। देवक्या इत्यस्य कलोपे एत्वे च देवईए इति भवति । स्फटिकनिकषहासः इति स्थिते "उपरि-"(३।९) इत्यादिना सकारलोपे "¶स्फटिके ळष्टः"(२।२२) इति टस्य ळत्वे अत्राधिकृतेन सूत्रेण कस्य हत्वे नस्य णत्वे निकषककारस्य च हत्वे षस्य सत्वे

* 'स्फटिकनिकषचिकुरेषु कस्य हः', 'शीकरे भः' (२।५) इति मुद्रितपाठः । ('स्फटिकनिकषचिकुरसीकरेषु को हः') Sarasvati Bhavana Edition

¶ 'कायां मः' इति मुद्रितपाठः

$ 'णवरि' Sarasvati Bhavana Edition

¶ 'स्फटिके लः' इति मुद्रितपाठः।

१. 'निकरेषु हः' क. ख. २. 'ण विभरिअ' क. ख.

फलिहणिहसहासं इति भवति। कन्यकाशब्दस्य "अधोमनयाम्"(३।२) इति यकारलोपे नस्य णत्वे लुप्तशेषत्वाद् द्वित्वे कलोपे "अमि ह्रस्वः" (५।२१) इत्यापो ह्रस्वे कण्णअं इति रूपं भवति। "हन्तेर्म्भः" (८।४५) इति हन्तिधातोस्तकारस्य मकारः मस्यादेशत्वाद् द्वित्वं ततः सेटि तुमुनि तकारस्य प्रायोलोपे हम्मिउं इति भवति। तामित्यस्य ह्रस्व एव विशेषः, त। चलिताचिकुरपुष्पमित्यत्र लस्य ळत्वे तलोपे ककारस्य हत्वे "ष्पस्य फः"(३।३५) इति ष्पस्य फत्वे आदेशत्वाद् द्वित्वे चळिअचिउरपुप्फं इति भवति। आगत इत्यत्र गकारतकारयोः प्रायोलोपे आअओ इति भवति। वध्यस्थानमिति स्थिते "ध्यह्योर्झः" (३।२८) इति ध्यशब्दस्य झत्वे आदेशत्वाद् द्वित्वे "ष्टस्य ठः" (३।१०) इत्यत्र ठ इति योगविभागेन स्थ इत्यस्य ठकारे नस्य णत्वे वज्झठाणं इति भवति। अशितिहसितशोभाशीकरोच्चन्द्रिकास्यामिति स्थिते "शषोस्सः" (२।४३) इति शकारत्रयस्य सत्वे तकारद्वयस्य लोपे भकारस्य हत्वे कस्य हत्वे "सर्वत्र लवराणाम्" (३।३) इति न्द्रि इत्यस्य रलोपे "चन्द्रिकाया मः" इति ककारस्य मत्वे यकारस्याधोलोपे सस्य द्वित्वे आपो ह्रस्वे असिइहासिअसोहासीहरुच्चन्दिमस्सं इति भवति। मालिनीवृत्तम् ॥

तेहिं तेहिं उदूहिं अइदरअदसुब्भाइ[2]दिं णिव्वुदीसं
ताए खं आअदाए [3]विवुद्दरदणसंभूमणासंजताए।
सोत्तं सग्गादु पुप्फं सुइदिकरहआसङ्किदो संवुदक्खो
ळज्जाए आवुदस्सो अविअअपाडिपत्ति त्ति मूढो हु कंसो॥

† 'र्म' मुद्रितपाठः

१. 'हत्वे' क. ख. २. 'इदी' क. ख.
३. 'विविद' क. ख. ४. 'हर' ङ.

छाया—

तैस्तैर्ऋतुभिरहतरजतशुभ्राकृतिं निर्वृतीशां
तस्यां खमागतायां विवृतरत्नसम्भूषणासंयतायाम् ।
मुक्तं स्वर्गात् पुष्पं सुकृतिकररुकसत्कृतः संवृताक्षो
लज्जया आवृतास्योऽविजयप्रतिपत्तिरिति मूढो हु कंसः ॥

तैस्तैः ऋतुभिः सेवार्थमागतैः सर्वैः ऋतुभिः उपलक्षिताम् । अहतेति– अहता अनभिभूतरजतवत् शुभ्रा शुभ्रा आकृतिः आक्रियते इत्याकृतिः शोभामुपगता कान्तिर्यस्याः । 'शुक्लशुभ्रशुचिश्वेतविशद-श्येतपाण्डराः' इति सिंहः । कोपयोग्येऽपि कंसे देव्याः सत्त्वोत्तरत्वात् कोपाभावेन मुखस्य वर्णातिकरानभिभव इति द्रष्टव्यम् । 'मच्छवीसदृशा कृष्णा सङ्कर्षणसमानना' इति श्रीहरिवंशे कृष्णत्वेनावतरिष्यतो भगवतो देवीं प्रति वचनात् । मुखे रजतशुभ्राकृतित्वमुक्तम् । निर्वृतिर्मोक्षः तस्येशां मोक्षानुग्रहसमर्थाम् । एतानि विशेषणानि पूर्वश्लोके योजनीयानि । विवृतेति– विवृतैः प्रकटस्वरूपैः रत्नसम्भूषणैः रत्नमयैः सम्भूषणैः विशिष्टभूषणैः नूपुरकटककुण्डलादिभिः असंयतायामुद्वेलायां बहळाभिः प्रभाभिः आश्चर्यभूतायां तस्यां खमागतायां शिलापृष्ठे पोथयितुमुद्यमं कुर्वतः कंसस्य हस्तादिति शेषः । स्वर्गात् पुष्पं मुक्तं प्रहर्षपरवशैर्देवैः पुष्पवृष्टिः कृताभूत् । अथ भग्नमनोरथस्य कंसस्योदन्तमाह– सुकृतीति । शोभना कृतिर्व्यापारो यस्याः सा भगवती सुकृतिः तया कररुकसत्कृतः करयोः पीडनात्मकसत्कारेण सत्कृतः । उत्पतनकाले तया सम्पीडितकर इत्यर्थः । अत्यन्तबालया कन्यया स्वस्य विक्रमभङ्गो जात इति लज्जया संवृताक्षः निमी-

१. 'शं' घ. ङ. २. 'तस्याः' ङ.
३. 'हर' घ. ङ. ४. 'अनादिभूता रजत' क. ख.
५. 'वर्णानतिकरानभिभव' क.

लितनयनः। तथावृतास्यः आवाङ्मुख इत्यतो हेतोः अविजये प्रतिपत्तिः यस्य स तथा। 'प्रतिपत्तिस्तु गौरवे प्राप्तौ प्रवृत्तौ प्रागल्भ्ये प्रतिभाज्ञानयोरपि' इति केशवः। एवम्भूतः कंसः मूढः। हु निश्चये। एवं पराक्रमशालिन्यां तस्यां प्राकृतबुद्धित्वान्मूढत्वं कंसस्य निश्चितमित्यर्थः।

"ऋत्वादिषु तो दः" (२।७) इत्यनेन ऋत्वादिषु तकारस्य दकारः। *ऋतुहतरजताकृतिनिर्वृत्यागतविवृतरत्नसंयुतसुकृतिसत्कृतसंवृतावृतशब्दा ऋत्वादयः। तच्छब्दाद् भिसि "भिसो हिं" (५।५) इति हिरादेशः। पूर्ववद् बिन्दुः। अन्त्यहलो लोपः। "[1] एचः सुपि" (५।१२) इत्येत्वं तेहिं। वीप्सायां द्विरुक्तिः। "उदृत्वादिषु" (१।२९) इति ऋकारस्य उकारः। ऋत्वादित्वाद् दकारः, पूर्ववद् भिसो हिः बिन्दुश्च, "सुभिस्सुप्सु दीर्घः" (५।१८) इति दीर्घः उदूहिं। अहतरजतशुभ्राकृतिं तकारत्रयस्य ऋत्वादित्वाद् दकारः जलोपः शस्य सः रलोपः भस्य द्वित्वम्। "इदृष्यादिषु" (१।२८) इति इत्वं अहदरअदसुब्भाकिदिं। निर्वृतीशां नस्य णत्वे शेषत्वाद् वकारस्य द्वित्वं। "उदृत्वादिषु" इति ऋकारस्य उत्वम्। शकारस्य सकारः ह्रस्वः णिव्वुदीसं। तच्छब्दात् 'टाङसी'त्यादिना ङेरेत्वे टापि ताए इति भवति। खं। आगतशब्दस्य गलोपे तकारस्य ऋत्वादित्वाद् दकारे टापि एत्वे आअदाए इति भवति। विवृतरत्नसम्भूषणासंयतायां इत्यस्य "उदृत्वादिषु" इति ऋकारस्योत्वे तकारस्य ऋत्वादित्वाद् दत्वे "क्लिष्टश्लिष्टक्रियारत्नशार्ङ्गेषु तत्स्वरता पूर्वस्य" (३।६०) इति

* 'ऋतुरजतागतनिर्वृत्याव्रृतिसंवृतिसुकृत्याकृतिहतसंयतविवृतसंयातसम्प्रतिप्रतिपत्तयः' इति मुद्रितपाठः।

† 'रवत् पू' मुद्रितपाठः।

१. 'एतः' क. ख.

रत्नशब्दस्य विकर्षे पूर्वस्य तत्स्वरत्वे च सति नस्य णत्वे पस्य सत्वे "आदेर्यो जः" (२।३१) इति यस्य जत्वे तकारस्य ऋत्वादित्वादुकारे टापि ङेरेत्वे विबुदरदणसंभूसणासंजदाए इति भवति । मुक्तशब्दस्य "उत ओ तुण्डरूपेषु" (१।२०) इत्यत ओत्वे "उपरिलोपः कगडतदपषसाम्" (३।१) इति कलोपे लुसेशषत्वात् तकारस्य द्वित्वे मोत्तं इति भवति । स्वर्गशब्दस्य "सर्वत्र लवराणाम्" (३।३) इति वकाररेफयोः लोपे गकारस्य द्वित्वे "ङसेरादोदुहयः" (५।६) इति दुत्वे "§जस्ङस्यांसु दीर्घः" (५।११) इति दीर्घे सग्गादु इति भवति । ष्पस्य फादेशे द्वित्वे च पुप्फमिति भवति । सुकृतिकररुचसत्कृतः "इदृष्यादिषु" (१।२८) इति ऋकारस्येत्वे ऋत्वादित्वात् तकारस्य दत्वे "स्त्रियामात्" (४।७) इति[1] रुग्त्यस्योपर्यकारे जलोपे सत्कृत इत्यस्योपरितलोपे द्वित्वे ऋकारस्येत्वे तकारस्य दत्वे सुकिदिकररुआसकिदो[2] इति भवति । [3]संवृताक्षशब्दस्य ऋकारस्य उत्वे तकारस्य दत्वे "स्कष्कक्षां खः" (३।२९) इति क्षकारस्य खत्वे [4]संवुदक्खो इति भवति । लज्जाशब्दस्य लकारस्य ळकारः टा इत्यस्य एत्वं ळज्जाए । आवृतास्य इति स्थिते ऋकारस्योत्वं तकारस्य दकारः यकारलोपः सकारस्य द्वित्वं आवुदस्सो । अविजयप्रतिपत्तिः जकारलोपः रलोपः "* प्रतिवेतसपताकासु डः" (२।८) इति डकारः । "पो वः" (२।१५) इति पकारस्य वकारः । अविअअपडिवत्तित्ति इत्यत्र "सन्धावचामज्लोपविशेषा बहुलम्" (४।१) इतीकारस्य लोपः तकारस्य द्वित्वं च । मूढशब्दस्य ओत्वमेव विशेषः ।

---

§. 'जश्शस्ङस्यांसु-' इति मुद्रितपाठः ।

* 'प्रतिसरवेतसपताकासु-' इति मुद्रितपाठः ।

‡ 'ज्लोपविशेषा' इति मुद्रितपाठः ।

---

१. 'इति इत्यस्योप' क. ख. २. 'सुइदि' इति मूलश्लोकपाठः ।
३. 'आवृताक्ष' क. ख. ४. 'आवु' क. ख. ५. 'दस्व' क. ख.

"[१] हुल्ट् निश्चयवितर्कसम्भावनासु" (९।६) इति हुशब्दो निश्चयार्थे कंसशब्देऽपि ओत्वमेव विशेषः। स्रग्धरा वृत्तम्।

तस्याः प्रवृत्तिमाह —

पाडिवण्णवई सुहासवज्जं
सरिआवेडिसणम्मसक्कदिण्णं।
भुवणाण सिरीअ सप्पडाआ
वसही सब्भरहज्जगब्भिणे [१]खे ॥४॥

छाया—

प्रतिपन्नवती सुधासपर्यां
सरिद्वेतसनम्रशक्रदत्ताम्।
भुवनानां श्रियः सत्पताका
वसतिः स्वर्भरतज्ञगर्भिते खे ॥

कंसकरानिर्मुक्ता मुक्तामणिनिकराद्यलङ्कृता स्वर्गसुरूपुष्पोज्ज्वला अष्टकरधृताष्टायुधा दिव्याम्बरा अम्बरे वर्तमाना बालकन्यकारूपा प्रतिपन्नवती। सुधासपर्यां सुधाप्रधानां सपर्यां पूजाम्। केन दत्ताम्। सरिद्वेतसवद् नम्रेण नमनशीलेन शक्रेण दत्तां कृतामिति यावत्। पुनः कथम्भूताम्। भुवनानां सत्पताका श्रियो वसतिः। सत्पताकेत्यत्रोपपत्तिमाह– खे इति। पताकापि खे वर्तते हेमाद्यलङ्कृता च सुकुमारा च। श्रीप्रतिकृतिरूपाया मुद्राया वसतिश्च भवति। कीदृशे खे।

---

१ 'हुं खु' इति मुद्रितपाठः।

---

१. 'रुवे' क. ख.

स्वर्भरतज्ञगर्भिते स्वर्गे ये भरताः नृत्तकुशलाः गन्धर्वादयः यश्च ज्ञो बुधः। ज्ञपदमन्येषामपि ग्रहनक्षत्राणामुपलक्षणम् । तैर्गर्भिते निरन्तरनिविष्टत्वाद् निरवकाशीकृते ।

"प्रतिवेतसपताकासु डः" इत्यनेन प्रत्यादिषु त्रिषु पदेषु तकारस्य डकारः। पडिवण्ण वेडिस पडाआ। "वसतिभरतयोर्हः" (२।९) इत्यनेन तयोस्तकारस्य हकारः। "गर्भिते णः" (२।१०) इत्यनेन गर्भितशब्दे तकारस्य णकारः गब्भिणे। औपच्छन्दसिकं वृत्तम्। 'पर्यन्ते यौ तथैव शेषमौपच्छन्दसिकं सुधीभिरुक्तम्' इति हि वृत्तरत्नाकरे ॥

विपळित्तकळम्बदोहळ-[2]
स्ससिआ सा अ अगग्गरस्सणं ।
अह बारहसुज्जभासुरा
उवसंसीअ अ कंसमम्बिआ ॥५॥

छाया—

विप्रदीप्तकदम्बदोहद-
श्वसिता सा चागद्गदस्वनम् ।
अथ द्वादशसूर्यभासुरा
उपाशंसच्च[3] कंसमम्बिका ॥

अथ सा अम्बिका कंसमगद्गदस्वनमुपाशंसच्च जगाद च अगद्गदस्वनमिति क्रियाविशेषणम् । [4]अगद्भस्वरमित्यर्थः । कथ-

१. 'णः' इत्यनेन गर्भित' क. २. 'हळं ससि' क.
३. 'उपाशंस च' ख. ङ. ४. 'प्रगतस्वर' क. ख.

म्भूता। विप्रदीप्तकदम्बदौहृदश्वसिता विप्रदीप्तस्य कुसुमोज्ज्वलस्य कदम्बस्य दौहृदमिच्छा तद्वत् सुरभीभवितुमाशा यस्मिन् श्वसिते तादृशं श्वसितं यस्याः, व्यधिकरणो बहुव्रीहिः। द्वादशसूर्यभासुरा बहुसूर्यसङ्घवद् भासनशीला प्रभापटलदुर्निरीक्ष्येत्यर्थः।

"¶ प्रदीप्तकदम्ब*दौहृदेषु दो ळः" (२।१२) इत्यनेन त्रिष्वेतेषु शब्देषु दकारस्य ळकारः विपाळित्तकळम्बदोहळं। "गद्गदे रः" (२।१३) इत्यनेन गद्गदशब्दे दकारस्य रफादेशः अगग्गर। "संख्या§यां च" (२।१४) इत्यनेन संख्यायां वर्तमानस्य दकारस्य रेफादेशः बारह। "उपरिलोपः कगडतदपषसाम्" (३।१) इति दकारलोपः। "पो वः" (२।१५) इत्यनेनानादेः पकारस्य वकारः उवसंसीअ अ। वैताळीयं वृत्तम्॥

उक्तिप्रकारमाह—

आमेळरम्मं महुरुत्तरिज्जं
  वरुत्तरीआ रमणिज्जभूसा।
तुमं सुरामा रमणीअराअं
  सग्गम्मि सच्चं उवठाअहिंति ॥९॥

छाया—

आपीडरम्यं मधुरोत्तरीयं
  वरोत्तरीया रमणीयभूषा।

¶ "ऐरावते च" (२।११) इतीदं सूत्रं नोदाहृतम्।
* 'दोहदेषु दो लः' मुद्रितपाठः।
§ 'याश्च' मुद्रितपाठः।

१. 'म्बदोहदश्च' क. ख.

त्वां सुरामा रमणीयरागं
स्वर्गे सत्यमुपस्थास्यन्ति ॥

स्वर्गे सुरामाः स्वर्गस्त्रियः त्वां रमणीयरागमुपस्थास्यन्ति सेवि-ष्यन्ते[1]। रमणीयरागमिति क्रियाविशेषणम्। तव शीघ्रं विशिष्टात् पुरुषान्मरणं भावीत्यर्थः। कीदृशमित्याह– स्वर्गानुभवसमयोचितेन आपीडेनालङ्कारेण रम्यं मनोहरं तथा मधुरमुत्तरीयं यस्य। कीदृश्यः[2] पुनस्ताः। वरोत्तरीयाः तथा रमणीयभूषाः। मत्पादस्पर्शनाद् विगत-कल्मषस्य तव मृतस्यापि सुखविच्छेदो मा भूदिति तात्पर्यार्थः। सत्यमित्यनेन मरणस्यापरिहरणीयत्वं द्योत्यते।

"आपीडे मः" (२।६६) इत्यनेन आपीडशब्दे पकारस्य मकारः आमेळ। "एत्पीडापीडदृशकीदृशेषु" (१।१९) इत्येत्वं[3] "डस्य च"(२।२३) इति डकारस्य ळकारः। "उत्तरीयानीययोर्यो *ज्जो वा"(२।१७) इत्यनेन तयोर्यकारस्य विकल्पेन ज्जकारः[4] उत्तरिज्जं, उत्तरीअं। रमणिज्जं, रमणीअं। उवठाअहिंति उपपूर्वात् तिष्ठते-र्धातोः "ष्ठाध्यागाना-"(८।२५) इत्यादिना ठाअ आदेशः ठाअहिंति[5]। उपजातिवृत्तम् ॥

---

* 'जो वा' क. ख.

---

१. 'स्यन्ते' ख.
२. 'कीदृशाः' ख.
३. 'इत्येत्वं तस्यादेशत्वाद् द्वित्वं च डस्य च इति डकारस्य ळकारः' क. ख.
४. 'जकारः' क. ख.
५. 'ष्ठाध्यागा-' इत्यादिना ठायादेशः' क. ख.

उरुदनुअकअंधे घोडआणं सढंते
रहसअढसमिद्धे तारआजोहणे जो ।
कइढवमुहवेरी ते वि दिट्ठो हु पुव्वं
फळिहसुइजसो सो कीळए णंदघोसे ॥ ७ ॥

छाया —

उरुदनुजकबन्धे घोटकानां सटान्ते
रथशकटसमृद्धे तारकायोधने यः ।
कैटभमुखवैरी त्वयापि दृष्टो हु पूर्वं
स्फटिकशुचियशाः स क्रीडति नन्दघोषे ॥

सः कैटभमुखवैरी नन्दघोषे क्रीडति । दुष्टनिग्रहात् शिष्टपरिपालनात् स्फटिकवत् सदा शुचि निर्मलं यशो यस्य । यः पूर्वं[1] तारकायोधने तारकामययुद्धे त्वया दृष्टः । हु निश्चये । तदानीं कालनेमिरूपिणः तव तद्दर्शनफलं[2] मरणं जातमित्यर्थः । तारां नाम बृहस्पतिभार्यां चन्द्रो जहार । तदनन्तरं बृहस्पतिपक्षैर्देवैश्चन्द्रपक्षैरसुरैश्च महद् युद्धमासीत् । तत्तारकामयम् । 'पूर्वदेवभयं श्रुत्वा मारुताग्निकृतं[3] महत् । कालनेमिरिति ख्यातो दानवः प्रत्यदृश्यत' ॥ इत्युपक्रम्य शक्रादीन् जित्वा त्रैलोक्यं स्ववशे स्थापयामास इति सप्रपञ्चमुक्त्वा, 'वैष्णवं पदमन्विच्छन् ययौ नारायणान्तिकम्' इत्यादिना तस्य विष्णूपसर्पणं भगवन्तं प्रति तस्य परुषभाषणं भगवति[4] आयुधप्रयोगवैफल्यं तद्गदाताडितस्य

1. 'खु' ङ.
2. 'फलस्मरणं जात' ख.
3. 'मारुतोऽग्निभवं' क. ख.
4. 'वता युद्धप्रयोग' ख.

गरुडस्य व्यथां दृष्ट्वा युद्धोन्मुखस्य भगवतः शताननहस्तादियुक्तं तमसुरं दृष्ट्वा स्वदेहमपि तद्देहादतिशयेन वर्धयित्वावस्थानं चाभिधाय, 'चिच्छेद बाहूंश्चक्रेण श्रीधरः कालनेमिनः ।' इत्यादिना तद्वधप्रकारं चोक्त्वा, 'स तस्य देहो विमुखो विबाहुश्चोद्गिरन्नसृक् । निपपात दिवं त्यक्त्वा क्षोदयन् धरणीतलम् ॥ इति श्रीहरिवंशे तारकामययुद्धान्ते कालनेमिवध उक्तः । कीदृश आयोधने । उरुभिः दनुजकबन्धैर्युक्ते । 'कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकळेवरम्' इति सिंहः । घोटका अश्वाः । 'घोटको हेषितुरगतुरङ्गाश्च तुरङ्गमाः' इति च । तेषां सटाः स्कन्धरोमाणि तेषामन्तो यस्मिन् । अत्र सटाशब्देन तदाश्रयभूताः स्कन्धा लक्ष्यन्ते । मञ्चाः क्रोशन्तीत्यादिवल्लक्षणा ।

"*कबन्धे यः" (२।१९) इत्यादिना कबन्धशब्दे अनादौ वर्तमानस्य बकारस्य बवयोरविशेष इति न्यायाद् यकारः कअंधे । '[2]टो डः' (२।२०) इत्यनेन टकारस्य [3]डकारः घोडआणं । [4]सढंते-"सटाशकटकैटभेषु ढः" (२।२१) इत्यनेन टकारस्य ढकारः । सढंते सअढः कइढन "स्फटिके ळः" (२।२२) इत्यनेन स्फटिकशब्दे टकारस्य [5]ळकारः, स्फटिकादिना कस्य हः फलिह । "डस्य च"(२।२३) इत्यनेन डकारस्य विकल्पेन ळकारः। कीळए । तदभावे णिबिडडाडिमामित्युत्तरश्लोके । मालिनीवृत्तम् ॥

---

* 'कबन्धे बो मः' मुद्रितपाठः ।

---

१. 'हातिश' ख.
२. 'टो डः' क. ख.
३. 'ढकारः'
४. 'सढंते सअढकइढव स्फटिके' क. ख.
५. 'ळकारः फलिह' क. ख.

तो गआ णिबिडडाडिमं सठं-
कोळ्ळअं सभळसाहिसंकुळं ।
मेहपाहमहुसोहणं वणं
देवआण विहरेउमंबिआ ॥ ८ ॥

छाया—

ततो गता निबिडडाडिमं शठा-
ङ्कोठकं सफलशाखिसङ्कुलम् ।
मेघपाथोमधुशोभनं वनं
देवतानां विहर्तुमम्बिका ॥

ततो देवतानां देवानां वनं नन्दनं विहर्तुं गता । निबिडडाडिमं प्रभूतडाडिमम् । शठाङ्कोठकं कठिनाङ्कोठकम् । डाडिमाङ्कोठकौ वृक्षविशेषौ । सफलशाखिसङ्कुलं सफलैः नित्ययुक्तफलैः शाखिभिरन्यैरपि कल्पद्रुमादिभिः सङ्कुलं व्याप्तम् । मेघानां पाथो वर्षजलमस्मिन्निति मेघपाथःशब्देन वर्षर्तुर्लक्ष्यते । मधुर्वसन्तः तदुपलक्षितैः सर्वैरपि ऋतुभिः शोभनम् । अनेन विहरणसौख्यमुक्तम् ।

"ठो ढः" (२।२४) इत्यनेन ठकारस्य ढकारः सढ । "अंकोठे-ल्लः" (२।२५) इत्यनेन अङ्कोठशब्दे ठकारस्य द्वित्वेन लकारः । तस्य ळकारः अङ्कोल्लअं । "फो भः" (२।२६) इत्यनेन फकारस्य भकारः सभळं । "खघथधभां हः" (२।२७) इत्यनेन खादीनां पञ्चानां बहुळं हकारः साहि मेह पाह महु सोहणं । हकाराभाव उत्तरश्लोके दर्शयिष्यते । रथोद्धता वृत्तम् ॥

अथ भगवतीवचनं श्रुतवतः कंसस्य श्मशानवैराग्यवद् याहच्छिक उपशमो जात इत्याह—

णवर पखळचित्तो देवइं संतपुव्वं
पळअघणणिणाओ पुण्णपाथअहीणो।
तवसधणजणारी किंबि वोत्तूण कंसो
रुइरणिअसभाए मंतिणा संगदो[2] अ॥ १॥

छाया—

[3]केवलं प्रखलचित्तो देवकीं सान्त्वपूर्वं
प्रळयघननिनादः पुण्यपाथेयहीनः।
[4]तपस्साधनजनारिः किमप्युक्त्वा कंसो
[5]रुचिरनिजसभायां [6]मन्त्रिणा सङ्गतश्च॥

कंसो देवकीं सान्त्वपूर्वं किमप्युक्त्वा रुचिरायां निजसभायां मन्त्रिणा प्रलम्बेन तदुपलक्षितैर्बकादिभिरन्यैश्च दुर्मन्त्रिभिः सङ्गतश्च अभूदिति शेषः। मन्त्रार्थमिति सिद्ध्यति। सपादप्रणामं देवप्रेरितेनैव [7]मया त्वय्युपकारः कृतः। अतः क्षन्तव्यं भवत्येत्याद्युक्त्वेत्यर्थः। किमपीत्यनेन तस्य तद् वचनं निष्फलमिति द्योतितम्। ब्राह्मणादिहिंसापरेण दुर्मन्त्रिवर्गेण सह सङ्गत इति त्वत्र विधेयम्। तत्सङ्गतेः फलिष्यमाणत्वात्। आगन्तुक उपशमः दुर्वृत्तत्वं तु सहजमस्येत्युक्तं भवति। अस्य तदेव स्फोरयन् चतुर्भिर्विशेषणैस्तं विशिनष्टि—णवरेति। केवलं प्रकर्षेण खलचित्तः। प्रळयेति सज्जनभीतिकरः स्वन इत्यर्थः। आभ्यां

---

१. 'पाहेअ' क. ख. ङ.  २. 'संगओ' ङ.
३. 'णवरप्रखल' क. ख.  ४. 'तपस्सधन' घ
५. 'रुचित' घ.  ६. 'मन्त्रणाम्' घ.  ७. 'माया' घ.

विशेषणाभ्यां मानसं वाचिकं च पापमुक्तम्। तपस्साधनाः तपोधनाः तेषां जनानामरिः। अनेन कायिकं पापमुक्तम्। पुण्येति पुण्यस्य परलोकभोगसाधनत्वात् पाथेयत्वं प्रसिद्धं, तेन हीनः वाङ्मनःकायानां सदा पापप्रवृत्तत्वात् ॥

प्रखल, घण, पाथेअ, सधण, सभाए इति खादीनां हकाराभावपक्षः। मालिनीवृत्तम् ॥

सभां प्राप्य तैः सङ्गत्य कृतमन्त्रस्य कंसस्योदन्तमाह—

पढममसिथिलो वि दाणविंदो
निसढपइव्व कळिप्पआरभीओ।
कअवअभरणो वईअ ताए
जणमणुसासिअकेढवस्स णासे ॥ १० ॥

छाया —

प्रथममशिथिलोऽपि दानवेन्द्रो
निषधपतिरिव कलिप्रचारभीतः।
कृतवचःस्मरण उवाच तस्या
जनमनुशिष्टकैटभस्य नाशे ॥

प्रथमं कन्यकावचनश्रवणात् प्राग् अशिथिलोऽपि शैथिल्यमप्राप्तोऽपि पश्चाद् दानवेन्द्रः कलिप्रचारभीतोऽभूत्। कलिः कलहः युद्धं तस्य प्रचारः प्राप्तिः विष्णुना सह युद्धप्राप्तेर्भीतः। तत्र हेतुगर्भं विशेषणं कृतवचःस्मरण इति। कृतस्यानुष्ठितस्य मरणरूपफलपर्यन्तस्य पूर्वजन्मसिद्धस्य कैटभमुखवैरिदर्शनस्य वचः वचनं कृतवचः तेन यत् स्मरणं

१. 'पाहेअ' क. ख. 'पूर्वं शैथि' ख.

कालनेमिरहं तारकामये युद्धे तेनाक्षताङ्गेन विष्णुना मारित इति तद्
यस्य स तथोक्तः । किंकर्तृकं तद् वचनमित्याह– तस्याः कन्यकायाः
कृतवचःस्मरण इति योजनीयम् । एवम्भूतः स दानवेन्द्रः कालनेमिः
अहं देहान्तरं प्राप्त इत्यभिमानी कंसः । अनुशिष्टकैटभस्यानुशिष्टः
मारितः कैटभो येन स तथा । तस्य विष्णोर्नाशे विषये नाशं कर्तुं जनं
पूतनादिकमिति सिद्ध्यति। उवाच मम शत्रुर्नन्दघोषे वर्तते । स व्याधि-
रिव रूढपदो यावन्न भवेत् तावन्निगृह्यतामिति नियुक्तवानित्यर्थः ।
निषधपतिरिव निषधपतिर्नलः पूर्वं यथावद् राज्यपरिपालनादि दम-
यन्त्या सह कुर्वन् स्थितः । पश्चात् कलिप्रचारेण कलेः स्वस्य मनसि
प्रचारेण सञ्चरणेन भीतः इत्यनेनातीव सङ्कटं प्राप्त इत्युच्यते । किं
निमित्तीकृत्य कल्यावेशेन नलस्य दीनदशा प्राप्तेत्याह– कृतेनातीव सङ्कटं
प्राप्त इति । कृतमिति वचः शब्दो लाक्षणिको यस्य तत् कृतवचो द्यूतं[1]
तस्य द्यूतस्य स्मरणं यस्य नलस्य स तथा । स्मरणपूर्वत्वात् करणस्य
स्मरणेन करणमत्र विवक्ष्यते द्यूतदेवनं निमित्तीकृत्य नलस्य कलिनोप-
द्रवः सञ्जात इत्यर्थः । एवमुक्तप्रकारेण उक्तविशेषणत्रयस्य नलेऽपि
सम्भवात् नल इव [2]कंसः तथापि नलः पुण्यशीलः कंसः पापशील इति
तयोर्विशेषाद् विरोधध्वनिः ।

"प्रथमशिथिलनिषधेषु ढः" (२।२८) इत्यनेन प्रथमशिथि-
लयोः धकारस्य निषधधकारस्य च ढकारः । पढम सिढिल निसढ ।
"कैटभे वः" (२।२९) इत्यनेन कैटभशब्दे भकारस्य वकारः । "दैवे
वा" (१।३७) इत्यस्मिन् सूत्रे कैटभशब्दोऽप्यूह्यः । पुष्पिताग्रावृत्तम् ॥

अत्र कंसनियुक्तायाः पूतनायाः प्रवृत्तिमाह—

१. 'द्यूतं श्रुतेरैक्यवचस्त्वेवमुपलम्भात्' क. ख.
२. 'कंसः । नलः' क.

पत्ता हळद्दिचळणा मुहळा चिळाअ-
जोसव्व मोत्तकळुणा फळिहंगुळीआ ।
इंगाळदिट्ठिजुअळा फळिहाहकुच्छी
सोमाळसीममह पूअणिआ सिरीसं ॥ ११ ॥

छाया —

प्राप्ता हरिद्राचरणा मुखरा किरात-
योषेव मुक्तकरुणा परिघाङ्गुलीका ।
अङ्गारदृष्टियुगला परिखाभकुक्षिः
सौकुमार्यसीमानमथ पूतनिका श्रीशम् ॥

शकुनिवेषधारिणी पूतना अर्धरात्रसमये शकटाक्षे निलीय स्थिता जनेषु सर्वेषु सुप्तेषु कृष्णाय स्तनं ददौ इति श्रीहरिवंशानुसारेणात्रोच्यते । अथ पूतनिका श्रीशं प्राप्ता । हरिद्राचरणा हरिद्रावत् पीतपादा । मुखरा सन्ध्यासमय एव नन्दघोषं प्राप्य वृक्षेषु स्थिता श्रवणपरुषं अमङ्गलेन स्वरेण शब्दायमाना किरातयोषेव मुक्तकरुणा दयारहिता । परिघवद् वृत्तदीर्घाङ्गुलयो यस्याः । अङ्गारेति– अङ्गारवत् सङ्गतपिङ्गत्वं मङ्गलेतराकारं दृष्टियुगलं यस्याः । परिखेति– परितः खन्यत इति परिखा तद्वान्निम्नतरा कदाचिदप्यपूर्णा कुक्षिः यस्याः सा । सौकुमार्यसीमानमित्यनेन तस्या मुक्तकरुणत्वं श्रीशस्य सर्वातिशायित्वादिव ध्वन्यते ।

"हरिद्रादीनां रो ळः" (२।३०) इत्यनेन हरिद्रादिषु रेफस्य ळकारः । हरिद्राचरणमुखरकिरातकरुणापरिघाङ्गारपरिखासौकुमार्य-

---

१. 'द्रच' ङ.  २. 'खाघकु' क. ख. ङ.
३. 'पूतना श्री' क. ख.

कारणयुधिष्ठिरशब्दा नियतळादेशा हरिद्रादयः। तेषु कारणयुधिष्ठिर-वर्जम् अत्र श्लोके दर्शिताः। पूर्वस्मिन् सर्गे सौकुमार्यशब्दस्य "औत ओत्"(१।४१) इत्योत्वे ककारस्य प्रायोलोपे मकुटादित्वादुकारस्यात्वे[1] रेफळकारस्यादेशप्राप्तस्य "शेषादेशयोर्द्वित्वम्"-(३।५०)इत्यनेन द्वित्वे द्वित्वयोगान्मकारस्य ह्रस्वे "अधो मनयाम्"(३।२) इति यकारलोपे च सोयमल्ल इति रूपम्। अत्र तु आदेशप्राप्तस्याकारस्य "सन्धावचामज्लोपविशेषा बहुळम्" (४।१) इत्यनेन रेफस्य द्वित्वाभावात् तदादेशस्य ळकारस्य च द्वित्वाभावे सोमाळेति रूपं भवति। वसन्ततिलकावृत्तम् ॥

गळुळद्धअस्स मळणस्स काळणा
सविसं थणं गरुडवाहणस्स अ।
मरणं गआ अ दिसिऊण सा सअं
सरिआ जहिट्ठिळरिउं[2] सिरी[3] विअ ॥ १२ ॥

छाया—

गरुडध्वजस्य मरणस्य कारणात्
सविषं स्तनं गरुडवाहनस्य च।
मरणं गता च दृष्ट्वा[4] सा स्वयं
स्मृता युधिष्ठिररिपुं श्रीरिव ॥

कारणात् कारणं निरूप्य कारणमिति निरूप्य। "ल्यब्लोपे पञ्चमी वक्तव्ये"ति कर्मणि पञ्चमी। सा तस्मा एव च गरुडबाहनाय

---

१. 'त्वे सूर्य इत्यस्य रेफ' ख. २. 'जनिट्ठि' क. ख.
३. 'रिपुं' ङ. ४. 'दत्त्वा' क. ख.

सविषं स्तनं दत्त्वा स्वयं मरणं गता । गरुडध्वजे कथं विषसाफल्यमित्य-विचार्य प्रवृत्ता स्वयमेव नष्टा । केव । युधिष्ठिररिपुमधर्मिष्ठमयोग्यं दुर्योधनं सृता श्रिता श्रीरिव सम्पदिव । एवमविमृश्यकारिणां परोपतापिनां जनानां स्वविनाश इति भावः ।

गरुडमरणयोर्ळत्वे विकल्पः केषाञ्चिदभिमतः । तन्मतानुरोधेनात्र विकल्पेन तावुदाहृतौ । कारणयुधिष्ठिरशब्दौ तु नियतळकारा । मञ्जुभाषिणीवृत्तम् ॥

मरणप्रकारमाह—

जमळट्ठिगआ चिळा[1]अचित्ता
अवि खुज्जं अइडोळिअंगडंडा[2] ।
डसणे फरुसे[3] अ सा मळंती[4]
फळिहंगी फळिहेक्खणा[5] गआ हुं ॥ १३ ॥

छाया—

यमयष्टिगता किरातचित्ता
अपि कुब्जमतिदोळिताङ्गदण्डा ।
दशनान् परुषांश्च[6] सा मृद्नती[7]
परिघाङ्घ्रिः परिखेक्षणा गता भुवम् ॥

यमयष्टिर्यमदण्डः तं गता सा उत्तानीकृतप्रसारितो यथा देहो

१. 'मपि दृश्य' क. ख. २. 'ळाद' ङ.
३. 'परु' क. ख. ४. 'मळत्ती' क.
५. 'हक्ख' ङ. ६. 'परूंषि च' ख.
७. 'मृदती' क. ख.

भवति तथा ध्रुवं गता भूमौ पतिता। अङ्गातिचालनं[1] दशनमर्दनं च मरणवेदनाया असह्यपरिमाणत्वात्। परिखेक्षणा अन्धकूपगभीराक्षी। मृताया विशेषणमिदम्।

"आदेर्यो जः" (२।२१) इत्यनेन पदादेर्यकारस्य जकारः जम। "यष्ट्यां ळः" (२।२२) इत्यनेन यष्टिशब्दे यकारस्य ळकारः ळट्ठि। "किराते चः" (२।२३) इत्यनेन किरातशब्दे आदेः ककारस्य चकारः चिळाअ। "कुब्जे खः" (२।२४) इत्यनेन कुब्जशब्दे ककारस्य खकारः खुज्जं। "दोळादण्डदंशनेषु डः" (२।२५) इत्यनेन दोळादीनामादेर्दकारस्य डकारः। डोळिअ डण्ड डसणे। "परुषपरिखपरिघासु फः" (२।२६) तेषामादेः पकारस्य फकारः फरुसे फळिहंघी फळिहं। हरिद्रादित्वाद्रेफयोः ळकारः। औपच्छन्दसिकं वृत्तम्॥

दुर्मन्त्रिमन्त्रतो घोरा कृत्या पूतनिका हरिम्।
समन्त्रप्रभवं प्राप्य नष्टा नैवात्र विस्मयः॥
सविषस्तन्यसहितमधुपानं तदा शिशोः।
सर्वबालपरित्रातुः सुपानं मेनिरे बुधाः॥

भगवद्गात्रस्पर्शनादिपूतपूतनातनुपतनरवमुपश्रुत्य प्रबुद्धस्य किमेतदित्यागतस्य नन्दगोपस्य व्यापारमाह त्रिभिः श्लोकैः—

भिसिणिरिमणतेअं वम्महच्छोअरूवं
अहिअमहिहसंतं छम्मुहं छाअसत्ति।

1. 'नदर्शनं' क, 'नँदर्शन' ख. 2. 'पादा' क. ख.
3. 'दर्शं' क. ख. 4. 'रसण'

महुरसुरहिवच्छं छत्तवण्णं व णंदो
सवमणु विणिअंतो देसिणीए तसिअ ॥ १४ ॥

छाया

विसिनीरमणतेजसं मन्मथच्छायरूपम्
अधिकमभिहसन्तं षण्मुखं शातशक्तिम् ।
मधुरसुरभिवत्सं (वृक्षमिति च) सप्तपर्णमिव नन्दः
शवमनु विपश्यन् द्वेषिण्यास्तत्रास ॥

नन्दः द्वेषिण्याः पूतनायाः शवमनु शवसमीपे शवस्योपरीति यावत् । मधुरसुरभिवत्सं पश्यन् तत्रास त्रस्तवान् । अनुशब्दस्यासत्यर्थत्वमुपसर्गसूत्रे दृष्टम् । कमिव । सप्तपर्णमिव । स च मधुरसुरभिः स एव वृक्षश्च । प्राकृते वृक्षवत्सशब्दयोरेकरूपत्वादेवमुक्तिः । पुनरपि वत्सं विशिनष्टि– विसिनीति । विसिनीरमणः सूर्यः तस्य तेज इव तेजो यस्य । मन्मथस्येव छाया यस्य मन्मथच्छायं, तथाविधं रूपमङ्गं यस्य तथा । षण्मुखं स्कन्दं अधिकमभिहसन्तम् । कुतः । शातशक्तित्वात् । षण्मुखपक्षे शक्तिः कासूः आयुधम् । कृष्णपक्षे सामर्थ्यम् । 'कासूसामर्थ्ययोः शक्तिः' इति सिंहः । सामर्थ्यस्य शातत्वं तीक्ष्णत्वम् ।

¶" बिसिन्यां भः "(२।३८)इत्यनेन बिसिनीशब्दे आदेर्वकारस्य भकारः भिसिणी । " मन्मथे वः " (२।३९) इत्यनेन मन्मथशब्दे आदेर्मकारस्य वकारः वम्मह । " *षट्च्छातसप्तपर्णेषु छः " (२।४१)

¶ " पनसेऽपि " (२।३७) इति सूत्रं नोदाहृतम् ।

* 'षट्च्छावकसप्त—' इति मुद्रितपाठः. " लाहले णः " (२।४०) इति सूत्रं नोदाहृतम् ।

१. 'मुहु' ख. २. 'शान्त' क.

इत्यनेन षट् शात सप्तपर्ण इत्येतेषां त्रयाणामादेर्हलः छकारः । छम्मुहं छाअ छत्तवण्णं । "[1]नो णः"(२।४२) इत्यनेन नकारस्य सर्वत्र णत्वं विधीयते णंदो । "शषोस्सः" (२।४३) इत्यनेन शकारषकारयोः सकारः । सव्वं । देसिणीए । मालिनीवृत्तम् ॥

दहदिसासु दरं विदळेउ दे
दहरहस्स [2]सुद व्व दसाणणं ।
दि[3]अहणाहपहो दि[4]असे णिसा-
समअए अ हरि त्ति भणीअ अ ॥ १५ ॥

छाया —

दशदि[5]शासु दरं विदलयतु ते
दशरथस्य सुत इव दशाननम् ।
दिवसनाथप्रभोः दिवसे निशा-
[6]समयके च हरिरित्यभणच्च ॥

नन्द इत्यभणच्च शिशोः रक्षार्थमित्यवादीच्च । हरिः विष्णुः दशदिशासु दशदिक्षु ते दरं भयं विदलयतु नाशयतु । दशरथस्य सुतो रामो दशाननं रावणमिव । कदा । दिवसे निशासमयके च । स्वार्थे कप्रत्ययः सर्वदा इत्यर्थः । हरिं विशिनष्टि– दिवसनाथप्रभः अनेकसूर्यप्रभः अपरिच्छिन्नतेजा इत्यर्थः ।

---

१ "नो णः सर्वत्र" इति मुद्रितपाठः.

---

१. 'न सर्वत्र नकारस्य णकारः' ख. २. 'सुओ व्व' ङ.
३. 'अणा' ङ. ४. 'अहे' ङ.
५. 'दिक्षु' घ. ङ. ६. 'समये च' घ. 'समये हरि' ङ.

“दशादिषु हः”(२।४४) इत्यनेन दशादिष्वष्टादश-पर्यन्तेषु शकारस्य हकारः दह। “संज्ञायां वा”(२।४५)इत्यनेन दशादिषु शकारस्य विकल्पेन हकारः। दहरहस्स। पक्षे दसाणणं। “दिवसे सस्य”(२।४६) इत्यनेन दिवसशब्दसकारस्य विकल्पेन हकारः। दिअह। दिअसे। द्रुतविलम्बितं वृत्तम्॥

ळुहिअसवसरीरं पूअणारक्खसीए
णिअवअकिअरक्खं तं पहुं सण्णिईअ।
सिरिणिळअ[1]जसोआहत्थवासं भणंतो
[2]तमणुहसिअ सोह्नाहस्स का मे ण्हुसत्ति *॥१६॥

छाया—

मृष्टशवशरीरं पूतनाराक्षस्याः
निजवचःकृतरक्षं तं प्रभुं सन्ददर्श।
श्रीनिलययशोदाहस्तवासं भणन्
तमोनुद्धसित! स्नुषार्हस्य का मे स्नुषेति॥$

नन्दः इति भणन् तं प्रभुं कृष्णं सन्ददर्श सस्नेहं सम्यग् दृष्टवान्। इदानीं त्रासनिवृत्त्या सम्यग्दर्शनमित्यवसेयम्। कथं भणन्? हे तमोनुद्धसित चन्द्रवन्मनोहरमन्दहास मम पुत्र! स्नुषार्हस्य वृद्धस्य मम का स्नुषा। एवं श्रीहरिणा रक्षितस्त्वमायुष्मान् भूत्वा प्राप्त-

* “इअ गोहंदाहिसेए सिरि (चि) न्धे सिरिकण्हलीलासुअमुणिविरइत-पाअडकव्वे अणुत्तवज्जणकज्जविळसिअं णाम (रळीओ? दुईओ) सग्गो” ङ.
$ “इति द्वितीयः सर्गः” ङ.

१. ‘यसो’ क. ख. २. ‘तमअह’ क. ख.

यौवनः कस्या नु पाणिं ग्रहीष्यामि । कदा नु त्वां सदारं द्रक्ष्यामीत्यर्थः । पितृभिः पुत्रविषयेष्वेवंविधा हि मनोरथाश्चिन्त्यन्ते । प्रभुं विशिनष्टि मृष्टशवशरीरं पूतनाराक्षस्याः । अत्र मार्जनेन स्पर्शनं लक्ष्यते । तद्दोषशान्त्यर्थं निजवचःकृतरक्षं हरिस्ते भयं दलयतु इत्याद्युक्तप्रकारेण निजवचसा कृता रक्षा यस्य । श्रियो लक्ष्म्या निलयो यः स चासौ यशोदाहस्तवासः । तं पुत्रं नन्दगोपः पूतनादेहादादाय रक्षां कृत्वा यशोदाहस्ते दत्त्वा हे तमोनुद्भासित इत्यादिस्वमनोरथं वदन् पुनः पुनः सस्नेहं ददर्शेति पिण्डितार्थः ।

"स्नुषायां ण्हः" (२।४७) इत्यनेन स्नुषाशब्दे षकारस्य विकल्पेन ण्हादेशः । तत्पक्षे "अधो मनयाम्" (३।२) इति नकारस्य लोपः । "उत ओ तुण्डरूपेषु"(१।२०)इति उकारस्य ओत्वं सोण्हा । अन्यत्र "ह्नस्नष्णक्ष्णश्नां ण्हः" (३।३३) इत्यनेन स्नु इत्यस्य ण्हु इत्यादेशः ण्हु सत्ति । मालिनीवृत्तम् ॥

दशाङ्कपद्यै रचितोऽत्र काव्ये
श्रीचिह्नसंज्ञे विवृतो द्वितीयः ।
षडत्र कात्यायनसूत्रलक्ष्यो
लिङ्गे परिच्छेदवरे स सर्गः ॥

एवं द्वितीयोऽपि सर्गः[1] परिसमाप्तो
विवृतश्च ॥

---

१. 'र्गः (अयुक्तव्यञ्जनविलसितं नाम) परि' ख.

## अथ तृतीयः सर्गः ।

प्रथमसर्गे श्रवणकीर्तनस्मरणपराणां सर्वाशुभघ्नं भगवतो जन्मोक्तम् । द्वितीये आदौ तच्छ्लेषकथनं कृतम् । तदनन्तरं दाशरथिरामरूपेणाप्यहमेवावतीर्णः । अस्मिंस्त्ववतारे ततोऽपि विशेषोऽस्तीति दर्शयितुमिवोत्तानशाय्यपि बालो बलवत्या राक्षस्या निग्रहं कृतवानिति तदेतत् पूतनानिग्रहलक्षणं पुराणप्रसिद्धं कर्मोक्तम् । अथेदानीं सकलमङ्गलं नामकरणं शकटोन्मर्दनादि वक्तुं तृतीयसर्ग आरभ्यते—

रत्तंघी मुद्धसज्जस्सररुइअरवो उप्पळंगो समुग्गो
भाणं पासुत्तगोट्ठिक्खळिअसिसुवओ रस्सिळग्गस्सचन्दो ।
तप्पे सण्हे सुळद्धस्सदइअसअणो सव्वकम्मंगमुद्दा-
भद्दो सव्वज्जसारो णरअमुररिवू अज्जवाळो हुवीअ ॥१७॥

छाया—

रक्ताङ्घ्रिर्मुग्धषड्जस्वररुदितरव उत्पलाङ्गः समुद्रो
भानां[3] प्रसुप्तगोष्ठीस्खलितशिशुव्रतो रश्मिलग्नास्यचन्द्रः ।
तल्पे श्लक्ष्णे सुलब्धस्वदयितशयनः सर्वकर्माङ्गमुद्रा-
भद्रः सर्वज्ञसारो नरकमुररिपुरज्ञबालो[4] बभूव ॥

नरकमुररिपुः अज्ञबालो बभूव इति यथास्थानं सम्बन्धः । उत्तानशायी बाल इवावर्तत । अज्ञवत् स्थितत्वादज्ञत्वम् । तमेव भगवन्तं तादृशीमवस्थामापन्नं दशभिर्विशेषणैर्विशिनष्टि– रक्ताङ्घ्रिः अरुण-

१. 'स्मि दर्श', २. 'मुर्वीश' क. ख.
३. 'भानां भासामिति वा' ख. ४. 'लोऽभूत्' घ.

वर्णश्रीपादपङ्कजः । मुग्धो मनोज्ञः षड्जस्वरो यस्य रुदितरवस्य तादृशेन रुदितरवेण उपेतः । उत्पलाङ्गः नीलोत्पलवर्णाङ्गः । भानां शोभानां समुद्रः । समुद्र इत्यादर्शादिः स्वग्रहपात्रमुच्यते । भानामाधारभूत इति यावत् । श्रमसहनसामर्थ्याभावादन्तरान्तरा प्रसुप्तः अत एव गोष्ठ्याः क्रीडायाः स्खलितैः स्खलद्भिः शिशुभिर्वृतः अनुमेयपुरातनपुण्यैः कैश्चिद् बालैः परिवृतः । रश्मिभिः शोभाभिः लग्नो आस्यचन्द्रो यस्य । श्लक्ष्णे मृदुतरे तल्पे सुष्ठु लब्धं स्वदयितं स्वस्य दयितं शयनं यस्य । तल्पस्य श्लक्ष्णत्वात् शयनस्य दयितत्वम् । सर्वकर्मा विष्णुरूपत्वात् सर्वाणि सृष्ट्यादीनि कर्माणि यस्मिन् । अङ्गमुद्राभद्रः लक्षणयुक्तैरङ्गैः पादतलादिगतचक्रमत्स्यादिरेखारूपाभिः मुद्राभिः चिह्नैः भद्रः मनोहरः । अथवा सर्वाणि कर्माणि अग्निहोत्रदर्शपूर्णमासादीनि अङ्गानि अवयवा अस्येति सर्वकर्माङ्गः । 'नाविन्दन् यज्ञसम्भारान् पुरुषावयवादृते ।' इत्यादिदर्शनात् । अपि च श्रीवराहावतारे तत्स्तुतौ, "छन्दांसि यस्य त्वचि" इत्यारभ्य,

'सोमश्च रेतः सवनान्यवस्थितिः
संस्थाविशेषास्तव देव धातवः ।
सत्राणि सर्वाणि शरीरसन्धय-
स्त्वं सर्वयज्ञक्रतुरिष्टिबन्धनः ॥'

इत्युक्तम् । मुद्रेत्यादि पूर्ववत् । सर्वज्ञसारः सर्वेषामात्मतत्त्वस्य स्वरूपप्रबोधेन हि सर्वज्ञत्वम् । अयं तु नित्यबुद्धात्मत्वात् सर्वज्ञेषु सारः ।

"उपरिलोपः कगडतदपषसाम्" (३।१)इत्यनेन लेखने रेखासुपरिस्थितानां लोपः। कलोपे रत्त, गलोपे मुद्ध, डलोपे सज्ज, तलोपे उप्पल, दलोपे मुग्गो, पलोपे पासुत्त, षलोपे गोट्ठी, सलोपे खलिअ । "अधो मनयाम्"(३।२)इत्यनेन युक्तानां हलां लेखने रेखास्वधोगतानां मकार-

यकारनकाराणां लोपो विधीयते । मलोपे रस्सि, नलोपे लग्ग, यलोपे अस्स । "सर्वत्र लवराणाम्"(३।३)इत्यनेन युक्तेषूपरिगतानामधोगतानां च लकारवकाररेफाणां लोपो विधीयते । ललोपे उपरि तप्प, अधः सण्हे । [1]वलोपे उपरि सुळद्धः, अधः सद्दइअ । रलोपे उपरि सव्व कम्म । अथवा कम्मेत्यत्र [2]कम्रेति छाया । सुजनदुर्जनभेदराहित्येन सर्वेषां [3]कम्राभिः मनोहराभिः अङ्गमुद्राभिः भद्र इत्यर्थः । अस्मिन् पक्षे [4]म्रे रेफस्याधोलोपो दर्शितः । अन्यस्मिन् पक्षे मुद्राशब्दे नैवम् । "द्रे रो वा"(३।४)इत्यनेन द्र इत्यस्य रेफस्य विकल्पेन लोपः । लोपे मुद्दा, लोपाभावे [5]मद्रो । "सर्वज्ञतुल्येषु[6] ञः"(३।५)इत्यनेन सर्वज्ञादीनां [7]ञकारस्य लोपः । सव्वज्ज अज्ज । एवं ज्ञान्ताः सर्वे सर्वज्ञतुल्याः । रक्ताङ्घ्रिः इति स्थिते कलोपे रलोपे च "इदुतोः शसो णो" (५।१४) इत्यधिकारे "सुभिस्सुप्सु दीर्घः" (५।१८) इति सौ परतो दीर्घे सुलोपे रत्तंघी इति भवति । क्रमेण डकारवकारदकाराणां लोपे षकारस्य सकारे सुद्धसज्ज-स्सररुइअरवो इति भवति । तलोपे ळत्वे सन्धावग्लोपे उप्पळंगो इति भवति । द्लोपे समुग्गो इति भवति । "टासोर्णः" (५।४) इत्यासो णादेशे सबिन्दौ भाणं । प्रसुप्तगोष्ठीस्खलिताशिशुव्रत इति स्थिते [8]अत आदे-रात्वे रेफलोपे पलोपे षलोपे सलोपे च ळत्वे तलोपे शकारद्वयस्य सत्वे ऋकारस्यात्वे पासुत्तगोट्ठीखळिअसिसुवओ इति भवति । रश्मिलग्नास्य-चन्द्र इति स्थिते शकारस्य सकारे मलोपे ळत्वे नरलोपे सन्धावग्लोपे यलोपे [9]च रस्सिळग्गस्सचन्दो इति भवति । तल्पशब्दस्य ललोपे तप्पे इति

१. 'खलो' क. ख.
२. 'कर्मे' क. ख.
३. 'कर्मभिः' क. ख.
४. 'नेरे' क. ख.
५. 'मुद्रो' क, मुद्दा' ख.
६. 'षु न्तः' क. ख.
७. 'ज्ञका' क. ख.
८. 'अत आदेरित्यात्वरेफयोर्लोपे चलोपे षलोपे' क. ख.
९. 'चलोपे रलोपे रस्सि' क. ख.

भवति । श्लक्ष्णे इत्यस्य सत्वे ललोपे "[1]ह्नस्नष्णक्ष्णश्नां ण्हः"(३।३३) इत्यनेन क्ष्ण इत्यस्य ण्हादेशे सण्हे इति भवति । सुलब्धेत्यादौ ळत्वे[2] वद्वयलोपे यलोपे तलोपे शकारस्य सत्वे नस्य णत्वे सुळद्धस्सदइअसअणो इति भवति । सर्वेत्यादौ रेफत्रयस्य लोपे सन्धावग्लोपे सव्वकम्मगम्भुद्दा-भद्दो इति भवति । रेफजकारयोर्लोपे सव्वज्जसारो इति भवति । नस्य[3] णत्वे कलोपे पस्य वत्वे उकारस्य दीर्घत्वे णरअसुररिवू इति भवति । जलोपे ळत्वे च अज्जवाळो इति भवति । हुवीअ[4] । भवतेर्धातोः "भुवो होहुवौ"[5](८।१)इति हुवेत्यादेशे "ईअ भूते"(७।२२)इति भूत ईआदेशे हुवीअ[6] इति भवति । स्रग्धरावृत्तम् ॥

यदुवंशजातानां तदाचार्यभूतेन गर्गेण संस्कार्यत्वनियमे जात-कर्मणश्चावश्यनियताचार्येण नन्देनान्यकारितत्वेऽपि यथावृत्तं वसुदेवे-नोपदिष्टो गर्गः स्वर्गोपमं घोषं प्राप्तवान् बालयोर्नामकरणायेत्याह—

पत्तो सुमंसू तवसंचएहिं
मसाणवासो गिरिसो व्व गग्गो ।
मज्झणणवण्हिप्पडिमो सुसीअ-
कल्हारहासो अह बम्हणग्गो ॥

छाया—

प्राप्तः सुश्मश्रुः तपस्सञ्चयैः
श्मशानवासो गिरिश इव गर्गः ।

---

१. 'स्नष्ण' क. ख.          २. 'ळत्वे लोपे' ख.
३. 'णस्य लत्वे',          ४. 'भुवीअ',
५. 'हुवौ लः',          ६. 'भुवीअ' क. ख.

मध्याह्नवह्निप्रतिमः सुशीत-
कह्लारहासोऽथ ब्राह्मणाग्र्यः ॥

अथ गर्गः प्राप्तो घोषमिति शेषः। सुश्मश्रुः शोभनश्मश्रुः। तपस्सञ्चयैरित्युपलक्षणे तृतीया। श्मशानवासो गिरिश इव दृश्यमानः। मध्याह्नवह्निः मध्याह्नकालभव आदित्यः, तेन प्रतिमा सादृश्यं यस्य। अनेन तपस औग्र्यं द्योत्यते। 'निकामतप्ता द्विविधेन वह्निना नभश्चरेणेन्धनसम्भृतेन च' इति कुमारसम्भवे। 'पञ्चमः पञ्चतपसस्तपनो जातवेदसाम्' इति माघकाव्ये। तस्मादादित्ये वह्निशब्दप्रयोगो युज्यते। तथापि सहजं सौम्यत्वमस्तीत्याह- सुशीतेति। सुतरां शीतं यत् कह्लारकुसुमं मधुरशीतलत्वात् तत्सदृशो हासो यस्य।

"श्मश्रुश्मशानयोरादेः"(३।६) इत्यनेन द्वयोरेतयोरादिभूतस्य शकारस्य लोपः। सुमंसू वक्रादित्वाद् बिन्दुः। मसाणं, "मध्याह्ने ह्रस्य"(३।७)इत्यनेन मध्याह्ने हकारस्य लोपः। मज्झण्ण। "ह्नह्लह्मेषु नलमां स्थितिरूर्ध्वम्"(३।८) इत्यनेन हकारस्याधोलिखितानां नकारलकारमकाराणां हकारादूर्ध्वं स्थितिर्विधीयते। वण्हि कल्हार बम्हण। प्राप्तशब्दस्य रलोपे पलोपे ह्रस्वे तकारस्य द्वित्वे पत्तो इति भवति। सुश्मश्रुरिति स्थिते आदिशकारस्य लोपे "वक्रादिषु"(४।१५)इत्यनेन बिन्दौ रलोपे सत्वे उकारस्य दीर्घत्वे सुमंसू इति भवति। तपस्सञ्चयैरिति स्थिते पकारस्य वकारे अन्त्यहलत्वात् सकारस्य लोपे भिसो हित्वे "ए च सुपि-"(५।१२)इत्येत्वे योगविभागाद् बिन्दौ तवसंचएहिं इति भवति। श्मशानशब्दस्य शकारलोपे द्वितीयशकारस्य सत्वे नकारस्य णकारे

---

१. 'कल्हार' क. ख. घ. ङ.　　२. 'न्हह्लह्माणलमां' क. ख.

मसाणवासो इति भवति । गिरिश इव इति स्थिते शकारस्य सकारे "*इवे लोपो नित्यम्" इतीकारलोपे वकारस्य शेषत्वाद् द्वित्वे गिरिसोव्व इति भवति । गर्गशब्दस्य रेफलोपे द्वितीयगकारस्य द्वित्वे गग्गो इति भवति । मध्याह्नवह्निप्रतिमशब्दस्य "ध्यह्मोर्झः" (३।२८) इति ध्यशब्दस्य झादेशे झकारस्य द्वित्वे ह्न इत्यस्य हलोपे नकारस्य णत्वे द्वित्वे वह्निशब्दे ह्न इत्यस्य ण्हादेशे पकारस्थरेफलोपे द्वित्वे प्रतिशब्दतत्वेन तकारस्य डकारे मज्झण्णवण्हिप्पडिमो इति भवति । सुशीतकह्लारहासशब्दस्य शकारस्य सत्वे तकारस्य लोपे हकारयुक्तस्य लकारस्योपरिस्थितौ ळत्वे सुसीअकळ्हारहासो इति भवति । अथशब्दस्य थकारस्य हकारः । अह । ब्राह्मणाग्र्यशब्दस्य रलोपे मकारस्य ऊर्ध्वस्थितौ यकाररेफयोर्लोपे गकारस्य द्वित्वे सन्धावग्लोपे बम्हणग्गो इति भवति । उपजातिवृत्तम् ॥

फंट्ठं[1] अट्ठीन्धगत्तो[3] थुइणिअमकिसो[4] तंबखंभुच्चखाणू
खंतीए थाणुभत्तो मुररिवुदइओ खोडओ कम्मसाणं ।
अज्जो सव्वम्हसेज्जो[5] सुअसमअमणो साहिमज्जुव्व पत्थो
सो णाहं कण्हणामं सवइ बळवअं रोहिणेअं तणीअ ॥३॥

छाया—
स्पष्टमस्थिचिह्नगात्रः स्तुति[6]नियमकृशः स्तम्बस्तम्भोच्चस्थाणुः
क्षान्त्या स्थाणुभक्तौ मुररिपुदयितः स्फोटकः कन्मषाणाम् ।

* सूत्रमिदं मुद्रितपाठे न दृश्यते

१. 'ध्यह्मोर्जझः' क. ख. २. 'पट्ठं' ङ.
३. 'अट्ठीध' क. ख. ४. 'थुअणि' ङ.
५. 'सज्जो' ङ. ६. 'स्तुत' घ. ङ.

आर्यः सद्ब्रह्मशय्यः शुकसमकमनाः[1] साभिमन्युरिव पार्थः
स नाथं कृष्णनामानं सपदि बलवचसं रौहिणेयं ततान ॥

स्पष्टं व्यक्तमस्थिचिह्नं गात्रं यस्य । कुतः— स्तुतिनियमकृशः लौकिकैर्वैदिकैश्च स्तोत्रैः ईश्वरस्य स्तवनं स्तुतिः, कायक्लेशरूपकृच्छ्राद्यात्मकतपःप्रधानाः शौचस्वाध्यायार्चनमननाद्या नियमाः, स्तुतिनियमैः कृशः । तपःप्रधानैर्नियमैरापादितकार्श्यत्वादिभिर्नियमैः व्यज्यमानास्थित्वं[2] गर्गगात्रस्योक्तम् । क्षान्त्या क्षमया स्तम्बस्तम्भोच्चस्थाणुः स्तम्बानां तृणानां मध्ये यः स्तम्भः स एवोच्चस्थाणुः । तद्वन्निर्विकारत्वात् गर्गस्तथा रूप्यते । स्तम्बवत् ज्ञानराहित्येन विषयचपलानां स्पर्शादिभिरुपद्रवाय प्रवृत्तानां जनानां मध्ये निश्चलत्वेन स्थिरत्वात् प्रकृष्टक्षमावानित्यर्थः । क्षान्तिपदेन आर्जवशमदमाद्या अपि ब्राह्मणधर्मा विवक्ष्यन्ते । स्थाणुभक्तः— सर्वेऽपि धर्मा भक्तिरहिते निष्फलाः । गर्गे तु स्थाणुभक्तत्वात् सफला इत्यर्थः । स्थाणुर्महादेवः तस्मिन् भक्तः । एतद् विष्णावप्युपलक्षणम् । तत्र विष्णौ विशेषं द्योतयन्नाह— मुररिपुदयितः स दयित इष्टो यस्य । भगवान् नारायणः सदा गर्गमनसि सन्निहित इत्यर्थः । अत एव स्वात्मस्थेन गदाभृता पापिनोऽपि दर्शनादेव पुनातीत्याह— स्फोटक इति । कल्मषाणां पापानां स्फोटकः संहर्ता । एवम्भूतत्वादार्यः । मोक्षप्रदमपि सकलब्रह्म भजमानाः क्वचित् तत्क्षुद्रफलकामनापरवशतया न मोक्षं परमपुरुषार्थमिच्छन्ति । असावेवं नेत्याह— सद्ब्रह्मशय्यः हरिहराद्याख्यस्य सकलब्रह्मणो जीवस्य च तत्त्वभूतसत्सदानन्दसंवित्स्वरूपं ब्रह्मैव शय्या आश्रयो यस्य सः सद्-

1. 'श्रुतसमय', श्रुतसमत', 'सुतसमद' 'शुकशमक इति वा' घ. ङ., 'श्रुतसमृज' घ. 2. 'मानानां क' क. ख.

ब्रह्मशर्य्यः निष्कळब्रह्मनिष्ठ इति यावत् । अत एव शुकसमकमनाः श्रीशुकसमानमनाः । साभिमन्युरिव पार्थः । स तु सुतसमदमनाः सुतेनाभिमन्युना गुणपूर्णेन समदं सप्रमोदं मनो यस्य । एवं विशिष्ट-गुणस्य महामुनेः स्वयमागमनस्य दुर्लभत्वाद् रौहिणेयस्य च विशेषतो गर्गसंस्कार्यत्वाद् बालयोर्नामकरणसंस्कारं तेन कारयामास नन्दगोप इत्यभिप्रेत्याह– सो इति । स गर्गः नाथं कृष्णनामानं नाथस्य कृष्ण इति नाम कृतवान् । रौहिणेयं बलवचसं रौहिणेयस्य बलभद्र इति नाम कृतवानित्यर्थः ।

"युक्तस्य"(३।९) इदमधिकारसूत्रम् । योऽत्रादेशो विधीयते स युक्तस्येत्यर्थः । पूर्वमप्यस्मिन् परिच्छेदे एतत्सूत्रवशाद् युक्ताक्षरस्याव-यवस्य लोपो विहितः । "ष्टस्य ठः"(३।१०) इत्यनेन ष्ट इत्यस्य ठकारः फट्ठ । "अस्थनि"(३।११)इत्यनेन अस्थिशब्दे स्थ इत्यस्य ठकारः अट्ठि । "स्तस्य थः"(३।१२)इत्यनेन स्त इत्यस्य थकारः थुइ । "*न स्तम्बे" (३।१३)इत्यनेन स्तम्बशब्दे स्त इत्यस्य न थकारः किन्तु उपरिलोपः । तंब । "स्तम्भे खः" (३।१४) इत्यनेन स्तम्भशब्दे स्त इत्यस्य खकारः । खंभ ।"स्थाणावहरे" (३।१५)इत्यनेन अहराभिधाने स्थाणु-शब्दे स्थकारस्य खकारः खाणू । हराभिधाने खकाराभावात् थाणू । "स्फोटके च" (३।१६) इत्यनेन स्फकारस्य खकारः । खोडओ "र्यशय्याभिमन्युषु जः" (३।१७) इत्यनेन र्य इत्यादिषु युक्ताक्षरेषु जकारः अज्जो सब्बम्हसेज्जो साहिमज्जू । स्पष्टशब्दस्य "¶स्पस्य फः"

* 'स्तम्बे' इति मुद्रितपाठः, (Chow. Ed.), "तः स्तम्बे" (Saraswati Bhavana Ed.)

¶ "स्पस्य सर्वत्र स्थितस्य" (Chow. Ed.) स्पस्य(३।३६)Saraswati Bhavana Ed.

१. 'य्या' क. ख. २. 'अतः शु' क.
३. 'गर्गः सं', ४. 'त्यर्थः। इद', ५ 'खाणुः।' क. ख.

(३।३६)इति फकारत्वे "ष्टस्य ठः"(३।१०)इति ष्टस्य ठत्वे द्वित्वे च फड्ढ इति भवति। अस्थिचिह्नगात्र इत्यस्य "अस्थनि" इति ठत्वे 'चिह्ने न्धः' (३।३४)इति चिह्नशब्दस्य ह्न इत्यस्य न्धादेशे[1] बहुळाधिकाराच्चकारलोपे सन्धावग्लोपे गकारस्य ह्रस्वे रेफस्य लोपे तकारस्य द्वित्वे अट्ठीन्धगत्तो इति भवति। स्तुतिनियमक्लृश इत्यस्य स्तस्य थकारे तकारलोपे नस्य णत्वे ऋकारस्येत्वे शकारस्य सत्वे थुइणिअमकिसो इति भवति। स्तम्बस्तम्भोच्चस्थाणुरित्यस्य सलोपे द्वितीयस्य स्त इत्यस्य खकारे सन्धावग्लोपे स्थ इत्यस्य खत्वे उकारस्य दीर्घत्वे तम्बखम्भुच्चखाणू इति भवति। क्षान्तिशब्दस्य "स्कष्कक्षां खः"(३।२९)इत्यनेन खत्वे ह्रस्वे "टाङसि" इत्यादिना एत्वे खंतीए इति भवति। स्थाणुभक्त इत्यस्य सकारलोपे ककारलोपे तकारस्य द्वित्वे थाणुभत्तो इति भवति। पकारस्य वत्वे तलोपे पुररिवुदइओ इति भवति। स्फोटकशब्दस्य स्फ इत्यस्य खत्वे टस्य डत्वे कलोपे खोडओ इति भवति। कल्मषाणामिति स्थिते "ल्मो मः"(३।४३)इति ल्म इत्यस्य मकारे मस्य द्वित्वे षस्य सत्वे कम्मसाणं इति भवति। र्य इत्यस्य जादेशे द्वित्वे च अज्जो इति भवति। सद्ब्रह्मशय्यशब्दस्य अन्त्यहलो लोपे रस्य च लोपे बस्य द्वित्वे मकारस्योर्ध्वस्थितौ "ए शय्यादिषु"(१।५) इति शय्यादित्वादेत्वे शस्य सत्वे य्य इत्यस्य जत्वे जकारस्य द्वित्वे सब्बम्हसेज्जो इति भवति। शुक्रसमक्रमना इत्यस्य शस्य सत्वे कलोपे नस्य णत्वे सुअसमअमणो इति भवति। सुतेत्यादौ तदोर्लोप एव विशेषः। साभिमन्युरिवेत्यस्य भस्य हत्वे न्युशब्दस्य जत्वे तस्य द्वित्वे इवशब्दस्येकारलोपे वकारस्य द्वित्वे साहिमज्जुव्व इति भवति। पार्थशब्दस्य योगविभागाद् ह्रस्वे रलोपे पत्थो इति भवति। सो इत्यस्य ओत्वमेव विशेषः। नस्य णत्वे थस्य हत्वे च णाहं इति भवति। कृष्णनामानामिति स्थिते

---

१. 'ह्नः', २. 'ह्ना' क. ख.

ऋकारस्यात्वं ष्ण इत्यस्य ण्हत्वं नस्य णत्वं अन्त्यहलो लोपः कण्हणामं इति भवति। पस्य वत्वे दलोपे च सवइ इति भवति। बलवचसमिति स्थिते ळत्वे चलोपे अन्त्यहलश्च लोपे बळवअं इति भवति। रौहिणेयशब्दस्य औत ओत्वे रोहिणेअं इति भवति। तनोतेर्धातोर्णत्वे "ईअ भूते"(७।२३) इति ईआदेशे तणीअ इति भवति। स्रग्धरावृत्तम्॥

तूरं सधीरं कुणिअं सुरेहि
सुन्देरसच्छेरमुआहसेहि[1]।
पेरन्तसुज्जेहि अ सूरमग्गे
अचोरिअं सोरिअमाअदेहि ॥४॥

छाया—

तूर्यं सधैर्यं कृतं सुरैः सौन्दर्यसाश्चर्यमुद्धसैः[2]।
पर्यन्तसूर्यैश्च सूर्यमार्गे अचौर्यं शौर्यमागतैः॥

सूर्यमार्गे वियति स्थितैरिति शेषः। सुरैः सधैर्यं भगवदवतारबलेन धैर्ययुक्तम्। क्रियाविशेषणमिदम्। तूर्यं कृतं घोषमित्यर्थः। तत्तु कृष्णरामयोर्नामकरणनिमित्तप्रमोदादिति द्योतयन् विशिनष्टि—सौन्दर्येति। मुन्निमित्तो यो हसः स मुद्धसः, साश्चर्यो मुद्धसः साश्चर्यमुद्धसः सौन्दर्यश्च साश्चर्यमुद्धसश्च येषां ते तथोक्ताः तैः सुरैः। हसो हासः। पर्यन्तसूर्यैः पर्यन्ते समीपे सूर्यो येषाम्। सूर्येण सहेति यावत्। अचौर्यं निर्व्याजम्। शौर्यमागतैः शूरत्वं प्राप्तैः। अनेन असुरभयादितः पूर्वं देवानां स्वशौर्यस्य गोपनं द्योत्यते। "तूर्यधैर्यसौन्दर्यसाश्चर्यपर्यन्तेषु रः"(३।१८) इत्यनेन तूर्यादिषु पञ्चसु शब्देषु सरेफस्य यकारस्य रेफादेशः तूरं। सधीरं "ई धैर्ये"(१।२९) इतीकारः। सुन्देरअच्छेरपेरन्त

---

1. 'असेहि' ख. 2. 'मुग्धभ्रकुंसैः' ख, 'मुद्धासैः' ङ.

त्रिषु शय्यादित्वादेत्वं। "सूर्ये वा"(३।१९)इत्यनेन सूर्यशब्दे विकल्पेन रेफादेशः। सुज्जेहि। सूर। "चौर्यसदृशेषु रिअः"(३।२०)इत्यनेन चौर्यशब्दे तत्सदृशेषु रिअ आदेशः चोरिअ सोरिअ। उपजातिवृत्तम् ॥

पळ्ळत्थपळ्ळाणमसोअमळ्ळं
उण्णट्टणं माणुसपट्टणस्स।
तं केसिणं हम्मसु णाह किं व
सव्वे सकंसे दणुए त्ति उत्तम् ॥५॥

छाया—

पर्यस्तपर्याणमसौकुमार्य-
मुन्नर्तनं मानुषपत्तनस्य[1]।
तं केशिनं जहि नाथ किं वा
सर्वान् सकंसान् दनुजानित्युक्तम् ॥

हे नाथ त्वं तं केशिनं जहि। हन्तव्यत्वद्योतकैर्विशेषणैः केशिनं विशिनष्टि- पर्यस्तपर्याणं पर्याणं नामाश्वारोहैकैरश्वपृष्ठे सुखासिकार्थं न्यसनीयं किञ्चिद्वस्तु। तद्रहितत्वकथनेन कैश्चिदपि कदाचिदपि अनियमनीयत्वं द्योत्यते। असौकुमार्यं कठिनतरकायं मानुषाणां यत् पत्तनं तस्य उन्नर्तनमुन्मूलनकरम्। पत्तनशब्देन ब्रह्मक्षत्रादीनां समाजस्थानं विवक्ष्यते। सर्वध्वंसकरमित्यर्थः। किं वा सर्वान् सकंसान् दनुजान् मनुष्यादिरूपेण भुवि जातान् सकलानप्यसुरान् जहि मारय इत्यप्युक्तं देवैः।

---

१. 'वर्तनस्य' ब. ड.

"पर्यस्तपर्याणसौकुमार्येषु ळः*" (३।२१) इत्यनेन पर्यस्तादिषु त्रिषु शब्देषु र्य इत्यस्य ळकारः पळ्ळत्थपळ्ळाणमसोअमळ्ळं । "र्तस्य टः"(३।२२) इत्यनेन र्त इत्यस्य टः उण्णट्टणं । "¶पत्तने च"(३।२३) इत्यनेन पत्तनशब्दे युक्ताक्षरस्य टकारः पट्टणस्स । इन्द्रवज्रावृत्तम् ।।

धुत्तो हु मुत्तो अणवत्तमुत्ती
भत्तुस्स कित्तीअ अकत्तणेहो ।
कत्तारमत्तं तणिउं जआण
तो वत्तणी आसि वए मुरारी ॥६॥

छाया—

धूर्तो हु[1] मूर्तः अनोवाप्तमूर्तिः
भर्तुः कीर्त्या अकर्तनेहः ।
कर्तारमार्तं तनितुं जगतां
ततो वर्तन्यासीद् व्रजे मुरारिः ॥

व्रजे घोषे वर्तनी वर्तनयुक्तः आसीत् । धूर्तः मूर्तः हु निश्चये । धर्मधर्मिणोरभेदविवक्षयैवमुक्तम्[2] अस्मिन् धूर्ततायाः प्राचुर्यात् । अनोवाप्तमूर्तिः अनसि शकटे अवाप्ता प्रविष्टा मूर्तिः शरीरं यस्य । भर्तुः कंसस्य कीर्त्याः अकर्तनेहः अकर्तने अविच्छेदे ईहा प्रवृत्तिर्यस्य । किमर्थमागतः जगतां कर्तारं कृष्णं विनष्टं कर्तुं स्वयमप्रकाशीभूय बालसन्निधिगतं शकटमाविश्य शकटपातनेन बालदेहं चूर्णयितुं तत्रावर्ततेत्यर्थः । अत एव धूर्तो मूर्त इत्युक्तम् ।

---

* 'लः' इति मुद्रितपाठः ।

¶ 'पत्तने' इति मुद्रितपाठः ।

---

१. 'हु निश्चये मू' घ. ङ. २. 'धर्मिधर्मयोः' ख.

"न धूर्तादिषु" (३।२४) इत्यनेन धूर्तादिषु र्तस्य टकारादेशप्रतिषेधः। धूर्तमूर्तमूर्तिभर्तृकीर्तिकर्तनकर्त्रार्तवर्तनसंवर्तमार्ताण्डकर्तरीवर्तीनिवर्तनाकीर्तनवार्तिकावर्तनकार्तिकेया धूर्तादयः। अत्र श्लोके वर्तन्यन्ताः। इन्द्रवज्रावृत्तम् ॥

संवत्तमत्तंडरुआण कत्तरिं[1]
तणुं वहंन्तो जसदीपवत्तिअं।
णिवत्तणाकित्तणवत्तिअं[2] रुआ-
वत्तस्स साणं समकत्तिएओ ॥७॥

छाया—

संवर्तमार्ताण्डरुचां कर्तरीं
तनुं वहन् यशोदीपवर्तिकाम्।
निवर्तनाकीर्तनवार्तिकं रु-
गावर्तस्य स्वानां समकार्तिकेयकः[3] ॥

पुनरपि तमेव शकटासुरं विशिनष्टि- संवर्तमार्ताण्डरुचां प्रलयकालभवतपनकिरणानां कर्तरीं कर्त्रिकाख्यशस्त्रविशेषभूतां तद्वत् तासां रुचामपि तुच्छीकरणसमर्थां तादृशीं तनुं शरीरं वहन्। पुनरपि तनुं विशिनष्टि- स्वानां कंसादीनाम् असुराणां यशोदीपवर्तिकां यशोरूपस्य दीपस्य प्रकाशनकरीं तथैव स्वानां रुगावर्तस्य दुःखसमूहस्य निवर्तनाया निवृत्तेर्यत् कीर्तनं कथनं तस्य वार्तिकं वार्तिकाख्यग्रन्थं, तद्वदाचरन्तीं सुखबोधिनीमिति यावत्। अतत्तनुदर्शने स्वपक्ष्याः स्पष्टतरं दुःखनिवृत्तिकथने नैवाश्वस्ता भवन्तीत्यर्थः। समकार्तिकेयकः अनेन पराक्रमशालित्वं विवक्षितम्। अत्र श्लोके शिष्टा धूर्तादयः प्रदर्शिताः। जगत्यामिन्द्रवज्रावंशस्थाभ्यामुपजातिवृत्तम् ॥

---

१. 'त्तरी', २. 'त्तिअं' क. ख. ३. 'यः' ब. ङ.

उत्तानशयनेऽपि लीलोत्क्षिप्तेन मृदुना चरणेनासुरं भङ्क्त्वा स्थिते भगवति नन्दस्यावस्थामाह—

पेच्छूण गड्डिक्खणगड्डहस्सणं
बाळङ्घिसम्मड्डहअं अणासुरं ।
विअड्डिविच्छड्डअळम्मि णन्दओ
भाहीअ पच्चक्खमपच्छमुज्जअं ॥ ८ ॥

छाया—

दृष्ट्वा गर्तेक्षणगर्दभस्वनं
बालाङ्घ्रिसम्मर्दहतमनोऽसुरम् ।
वितर्दिविच्छर्दतले नन्दको
बिभाय प्रत्यक्षमपथ्यमुद्यतम् ॥

अथ नन्दकः नन्द एव नन्दकः स्वार्थे कप्रत्ययः । वितर्दिविच्छर्दतले अनेकेषां मङ्गलतोरणानां सन्निवेशार्थं प्राकारगोपुरादीनामन्तर्भागे प्रकाशयुक्तस्थले समुन्नता प्रशस्ता या वेदिः क्रियते सा वितर्दिः । 'स्याद्वितर्दिस्तु वेदिका' इति सिंहः । तस्य समूहो विच्छर्दः तेन युक्तं तलं वितर्दिविच्छर्दतलं तथाविधेन तलेन युक्तो यो घोषः तत्र । 'विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ' इति न्यायेन विशेष्यस्य घोषस्याप्रयोगो युज्यते । तस्मिन् घोषे अनोऽसुरं अनोरूपान्तरितमसुरं बालाङ्घ्रिसम्मर्दहतं दृष्ट्वा शवभूतं दृष्ट्वा । बिभाय असङ्गलमिति तत्रास । गर्तवद् वृत्ते गम्भीरे ईक्षणे यस्य सः गर्तेक्षणः । गर्दभस्य स्वन इव स्वनो यस्य सः गर्दभस्वनः । गर्तेक्षणश्चासौ गर्दभस्वनश्चेति गर्तेक्षणगर्दभस्वनः । तं प्रत्यक्षं स्पष्टमुद्यतमुदितमपथ्यं उत्पातरूपत्वात् ।

"गर्ते डः" (३।२५) इत्यनेन गर्तशब्दे[1] र्त इत्यस्य डादेशः । गड्ड "गर्दभसम्मर्दवितर्दिविच्छर्देषु र्दस्य" (३।२६) इत्यनेन गर्दभादीनां चतुर्णां र्द इत्यस्य डकारः । आदेशत्वाद् द्वित्वं गड्डह-सम्मड्ड-विअड्डि-विच्छड्ड । "त्यथ्ययद्यानां चछजाः" (३।२७) इत्यनेन त्य थ्य द्य इत्येतेषां त्रयाणां यथासंख्यं च छ ज इत्येते आदेशा विधीयन्ते । पच्चक्खं अपच्छं उज्जअं । "भियो भावीहौ" (८।१९) इत्यनेन भियो भादेशे "एकाचो हीअ" (७।२४) इत्यनेन हीअ आदेशे भाहीअ इति रूपं भवति । इन्द्रवंशा[2] वंशस्थं च अत उपजातिवृत्तम् ॥

सज्झा असज्झे दळिए अळिंदे
　तोसुण्णअक्खंधमसुक्खवीक्खं ।
आआसमग्गं मअरंदधारं
　पुप्फाण पत्ता वरिसं कुणंतो ॥ ९ ॥

छाया—

साध्या असह्ये दलिते अरीन्द्रे
　तोषोन्नतस्कन्धमशुष्कवीक्षम् ।
आकाशमार्गं मकरन्दधारं
　पुष्पाणां प्राप्ता वर्षं कुर्वन्तः ।

साध्याः अरीन्द्रे अनोसुरे दलिते आकाशमार्गं प्राप्ताः । अस्यासह्यत्वं पराक्रमशालित्वात् । तोषेण अनोसुरवधजनितेन उन्नतेन स्कन्धेन यथा अमी अशुष्कवीक्षणम् आनन्दाश्रुजलैः पूर्णा वीक्षा अर्थान्नयने च यथा तथेति द्वयं प्राप्तिक्रियाविशेषणम् । किं कुर्वन्तः पुष्पाणां वर्षं कुर्वन्तः । मकरन्दस्य धारा यस्य पुष्पवर्षस्य तत्तथा ।

---

१. 'र्ते इत्यस्य' क. ख.　　२. 'शा च' क. ख.

"ध्यह्योर्झः" (३।२८) इत्यनेन ध्यह्योर्झकारः। सज्झा असज्झे। "स्कष्कक्षां खः" इत्यनेन स्कष्कक्ष इत्येषां खकारः। तोसुण्णअक्खंधमसुक्खवीक्खं। इन्द्रवज्रावृत्तम् ॥

तत्काले यशोदायाः सुतविषयां प्रतिपत्तिमाह—

अच्छीणं मच्छिआजं छुरमरिसु जसच्छीरवद्धिस्स छेत्तं
रिछेसस्सं सरिच्छं जळणिहिवइणा ळच्छिवच्छिच्छुचावं।
अच्छारंगं सुकुच्छि छुहिअमह पउच्छित्तच्छुण्णच्छसाणं
पत्ता रोअच्चरड्ढं सुअमह जणणी तं छमेसं खमारी ॥१०॥

छाया—

अक्ष्णां मक्षिकाजं क्षुरमरिषु यशःक्षीरवार्धेः क्षेत्रं
ऋक्षेशास्यं सदृक्षं जलनिधिपतिना लक्ष्मिवक्षइक्षुचापम्।
अक्षाराङ्गं सुकुक्षिं क्षुधितमथ पदोत्क्षिप्तक्षुण्णार्क्षस्थानं
प्राप्ता रोदाक्षराढ्यं सुतमथ जननी तं क्षमेशं क्षमारिः ॥

अथ जननी तं सुतं प्राप्ता। अक्ष्णां माक्षिकाजं मधु दर्शनीयतरत्वात्। अरिषु शत्रुषु क्षुरं पीडाकरत्वात्। यशःक्षीरवार्धेः यशःक्षीराब्धेः। क्षेत्रं शरीरम्। ऋक्षेशश्चन्द्रः तद्वन्मुखं यस्य। सदृक्षं सदृशम्। जलनिधिपतिना वरुणेन जनानां शास्तृत्वात्। 'शास्ता हि वरुणो राजा मिथ्याध्याचरतामि'त्यादिदर्शनात्। लक्ष्म्या वक्षसि हृदये इक्षुचापं मकरध्वजम्। अक्षाराङ्गं सुकुमाराङ्गम्। सुकुक्षिं शोभनोदरम्। पदेनोत्क्षिप्तम्

---

१. 'ध्योर्झ' क. ख. २. 'वच्छु' ख. ग. ङ.
३. 'च्छमारी' ग. ङ. ४. 'क्षस्थानं' क. ख.

ऊर्ध्वं क्षिप्तम् अत एव क्षुण्णाक्षं भग्नाक्षं स्वस्य अनो येन तम् । क्षुधितम् अत एव स्तनार्थित्वाद् रोदाक्षराढ्यं रोदे यान्यक्षराणि तैराढ्यं युक्तम् । क्षमाया भुवः ईशं पतिम् अनपायमित्यभिप्रायः । तर्हि किमितीमं प्रासवतीत्याह– क्षमारिः पुत्रविरहक्षमायाः पुत्रविरहतितिक्षायाः शत्रुः । क्षणमपि तद्विरहं सोढुमशक्तेत्यर्थः ।

"अक्ष्यादिषु च्छः" (३।३०) इत्यनेनाक्ष्यादिषु क्षकारस्य च्छकारः अच्छीणं । *अक्षिमक्षिकाक्षुरक्षीरक्षेत्रर्क्षसदृक्षलक्ष्मीवक्षइक्षुक्षारकुक्षिक्षुधितोत्क्षिप्तक्षुब्धाक्षाक्षरक्षमाशब्दा अक्ष्यादयः। क्षमाशब्दस्तितिक्षार्थे नाक्ष्याद्यन्तर्भूतः। तस्योदाहरणं खमारीति। स्रग्धरावृत्तम् ॥

छमाकप्पवच्छं छ[2]णं लोअणाणं
खमारुक्खवेल्लिव्व लोला खणं तं ।
अणुम्हस्सणं पम्हला विम्हअद्दा
पउत्ता दिसेउं थणं चुम्बिऊण ॥११॥

छाया—

[3]क्ष्माकल्पवृक्षं क्षणं लोचनानां
[4]क्ष्मावृक्षवल्लीव लोला क्षणं तम् ।
अनूष्मस्वनं पक्ष्मळा विस्मयार्द्रा
प्रवृत्ता देष्टुं स्तनं चुम्बित्वा ।

* 'अक्षिलक्ष्मीक्षुण्णक्षीरक्षुब्धोत्क्षिप्तसदृक्षेक्षूक्षक्षारर्क्षमक्षिकाक्षुरक्षुतक्षेत्रवक्षोदक्षकुक्षि इत्येवमादयः अक्ष्यादयः' इति मुद्रितपाठः ।

१. 'यस्या' क. ख. २. 'च्छळं' ङ.
३,४. 'क्षमा' क. ख.

सुतं प्राप्ता सा तं चुम्बित्वा स्तनं देष्टुं दातुं प्रवृत्ता । कथम्भूता क्ष्माकल्पवल्लीव लोला चञ्चला क्षणं पक्ष्मळा शोभननयनपक्ष्मा विस्मयार्द्रा शकटासुरविग्रहेण यो विस्मयस्तेनार्द्रा आर्द्रहृदया ।

*"क्ष्मावृक्षक्षणेषु वा" (३।३१) इत्यनेन क्ष्मादिषु क्षकारस्य वा खकारः छमा, खमा; वच्छं, रुक्खं; छणं, खणं; विकल्पेऽपि व्यवस्थास्ति – वृक्षक्षणयोः वृक्षस्य रुत्वाभावे छत्वम्, अकालांशवाच्ये क्षणस्य। क्ष्माशब्दस्य विकल्पे "¶अ क्ष्माश्लाघाशब्दयोः"(३।६३) इति पूर्वस्यात्वम् । "क्ष्मपक्ष्मविस्मयेषु म्हः"(३।३२)इत्यनेन एषु युक्तस्य विकल्पं विना म्हादेशः अणुम्हस्सणं, पम्हळा, विम्हअद्दा । भुजङ्गप्रयातं वृत्तम् । 'भुजङ्गप्रयातं भवेद् यैश्चतुर्भिः' इति वृत्तरत्नाकरे ॥

वण्हिण्हाणे कण्ह ! तिण्हो हु विण्हो
सोइन्धो मे दुप्फअप्फरससहेऊ ।
बाहुब्बप्फो पावकाहावणत्तो
पच्छाकुच्छो उज्जउच्चो त्ति रुण्णा ॥१२॥

छाया—

वह्निस्नाने कृष्ण ! तीक्ष्णो हु विश्वः
शोकचिह्नो मे दुष्पदस्पर्शहेतुः ।
बाष्पोद्बाष्पः पापकार्षापणात्तः
पश्चात्कुत्स उज्जुगुप्स इति रुदिता ॥

स्तनदानानन्तरं यशोदा सुतं निरीक्षमाणा इत्युक्त्वा रुदिता

---

* 'क्षमावृक्ष' इति मुद्रितपाठः ।

¶ 'अः क्ष्मा' इति मुद्रितपाठः ।

रोदितुं प्रवृत्ता । उक्तिप्रकारं दर्शयति- हे कृष्ण दुष्पदस्पर्शहेतुः मे वह्निस्नाने विघ्नः तीक्ष्णः वर्तत इति शेषः । दुष्पदं दुर्वस्तु तस्य स्पर्शो दुष्पदस्पर्शः स हेतुर्यस्य सः दुष्पदस्पर्शहेतुः । शकटासुरशवस्पर्शहेतुरित्यर्थः । 'पदं व्यवसितित्रस्थानत्राणलक्ष्माङ्घ्रिवस्तुषु' इति सिंहः । वह्निना स्नानं वह्निस्नानम् । वह्निस्नाने कर्तव्ये यस्तत्र विघ्नः प्रवेशः अग्निप्रवेशः तद्वदसह्यत्वात् इदानीं तव दुर्वस्तुस्पर्शनान्मम मनसि यः सन्तापो जातः सोऽग्निप्रवेशतुल्य इत्यर्थः । तीक्ष्णः क्रूरः । हु निश्चये । शोकचिह्नः शोकश्चिह्नं गमकं यस्य विघ्नस्य । बाष्पोद्बाष्पः बाष्पे अश्रुणि उद्बाष्पः उद्भूतोऽश्रयः । 'बाष्प ऊष्माश्रु' इति सिंहः । पापकार्षापणात्तः पापाख्येन कार्षापणेन क्रीत्वा स्वीकृतः । पश्चात्कुत्सः विचार्यमाणे कुत्सा यस्य तथा । उज्जुगुप्सः उद्भवेऽपि जुगुप्सा यस्य । आदावन्ते च जुगुप्सोपेत इत्यर्थः ।

"ह्नस्नष्णक्ष्णश्नां ण्हः" (३।३३) इत्यनेन ह्नादीनां पञ्चानां ण्हादेशः । वण्हि, ण्हाणे, कण्ह, तिण्हो, विण्हो । "चिह्ने न्धः"(३।३४) इत्यनेन चिह्नशब्दे युक्तस्य न्धादेशः सोऽन्धो । चकारस्य प्रायोलोपः, सन्धावन्त्यलोपः । "ष्पस्य फः" (३।३५) इत्यनेन ष्प इत्यस्य फादेशः दुप्फअ । "स्पस्य च" (३।३६) इत्यनेन स्प इत्यस्य फादेशः । फस्स । "बाष्पेऽश्रुणि हः" (३।३८) इत्यनेन अश्रुपर्यायस्य बाष्पशब्दस्य हादेशः ऊष्म पर्यायस्य तु फादेश एव । बाहुब्बप्फो । "कार्षापणे" (३।३९) इत्यनेन कार्षापणशब्दे युक्तस्य हादेशः । काहावण । "श्चत्सप्सां छः" (३।४०) इत्यनेन श्च त्स प्स इत्येतेषां छत्वं भवति । पच्छा कुच्छो उज्जउच्छो त्ति । शालिनीवृत्तम् । 'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः" इति वृत्तरत्नाकरे ॥

---

* "सि च" (३।३७) इति सूत्रं नोदाहृतम् ।

सा पुनर्यशोदा पूतनाशकटासुरयोर्दर्शनादपायदर्शिनी स्नेहबलाद् वृश्चिकादिभ्योऽपि सर्वदा बालस्य रक्षां कर्तुं प्रवृत्तेत्याह —

विञ्छुओरअविवीळिआवि सा
भाइदा सइ सिसूसओसवा ।
जम्ममिच्चुरहिअं वि रक्खिउं
उज्जआ णवर केसवं तदो ॥१३॥

छाया —

वृश्चिकोरगपिपीलिकादपि सा
भीता सदा शिशूत्सुकोत्सवा[1] ।
जन्ममृत्युरहितमपि रक्षितु-
मुद्यता णवर[2] केशवं ततः ॥

सा ततः केवलं केशवं रक्षितुमुद्यता । अस्मच्छिशुरयं मयैव रक्षितव्य इति मत्वा तद्रक्षायामेव प्रवृत्ताभूदिति शेषः । वृश्चिकोरगपिपीलिकादपि भीता । द्वन्द्वस्यैकवद्भावे "स नपुंसकम्" (पा. सू० २-४-१७) इति नपुंसकता । सदा शिशूत्सुकोत्सवा शिशौ कृष्णे ये उत्सुकाः ते उत्सवो यस्याः । एष एव प्रायेण लोके मातॄणां स्वभावः । जन्ममृत्युरहितमपि जननमरणशून्यमपि ।

"*वृश्चिके ञ्छु[3]" (३।४१) इत्यनेन वृश्चिकशब्दे युक्तस्य ञ्छु[4] इत्ययमादेशः । विञ्छुअ । "उदिक्षुवृश्चिकयोः" (१।१५) इत्युत्वम् ।

---

१. 'शिशूच्छुको' ङ. २. 'णवरेति केवले' ङ.
३. 'वृश्चिके श्च' क. ख. ४. 'अ इत्या' क. ख.

"नोत्सुकोत्सवयोः" (३।४२) इत्यनेनैतयोः छादेशप्रतिषेधः सिम्रुसुत्रोसवा। 'न्मो मः'(३।४३)इत्यनेन न्म इत्यस्य मादेशः रथोद्धतावृत्तम् ॥

आणिण्णविण्णाणमुणिंददेव्वं
पण्णासकोडीमिअभूमिणाहो।
सो वड्ढिओ पण्णरहिंदुवत्तो
कमा समाणं तळवुंण्टआहो ॥१४॥

छाया—

आनिम्नविज्ञानमुनीन्द्रदैवं[2]
पञ्चाशत्कोटिमितभूमिनाथः[3]।
स वृद्धः पञ्चदशीन्दुवक्त्रः
क्रमाच्छ्रमाणां तालवृन्ताभः ॥

स कृष्णः क्रमाद् वृद्धः वृद्धिं प्राप्तः। आभीक्ष्ण्येन निम्नं गभीरं विज्ञानं येषां तेषां मुनीन्द्राणां दैवं परदेवता। पञ्चाशत्कोटिमितभूमिनाथः[4] सर्वस्या भूमेरेकाधिपतिः। पञ्चदशीन्दुवक्त्रः पञ्चदश्यां य इन्दुः तद्वद् वक्त्रं यस्य। श्रमाणां संसाराध्वक्लेशजनितानां तालवृन्ताभ। तालवृन्तोऽपि मन्दमारुतदानाच्छ्रममपनयति।

"म्नज्ञपञ्चाशत्पञ्चदशेषु णः" (३।४४) इत्यनेन चतुर्षु युक्तस्य णादेशः। आणिण्ण, विण्णाण, पण्णास, पण्णरहिंदु। आदेशत्वाद् द्वित्वम्। "तालवृन्ते ण्टः" (३।४५) इत्यनेन तालवृन्तशब्दे युक्तस्य ण्टादेशः तळवुण्टआहो। उपजातिवृत्तम् ॥

---

१. 'वोण्ट' ग. ङ. २. 'देवं' ङ.
३, ४. 'त्कोटीमित' ख.

जो भिन्धिवाळो णिसिओ रिवूसु
अविब्भळच्छो [1]विब्भळारिजाळो ।
अप्पत्तओ रुप्पसमाणवासो
[2]चक्कादिहत्थो सिरिपत्तमज्झो ॥ १५ ॥

छाया —

यो भिन्दिपालो निशितो रिपुषु
अविह्वलाक्षो विह्वलारिजालः ।
आत्मात्मको रुक्मसमानवासा-
श्चक्रादिहस्तः श्रीप्राप्तमध्यः ॥

एवम्भूतः स इति पूर्वश्लोकेन सम्बन्धः । रिपुषु निशितो भिन्दिपाल इत्यनेन तेषामत्यन्तोच्छेत्तृत्वमुक्तम् । अविह्वलाक्षः अचलेन्द्रियः जितेन्द्रिय इति यावत् । विह्वलाः परवशाः शत्रुसमूहा यस्य । आत्मात्मकः आत्मनो जीवस्य आत्मा प्रशस्तस्वरूपभूतः । रुक्मसमानवासा पीताम्बरः । चक्रादिहस्तः हस्ते चक्रादि यस्य । "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः" (वा०) इति हस्तशब्दस्य परनिपातः । श्रीप्राप्तमध्यः श्रिया लक्ष्म्या प्राप्तो मध्यप्रदेशो यस्य ।

"*भिन्दिपाले न्धः" (३।४६)इत्यनेन भिन्दिपालशब्दे युक्तस्य न्ध इत्ययमादेशः भिन्धिवाळो । "¶विह्वले भो वा" (३।४७)इत्यनेन विह्वलशब्दे युक्तस्य वा भकारादेशः । अन्यत्र वकारलोपः । भादेशे

* 'भिन्दिपाले ण्डः' मुद्रितपाठः ।
¶ 'विह्वले भह्वौ वा' मुद्रितपाठः ।

1. 'विभळारि' ङ. 2. 'चक्काइहत्थो' ङ.

द्वित्वं अविब्भळच्छो । "न रहोः"(३।५४)इति हकारस्य द्वित्वाभावः । विहळारिजाळो । "आत्मनि पः"(३।४८)इत्यनेन आत्मन्शब्दे युक्तस्य वा पकारः । अन्यत्र मकारस्याधोलोपः । उभयत्राविशेषाद् द्वित्वम् । अप्पत्तओ । "[1]क्मस्य च"(३।४९)इत्यनेन विकल्पं विना पत्वं रुप्प । "शेषादेशयोर्द्वित्वमनादौ(३।५०)इत्यनेन अनादौ उपर्यादिलोपो येषां हलां विहितस्तत्र लुप्तशेषस्य युक्तविहितादेशस्य च द्वित्वं भवति । "वर्गे युजः पूर्वः" (३।५१)इत्यनेन द्वित्वस्य प्रकारा विधीयन्ते । वर्गे कव-र्गादौ युजः समाक्षरस्य द्वितीयस्य चतुर्थस्य च पूर्वं द्वितीयस्य प्रथमः चतुर्थस्य तृतीय इति यथाक्रमं भवतः । प्रथमाद्ययुजां तु द्वित्वे स्वय-मेव द्विर्भवति । शेषस्य प्रथमवर्णद्वित्वे चक्कादि । आदेशस्य द्वितीय-वर्णद्वित्वे हत्थो । "स्तस्य थः"(३।१२)इति स्तस्य थादेशः । आदेशस्य चतुर्थसमाक्षरद्वित्वे सर्वत्रैवमेवाह्यम् । उपजातिवृत्तम् ॥

णेड्डं लच्छीअ पेम्मप्पउरसिसुरुआजोव्वणाणंदसोत्त-
व्वाहित्तो जण्णआरी अह अह सअअं अब्बतब्बम्मि घोसे ।
सुंदेरद्दो सुबाहं विरइअरुइओ अम्बिआणत्तथण्णो
थोअं थोअं पिबंतो जणणअणसुहं बाळदाए तणीअ ॥१६॥

छाया -

नीडं लक्ष्म्याः प्रेमप्रचुरशिशुरुग्यौवनानन्दस्रोतो-
व्याहृतो जानुचारी अथासौ सततमाम्रताम्रे घोषे ।
सौन्दर्यार्द्रः सुबाष्पं विरचितरुदितोऽम्बिकाज्ञप्तस्तन्यं
स्तोकं स्तोकं पिबन् जननयनसुखं बालतया ततान ॥

1. 'ग्मस्य च' क. ख. पाठः

अथासौ कृष्णः आम्रैः सुस्वादुभिः पक्वैराम्रफलैः प्रभूतैस्ताम्रे अरुणिते घोषे बालतया बाल्येन जनानां नयनसुखं ततान। कथम्भूतः। लक्ष्म्याः श्रियः नीडमावासस्थानम्। प्रेमेति। तदानीमीषत्प्ररूढेन्द्रियत्वादाविर्भूतेन स्वजनविषयेण स्वस्य प्रेम्णा प्रचुरा बहुला या शिशुरुक् शैशवसञ्जाता शोभा तस्या यौवनमाधिक्यं तदेवानन्दयतीत्यानन्दः तस्य स्रोतः प्रवाहः तन व्याहृतः विष्णुरेवायमित्युक्तः जनानां मनसि बोधित इत्यर्थः। सततं सर्वदा जानुचारी। सौन्दर्यार्द्रैः सौन्दर्येणार्द्रः। प्रभूतसौन्दर्य इति यावत्। सुबाष्पं प्रभूतबाष्पमिति क्रियाविशेषणम्। कृत्रिमत्वाद् विविधं रचितं रुदितं रोदनं येन। अम्बिकया अम्बया हे वत्स स्तन्यं पिब इत्याज्ञप्त यत् स्तन्यं स्तनभवं पयः तत् क्रीडापारवश्यनटनात् स्तोकं स्तोकमल्पमल्पं पिबन्।

"नीडादिषु" (३।५२) इत्यनेन प्रसङ्गादयुक्तस्यापि हलो द्वित्वं विधीयते। नीडप्रेमयौवनस्रोतोव्याहृतजानुशब्दा नीडादयः। णेड्ड, पेम्म, जोव्वण, सोत्तो, वाहित्त, जण्ण। "आम्रताम्रयोर्बः" (३।५३) इत्यनेन तयोर्युक्तस्य बकारः। अम्बतम्बम्मि "न रहोः" (३।५४) इत्यनेन शेषे आदेशे च रेफहकारयोः द्वित्वं निषिद्ध्यते। सुन्देर। सुबाहं। "आङो ज्ञस्य" (३।५५) इत्यनेनाङ उत्तरस्य ज्ञादेशणकारस्य द्वित्वं निषिद्ध्यते। अम्बिआणत्त। "*समासे वा" (३।५७) इत्यनेन शेषे आदेशे च विहितस्य द्वित्वस्य तत्पुरुषादिसमासे विकल्पो विधीयते। अम्बिआणत्तथण्णम्॥

आशावासः श्यामलाङ्गः पादांशोत्थारुणप्रभः।
वान्तलालामधुरसः कृष्णाभार्द्रस्तदा बभौ॥

---

* 'न बिन्दुपरे' (५।५६) इति सूत्रं नोदाहृतम्।

दक्षोऽथ जानुसञ्चारे तत्र तत्र परिभ्रमन् ।
जनन्याः सङ्कटावस्थां चक्रे कृष्णो बलान्वितः ॥

स्रग्धरावृत्तम् ॥

इदानीं भगवत्सान्निध्यसञ्जातविशेषप्रकटनाय घोषं वर्णयति—

सेवादीहेअदेवो अदुहिअणिहिओ राइतुण्हीअबालो
रासिन्धासाहधेणू रुरुणहकणिआराइवीसंभिरण्णो ।
तेळोएएक्सरादो सुहपहगमणो सस्स पूसा व्व भाओ
वीसासादो वओ सो अह अ अह मणे पुण्णनिस्संदमेअं ॥

छाया—

सेवादीर्घैकदेवः अदुःखितनिहितो रात्रितूष्णीकबालो
रश्मिचिह्नाश्वामधेनू रुरुनखकर्णिकारादिविस्रम्भ्यरण्यः ।
त्रैलोक्यैकेश्वरात् सुखपथगमनः शश्वत् पुष्य इव भातो
विश्वासाद् व्रजः सोऽथ[1] चाहं मन्ये पुण्यनिष्यन्दमेतम् ॥

यत्र भगवान् बालभावमापद्य क्रीडति स्म स व्रजः शश्वत् सदा भातः अतीव दीप्तमापन्नः आसीदिति शेषः । व्रजं विशिनष्टि- सेवेति । सेवा दीर्घा येषां ते सेवादीर्घाः, तेषामेको मुख्यो देवो यत्र चिरकालसेवया जातेन भगवत्प्रसादेन भगवता विष्णुना सह वर्त- मानानां नन्दादिगोपानां प्रत्यक्षभूतो देवः कृष्णो यत्र, अत एवादुःखि तनिहितः अदुःखितत्वेन स्थितः । रात्रिषु क्रीडाव्यापाराभावात्

1. 'सोऽहमथमन्ये' घ.

तूष्णीका तूष्णीम्भूता बाला यत्र। रश्मिचिह्नानामश्वानाम् आभा इवाभा यासां ता रश्मिचिह्नाश्वाभाः, तादृशा धेनवो यत्र। धेनूनां रज्जुभिर्बद्धत्वात् प्रबलत्वाच्च तथाविधत्वम्। रुरुनखे क्रूरे कर्णिकारादौ कर्णिकारकुसुमादौ रमणीयवस्तुनि च विस्रम्भि तद्वासिनां भगवत्सान्निध्येन निरुपद्रवशीलत्वाद् विश्वासयुक्तमरण्यं यत्र। अरण्यशब्देन लक्षणयारण्यवासिनो विवक्ष्यन्ते। त्रैलोक्यैकेश्वरात् कृष्णाद् विश्वासात् स्नेहबहुमानविश्वासात्मिकाया भक्तेः, हेतौ पञ्चमी। सुखपथगमनः सुखपथे सुखमार्गे गमनं यस्य। प्राप्तसुख इत्यर्थः। क इव पुण्य इव। पुण्योदये हीशप्रभुजानां सम्पद् भवतीति प्रसिद्धिः। तत्र शोभनसुखपथगमनं यस्येति विग्रहः। अथचेत्यादि कवेरूहप्रकारः। अथ च अहमेतं व्रजं पुण्यनिष्यन्दं तद्रूपेणावस्थितं पुण्यपूरप्रवाहनिष्यन्दं मन्ये कल्पयामि।

"*सेवादिषु"(३।५८)इत्यनेन सेवादिगणस्य विकल्पेन द्वित्वं विधीयते। सेवा दीर्घ एक देव दुःखित निहित रात्रि तूष्णीक रश्मि अश्व नख कर्णिकार विस्रम्भ त्रैलोक्य ईश्वर पुण्य विश्वास मन्ये निष्यन्द निःश्वास विश्व वराक इत्येते शब्दाः सेवादयो द्वाविंशतिः। अत्र श्लोके निष्यन्दान्ता उदाहृताः। स्रग्धरावृत्तम्॥

किं बहुना। सर्वापन्निवृत्तिश्च भगवत्सान्निध्याद् घोषे सञ्जातेत्याह—

पसूणणीसासवासे विहारिवीसेसभूसे।
वराअपापाअतासे सिरी ण का तम्मि घोसे॥१८॥

छाया—

---

* 'सेवादिषु च' इति मुद्रितपाठः।

प्रसूननिःश्वासवासे विहारिविश्वेशभूषे ।
वराकपापादत्रासे श्रीर्न का तस्मिन् घोषे ॥

इति तस्मिन् घोषे का श्रीर्न आसीदिति शेषः । सर्वापि सम्पदासीदित्यर्थः । तत्र हेतुमाह विहारीति । विहारी क्रीडावान् विश्वेशो विष्णुः भूषा भूषणं यस्य । पापनिमित्तापि पदवी निरस्तेत्याह—वराकेति । वराकं दुःखोदर्कत्वादसारं पापं वराकपापं तस्माद् अत्रासे त्रासशून्ये । प्रसूनेति । प्रकृष्टानि सूनानि प्रसूनानि । निःश्वासो भगवन्मुखमारुतः तैर्वासोऽधिवासः सौरभ्यमेलनसंस्कारो यत्र । 'संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनम्' इति सिंहः ।

अत्र निःश्वासविश्ववराकशब्दा द्वित्वं विनोदाहृताः । सेवादीनां द्वित्वाभावपक्षः प्रदर्शितः । अतः परं द्वित्वपक्षः प्रदर्शयिष्यते । अनुष्टुब् वितानं वृत्तम् । 'वितानमेतं जतौ गौ' इति वृत्तरत्नाकरे ॥

सेव्वाइ दिग्घाइ अ एक्कदेव्वं
अदुक्खिए जोइमणे णिहित्तं ।
रत्तीसवत्तं तमिमं पउत्तं
तुण्हिक्कमंबाणवणीअथेए ॥ १९ ॥

छाया—

सेवया दीर्घया चैकदेव-[1]
मदुःखिते योगिमनसि निहितम् ।

---

१. 'दैव' घ.

राात्रीशवक्त्रं तमिमं[1] प्रवृत्तं
तूष्णीकमम्बानवनीतस्तेये[2] ॥

अम्बा तं बालं दृष्ट्वा तुष्टा इति वक्ष्यमाणेन सम्बन्धः । बालं विशिनष्टि–एकश्चासौ देवश्चेति एकदेवम् । सेवया दीर्घया चिराभ्यासवशाददुःखिते अनात्मचिन्तादिनिमित्तदुःखरहिते योगिनां जीवपरैक्यभावनावतां मनसि निहितं तथैवैकं देवत्वेन स्थितं सर्वमन्तःकरणवृत्तिसाक्षिसदानन्दसंवित्स्वरूपम् । एकोदेवोऽहं न शरीरादिरिति प्रत्ययप्रवाहकरणलक्षणो यो योगिनां समाधिः तस्य विषयत्वेन स्थितमित्यर्थः । रात्रीशश्चन्द्रः तद्वत् कान्तं वक्त्रस्वरूपं यस्य तम् । अम्बानवनीतस्तेये तूष्णीकं प्रवृत्तम् अम्बाया नवनीतम् अम्बानवनीतं तस्य स्तेयं चौर्यं तत्र प्रवृत्तमारभमाणम् । उपजातिवृत्तम् ॥

सरस्सिमस्सं विअ वग्घणक्ख-
भूसं सकण्णेउरकण्णिआरं ।
विस्सम्भितेल्लोक्कसुरेसरच्चं
बाळं तमंबा णिअऊण तुट्ठा ॥ २० ॥

छाया—

सरश्मिमश्वमिव व्याघ्रनख-
भूषं सकर्णपूरकर्णिकारम् ।
विस्रम्भित्रैलोक्यसुरेश्वरार्च्यं
बालं तमम्बा दृष्ट्वा तुष्टा ॥

पुनरपि बालं विशिनष्टि–सरश्मिमश्वमिव । जानुभ्यां पाणिभ्यां

---

१. 'तदिदं' घ, 'तमिदं' ङ. २. 'स्तेयम्' घ.

च अश्ववद् द्रुततरगमनशीलत्वात् । व्याघ्रनखेन भूषा कण्ठभूषणं यस्य । कर्णपूरत्वेन स्थितं कर्णिकारं कर्णपूरकर्णिकारं तेन सहितम् । त्रैलोक्यस्य सुराणां च ईश्वर इन्द्रः । विस्रम्भी भगवति विश्वासवान् य इन्द्रः तेनार्च्यः अर्चनार्हः अर्च्यमानमित्यर्थः । उपजातिवृत्तम् ॥

पुस्सो व्व जीवप्पिअजोइरूवो
विस्सासभूमी विइओ व्व राआ ।
होहीअ वच्छाण इमो हु मण्णे
ते[1] एअ णिस्संदिअमोक्खसोक्खे ॥२१॥

छाया—

पुष्य इव जीवप्रिय[2]ज्योतीरूपो
[3]विश्वासभूमिर्विजित इव राजा ।
अभूद् वत्सानामयं हु[4] मन्ये
तानेव निष्यन्दितमोक्षसौख्यान् ॥

अयमेवम्भूतः कृष्णः वत्सानां व्रजबालानां विश्वासभूमिः विश्वासस्थानं विश्वासस्य विषयोऽभूत् । अत्रापि विश्वासवदुपलक्षणम् । स्नेहबहुमानविश्वासात्मिकाया भक्तेः तान् वत्सानेव बाल्यादारभ्य दर्शनस्पर्शनसहशय्यासनादिरूपगर्भवत्सम्बन्धराकेशवर्धित तद्भक्ति-सुधार्णवे मग्नान् निष्यन्दितमोक्षसौख्यान् सुलभमोक्षसौख्यान् मन्ये-ऽहम् इति कवेरूहप्रकारः । विजितः-विविधः जितः जयः यस्य सः विजितः, सार्वभौम इत्यर्थः । तथाविधो राजा इव । सोपि वीसासेत्या-दिना श्लिष्यते। विश्वाश्वभूमिः विश्वे अश्वाश्च भूमिश्च यस्य सः । तथा

---

१. 'तेव्वे अ.' ङ.   २. 'ययोगिरूपः इति च' ख. ङ.
३. 'विश्वाश्वभूमिरिति च' ख. घ. ङ.   ४. 'हि' क. घ.

जीवेति जीवस्य स्वात्मभूतत्वादानन्दरूपत्वाच्च प्रियं यद् ज्योतिः सर्वतेजोऽवभासकमनिन्द्रियग्राह्यं परं ज्योतिः परं ब्रह्म तद्रूपं यस्य स्वाधीनमायाविलासमनुभवतः सकलब्रह्मणो बालवपुषः कृष्णस्य स तथोक्तः। पुष्य इव अस्मिन् पक्षे जीवो बृहस्पतिः तस्य प्रियश्चासौ कार्यज्योतीरूपश्चेति तथोक्तः। बृहस्पतेः कर्कटकराशौ पुष्यनक्षत्रे ह्युच्चस्थितिः। तस्मात् पुष्यस्य तत्प्रियत्वम्। इन्द्रवज्रावृत्तम् ॥

अथ भगवान् स्वयमात्मारामोऽपि नन्दयशोदादिभिर्लालितो व्रजेऽरमतेत्याह—

सआ दिणिस्सासहेऊ ठिईण विस्साससेऊ।
वरक्कबन्धस्स केऊ रमीअ सो णाणधाऊ ॥२२॥

छाया—

सदा द्विण्निःश्वासहेतुः स्थितीनां विश्वासां सेतुः।
वराकबन्धस्य केतुररमत स ज्ञानधातुः ॥

स कृष्णाख्यो ज्ञानधातुः चैतन्यस्वरूपः परमात्मा अरमत व्रजे इति शेषः। सदा द्विषामनिष्टप्राप्त्या यो निःश्वासो दीर्घश्वासः तस्य हेतुः तद्वधप्रवृत्तत्वात्। अत एव वर्णाश्रमधर्माणां तत्कर्तृणां तत्फलभोक्तृणां कर्मभोगभीत्यादीनां च याः स्थितयो व्यवस्थितयो मर्यादास्तासां विश्वासां सर्वासां सेतुः विधारकः। एवं हि नित्या गिरो वदन्ति। तथा वराकस्य निस्सारस्य बन्धस्य जननादिलक्षणस्य केतुः विनाशहेतुः मोक्षप्रदत्वात्। अनेन श्लोकेन भगवत उक्तप्रयोजनसिद्ध्यर्थं कृष्णत्वेन जन्मेत्यादावुक्तोऽर्थोऽनुसंस्थितः।

---

१. 'कर्कटराशौ' ख. २. 'णाण' ङ

इदानीं चतुर्भिः श्लोकैः सेवादिगणस्य द्वित्वाभावपक्षश्चोदाहृतः। वितानं वृत्तम् ॥

अक्किलिट्ठसिलिट्ठचोरिअ-
क्किरिओ सो णवणीअमंदिरं।
सअळं रअणज्जुई गओ
अह सारंगहरो वए पहू ॥२३॥

छाया—
अक्लिष्टश्लिष्टचौर्य-
क्रियः स नवनीतमन्दिरम्।
सकलं रत्नद्युतिर्गतो-
ऽथ शार्ङ्गधरो व्रजे प्रभुः ॥

अथ स प्रभुः व्रजे सकलं नवनीतमन्दिरं नवनीतयुक्तं गृहं गतः प्राप्तः। नवनीताहरणायेति शेषः। अक्लिष्टं क्लेशरहितं श्लिष्टा संयुज्यमाना अप्रतिहता चौर्यक्रिया यस्य। अनेन भगवता चौर्ये पाटवमपि प्रकटितमिति द्योतितम्। रत्नद्युतिर्नवनीतमन्दिरस्य ध्वान्तानिरासार्थं भवति। स्वाङ्गधृतानां रत्नानां द्युतिः शोभा यस्य। शार्ङ्गधरः चौर्याद्यसन्मार्गप्रवृत्तानां शास्ता।

"*विकर्षः" (३।५९) अधिकारोऽयमा परिच्छेदसमाप्तेः। युक्तस्य विकर्षो विश्लेषो विधीयते। "क्लिष्टश्लिष्टक्रियारत्नशार्ङ्गेषु ¶तत्स्वरः पूर्वस्य" (३।६०) इत्यनेन क्लिष्टादिषु पञ्चसु युक्तस्य विकर्षे सति पूर्व-

* 'विप्रकर्ष' इति मुद्रितपाठः।

¶ 'तत्स्वरवत्पूर्वस्य' इति मुद्रितपाठः।

स्याज्रहितत्वेन प्रयोक्तुमशक्यत्वादुत्तरस्य हलो यः स्वरः तद्युक्तता विधीयते । क्लिळिह सिळिह क्लिरिओ रअण सारग । वैताळीयं वृत्तम् ॥

' तिष्ठन्नटन्मन्दममन्दवीर्यः
सोऽङ्गीकृताङ्गप्रतिपाटवोऽथ ।
मातुः परं नो नवनीतपिण्डं
जहार सर्वं व्रजवासिनां च ॥'

कण्हो सो कसणो सिरीअ हिरिआ थेए किळंतंबओ
तत्तद्धाविरसंकिळेसचळणो माणा मिळाणो रआ ।
रत्तीए[1] सिविणेण मोत्तफरिसो कीळारसस्साअणा
वच्छाणं हरिसावहो सगरिहं णंदेण णिब्भच्छिओ॥२४॥

छाया—

कृष्णः स कृष्णः श्रिया ह्रिया स्तेये क्लान्ताम्बक-
स्तत्तद्धावितृसंक्लेशचरणो मानान्म्लानो रयात् ।
रात्र्यां स्वप्नेन मुक्तस्पर्शः क्रीडारसास्वादनाद्
वत्सानां हर्षावहः सगर्हं नन्देन निर्भर्त्सितः ॥

स कृष्णः चौर्यसाहसयोगान्नन्देन सगर्हं निर्भर्त्सितः अधिक्षिप्तः । श्रिया शोभया कृष्णः कृष्णवर्णः । स्तेये चौर्ये ह्रिया लज्जया क्लान्ताम्बकः श्रान्तनयनः । रयाद् वेगात् । तत्तद्धावितारौ तत्र तत्र धावनशीलौ अत एव संक्लेशौ सञ्जातक्लेशौ चरणौ यस्य । मानाद् म्लानः मानहीन इति यावत् । क्रीडारसास्वादनाद् रात्र्यां स्वप्नेन स्वापेन

---

1. ' रत्तीतस्सिविणेण ' ङ.

मुक्तस्पर्शः त्यक्तसम्बन्धः । वत्सानां शिशूनां हर्षावहः सन्तोषोत्पादकः ।

"कृष्णे वा" (३।६१) इत्यनेन कृष्णशब्दे वा विकर्षः । व्यवस्थितविकल्पत्वात् संज्ञायां कण्हो, असंज्ञायां कसणो । सिरीअ । "‡इच्छ्रीह्रीक्लान्तक्लेशम्लानस्वप्नस्पर्शहर्षगर्हेषु" (३।६०) इत्यनेन एषु नवसु विकृष्टेषु पूर्वस्य हलः इकारान्तता विधीयते । सिरीअ हिरीअ किळंत किळेस मिळाणो सिविणेण फरिसो हरिसो गरिह । शार्दूलविक्रीडितं वृत्तम् ॥

छमा सळाहाइ [1]सिणेहिणेहो
कीळोइअं सप्पदु[2]मं सिरीसो ।
तणुं वहंतो तणुइं सरामो
रिद्धो पिअत्थं गरुइं व जीअं* ॥२५॥

छाया —

क्षमाश्लाघायां [3]स्नेहिस्नेहः
क्रीडोचितां[4] सत्पद्मां श्रीशः[5] ।

‡ "इः श्रीह्रीक्रीतक्लान्तक्लेशम्लानस्वप्नस्पर्शहर्षार्हगर्हेषु" इति मुद्रितपाठः ।

* 'इअ गोइंदाहिसेए पाअडकव्वे सिरिन्धे सिरिकण्हळीळासुअमुणिविरइए जुत्तवंजणकज्जविळइअं णाम तइओ सग्गो ' ङ

१. 'सणेहि' क. ख.
२. 'मो' ङ.
३. 'स्निग्धस्नेहः' ङ.
४. 'चितं' ङ.
५. 'अश्रीशः' ङ.

तनुं वहन् तन्वीं सगामः
ऋद्धः प्रियार्थी गुर्वीमिव ज्यामं ॥

स श्रीशः कृष्णः सरामः रामेण सहितः ऋद्धः ऋद्धिं प्राप्तः । श्लाघायां स्तुतौ सत्यां क्ष्मा भूमिः तद्वद्वर्तमानः । सत्त्वाधिकचित्ततया-द्वर्षादिभिरकम्पनीय इत्यर्थः । स्नेहिषु भक्तेषु स्नेहः करुणा यस्य । 'उत्तमे प्रणयाधिक्यं भक्तिरित्यभिधीयते । समे बन्धौ भवेत् स्नेहो निकृष्टे करुणा मता ॥' इत्युक्तत्वात् प्रायेणैषामेकात्मता । क्रीडोः चितां तनुं वहन् । तनुं विशिनष्टि- सत्पद्मां सती पद्मा श्रीर्यस्याः । प्रियार्थी प्रियाणां भक्तानामर्थः प्रयोजनं यया । गुर्वीं गुरुतरां ज्यां मौर्वीमिव । सा च सत्पद्मा सजयलक्ष्मीका तद्धेतुत्वात्तस्याः । तत्पक्षे प्रियास्त्रां प्रियाणि अस्त्राणि यस्याः ।

"*अत् क्ष्माश्लाघयोः"(३।६३)इत्यनेन एतयोर्विकर्षे पूर्वस्माद्धलः परमकारादेशः । छमा सळाहाइ । "स्नेहे वा"(३।६४)इत्यनेन स्नेहे वा विकर्षो विधीयते । विकर्षपक्षे पूर्वस्माद्धलः परमिकारादेशः सिणे-हि । अन्यत्र सकारस्योपरिलोपः णेहो । "†उत् पद्मतन्वीसमेषु" (३।६५)इत्यनेन पद्मतन्वीशब्दयोः तत्समे च विकर्षे पूर्वस्माद्धलः परमु-कारः । पदुमं तणुइं । तत्समेन गरुइं । "अन्मकुटादिषु" (१।१२) इत्यकारः । "ज्यायामीत्" (३।६६) इत्यनेन ज्याशब्दे विकृष्टे पूर्वस्माद्धल ईकारः जीअं । उपजातिवृत्तम् ॥

---

* 'अः क्ष्मा०' इति मुद्रितपाठः ।
† 'उः पद्म०' मुद्रितपाठः ।

---

१. 'प्रियास्त्रामिति च' ख. घ. ङ.,
२. 'ज्याम् ॥ इति तृतीयः सर्गः' घ. ङ.

सतत्त्वपद्यै रचितोऽत्र काव्ये
श्रीचिह्नसंज्ञे विवृतस्तृतीयः ।
कलात्मकात्यायनसूत्रलक्ष्य-
सर्गः परिच्छेदतृतीयकेऽत्र ॥

इति गोविन्दाभिषके युक्तव्यञ्जनकार्यविलसितं
नाम तृतीयः सर्गः ।

इत्थं परिसमाप्तस्तृतीयसर्गो विवृतश्च ।

---

## अथ चतुर्थः सर्गः ।

सौवर्णकटिसूत्रं तं तादृङ्मञ्जीरभृत्पदम् ।
मनोज्ञतिलकं श्यामं बालं वयमुपास्महे ॥

अथ भगवतो बालचेष्टानुकरणाय वा द्वारान्तरेणापि वा स्वभक्तानां जनानां मनः स्वस्मिन्[1] प्रवेशयितुं वा चौर्यादौ प्रवृत्तस्य पूर्वसर्गान्ते प्रस्तुतं यन्नवनीतलुण्ठनं तेनान्यैश्चोपद्रवैरुपद्रुतस्य व्रजवासिजनस्य सर्वदुरितहरतन्निवेदनप्रकारोपपादनाय चतुर्थः सर्ग आरभ्यते—

पुण्णाआरेण घोसो विउळरसभरो सो इमो णंतकित्ती
णंदेसो उम्महिंदो विअ सुरणिळओ सोच्छवच्छूसवच्छो ।
एण्हिं सुण्णो जसोए! तुह सिरितणअत्थेअळच्छीविळासा
णिग्गव्वो मोत्तवच्छो वअणिळअजणो तत्थ इत्थं भणीअ ॥१॥

छाया—

पुण्याचारेण घोषो विपुलरसभरः सोऽयमनन्तकीर्ति-
र्नन्देश उन्महेन्द्र इव सुरनिलयः सोक्षवत्सोत्सवाच्छः ।
इदानीं शून्यो यशोदे ! तव श्रीतनयस्तेयलक्ष्मीविलासा-
न्निर्गव्यो मुक्तवत्सो व्रजनिलयजनस्तत्र इत्थमभाणीत् ॥

व्रजनिलयजनः घोषवासी जनः तस्मिन् नवनीतापहारादिव्यापारैः सह प्रारब्धदेहवृद्धौ भगवति विषये इत्थमभाणीद् जगाद ।

---

१. ‘ स्वस्मिन्नित्थ ’ क. ख.

यशोदामिति सम्बोधनवशात् सिद्धयति । अत्र स्त्रीविषये जनशब्दोऽविरोधात् श्रीहरिवंशानुसाराच्च । 'क्रन्दन्त्योऽथ मुहुर्गोप्यो यशोदां ... ययुः' इत्यादिदर्शनात् । भणनप्रकारमाह— हे यशोद ! घोषः पूर्वं पुण्याचारेण विपुलरसभरः । आचर्यते इत्याचारः कर्म । सम्पत्प्रदेन पुण्यकर्मणा विपुलं बहुलं क्षीरादिगोरसं बिभर्तीति विपुलरसभरः । तेनैव पुण्याचारेण हेतुना अनन्तकीर्तिः । नन्द ईशः स्वामी यस्य । अत एव विपुलरसयोगादनन्तकीर्तियोगादिन्द्रस्थानीयनन्दयोगाच्च उन्महेन्द्रः उद्भूतमहेन्द्रः । सुरनिलय इव स्वर्ग इवाभूदिति शेषः । सुरनिलये हि गन्धर्वाप्सरःप्रभृतिप्रवर्तितसङ्गीतादियोगाद् विपुलरसभरत्वम् । किञ्च सोक्षवत्सोत्सवाच्छः उक्षसहितैर्वत्सैः य उत्सवः तेनाच्छः निर्मलः मनोहरः । किमनया वार्तया गतकालविषयया । सोऽयं घोष इदानीं शून्यः संवृत्तः । कस्मादित्याह— तव श्रीतनयस्य या स्तेयलक्ष्मीस्तस्या विलासात् । तासां क्रोधातिशयेनाधिक्षेपे श्रीशब्दः शून्यत्वमेव स्पष्टयति । निर्गव्यः निर्गतगव्यः अस्मत्कुलधनभूतक्षीरनवनीतादिगोरसरहितः । मुक्तवत्सः अकाले वत्समोचनात् पशूधःस्थितक्षीरमप्यपहृतं [1]दुष्टेन न केवलमन्तर्घटादिगतम् ।

"सन्धावचामग्लोपविशेषा बहुलम्"* (४।१) इत्यनेनाचामज्भिर्हलिभर्वा [2]सन्धौ अकां लोपो बहुलं प्रवृत्त्यप्रवृत्तिविभाषान्यत्वभेदा चतुर्धा विधीयते । तथा विशेषा अपि बहुलं विधीयन्ते ।

---

* 'मज्लोप' (chow-edn.,), 'मड्लोप'(Sarasvati Bhavana edn.,)

---

१. 'तुष्टेन' क. ख. २. 'सन्धौ क्रया अकां' क. ख.

लोपस्य प्रवृत्तौ पुण्णआआर पुण्णाआर । अत्रस्थाकारस्य लोपः । अप्रवृत्तौ विउळ । विभाषालोपे इमोणंत इमोअणंत इत्यपि द्रष्टव्यम् । अन्यत्वे कित्ती 'दीर्घस्य ह्रस्वता नित्या संयुक्तोत्तरता यदि' इति न्यायात् पूर्वस्य ह्रस्वत्वम् । विशेषत्वस्य प्रवृत्तौ णंदईस णंदेस । अत्राकारस्ये-कारस्य च स्थाने एकारः । विशेषस्य पूर्ववदेव प्रवृत्तौ महाइंद महिंद । सउच्छ सोच्छ । वच्छ ऊसव वच्छूसव । सिरितणअत्थेअळच्छीविळासा । पुण्याचार इति स्थिते यकारस्य लोपे णस्य द्वित्वेऽग्लोपे चस्य च लोपे पुण्णाआर इति भवति । षस्य सत्वे घोस इति भवति । पलोपे लस्य ळत्वे विउळरसभर इति भवति । तच्छब्दे न विशेषः । "इदम-" (६।१४)इतीमादेशे इमो । अनन्तकीर्तिशब्दस्य सन्धावग्लोपे नस्य णत्वे कीर्तिशब्दस्य रलोपे ह्रस्वे तकारस्य द्वित्वे कित्ती । पूर्वेण सह णंत-कित्तीति भवति । नन्देश इति स्थिते नस्य णत्वे एत्वे शस्य सत्वे णंदेस इति भवति । उन्महेन्द्रशब्दस्य "न्द्रो सः" (३।४३) इति सत्वे सस्य द्वित्वे एकारलोपे उन्महिंद इति भवति । एवम् *इव "विअ इवार्थे" इति इवशब्दस्य विआदेशः । नकारस्य णत्वे लस्य ळत्वे सुरणि-ळअ इति भवति । सन्धावोत्वे विशेषे "श्चत्सप्सां छः"(३।४०) इति त्स इत्यस्य छत्वे द्वितीयस्य "नोत्सुकोत्सवयोः"(३।४२) इति प्रति-षेधे सन्धावूकाराख्ये विशेषे पुनरग्लोपे सोच्छवच्छूसवच्छ इति भवति । इदानीमित्यस्य दाढादित्वाद् एण्हिं इति भवति । सत्वे यलोपे नस्य णत्वे द्वित्वे दीर्घस्य ह्रस्वत्वे सुण्ण इति भवति । आदियकारस्य जत्व शस्य सत्वे दलोपे जसोए इति भवति । "ङसिं तुमो तुहतुज्झतुम्हतुम्माः"

---

* "इवस्य विअ" (१२।२४) [chow-edn.,], "पिव मिव विव व इवार्थे" (८।१८) [Sarasvati Bhavana-edn.,]

(६।३१) इत्यनेन तुह इति भवति । श्रीतनयस्तेयलक्ष्मीविलासाद् इति स्थिते श्रीशब्दस्य विकर्षे "इच्छ्री-"(३।६२)इत्यादिना पूर्वस्येत्वे नस्य णत्वे स्तस्य थत्वे द्वित्वे लस्य ळत्वे क्ष्मीत्यस्य "अधो मनयाम्"(३।२) इति मस्य लोपे अक्ष्यादित्वाच्छत्वे द्वितीयलस्य ळत्वे सिरितणअत्थे-अळच्छीविळासा इति भवति । नस्य णत्वे रलोपे गस्य द्वित्वे पुनर्यलोपे वस्य द्वित्वे णिग्गव्वो इति भवति । मुक्तवत्स इत्यस्य "उपरि-"(३।१) इत्यादिना कलोपे तुण्डरूपत्वादुत ओत्वे तकारस्य द्वित्वे त्स इत्यस्य छत्वे मोत्तवच्छ इति भवति । "सर्वत्र-"(३।३) इत्यादिना रलोपे जलोपे नस्य णत्वे लस्य ळत्वे नस्य णत्वे वअणिळअजण इति भवति । तच्छ-ब्दादुत्तरस्य ङेः "ङेः स्सिम्मित्थाः (६।२) इति त्थादेशे तत्थ इति भवति । 'निपाताः संस्कृतवत्' इतीत्थमित्यस्य तथैवादेशः । भणेर्धातोः "ईअ भूते"(७।३) इतीआदेशे भणीअ इति भवति । स्रग्धरावृत्तम् ॥

इतः परं तदुपद्रुतानां केषाञ्चिद् गोपानां निवेदनान्युच्यन्ते—

महुंबरं मे हरिअं सुएण दे काळासचित्तेण णिवारिएण वि ।
काळाअसंगेण सभाणमुज्झिअं अभाअणस्सत्ति अ केणवीरिअं ॥

छाया—
मधूदुम्बरं मे हृतं सुतेन ते काळायसचित्तेन निवारितेनापि ।
काळायसाङ्गेन सभाजनमुज्झितमभाजनस्येति[1] च केनापीरितम् ॥

अन्येन केनापि पुरुषेणेरितं कथमित्याह—हे यशोदे ! ते सुतेन मे मधूदुम्बरं हृतं स्वादुत्वापादनाय मधुमिश्रमुदुम्बरम् उदुम्बरफलं मधूदुम्बरम् । निवारितेनापि मदनुवादं विना प्रसह्येत्यर्थः । काळायसचित्तेन

1. 'स्येति केना' घ.

कृष्णायोविकार इव कठिनचित्तं यस्य । मलिनकठिनचित्तेनेत्यर्थः । काळायसाङ्गेन अस्य चित्तगतं काष्ण्यं शरीरमपि व्याप्तमित्यभिप्रायः । न केवलं हृतं, सभाजनं पात्रेण सह उज्झितं त्यक्तं च स्वेनापि न भक्षितम् । मद्धस्तादाच्छिद्य भाजनेन सह दूरतः क्षिप्तं च । सभाजनस्य मधूदुम्बरस्य प्रक्षेपान्मम भाजनमपि विशिर्णमित्यभिप्रायः ।

मधूदुम्बरशब्दस्य धकारस्य हत्वे "उदुम्बरे दोर्लोपः" (४।२) इत्यनेन दुकारलोपे महुम्बरं इति भवति । अस्मच्छब्दादुत्तरस्य ङसः "मे मम-(६।५०) इत्यादिना मे इत्यादेशः । हरतेर्धातोर्निष्ठायाम् "इच-"(७।३१) इत्यधिकृत्य "क्ते" (७।३२) इति सूत्रेणेत्वे तलोपे हरिअं इति भवति । तलोपे सुअ इति भवति । "आङि च ते दे" (६।३२) इति चकारात् ङसि च दे आदेशः । "काळायसे यस्य वा" (४।३) इत्यनेन यकारस्य लोपे काळासचित्त इति भवति । नकारस्य णत्वे तकारस्य लोपे पुनः नस्य णत्वे अपिशब्दस्य सन्धावग्लोपे पस्य वत्वे णिव्वारिएणवि इति भवति । सन्धावग्लोपे काळाअसंगेति भवति । "भाजने जस्य"(४।४) इत्यनेन भाजनशब्दजकारस्य लोपे नस्य णत्वे सभाणमिति भवति । उज्झ परित्याग इत्यस्माद्धातोर्निष्ठायां "क्ते"(७।३२)इतीत्वे तलोपे उज्झिअं इति भवति । जकारस्य प्रायोलोपे नस्य णत्वे अभाअण इति भवति । किंशब्दादन्त्यहल्लोपे "शेषाणामदन्तता" (८।७१) इत्यदन्तवद्भावे "टामोर्णः" (५।४) इति णादेशे "ए च सुपि-" (५।१२) इत्यनेन एत्वे केणेति भवति । अपिशब्दस्य सन्धावग्लोपे पस्य वत्वे केणवीति भवति । निष्ठातकारस्य प्रायोलोपे ईरिअं इति भवति । वंशस्थेन्द्रवंशाभ्यामुपजातिवृत्तम् ॥

जा तं जाव अहं णिएमि अवहे ता ताव खित्तो मुहा-
जीए! जीविअपारए सुसिसुणा दे मोत्तपावारअं ।

ऐमेव च्चिअ एवमेव णु बळो सक्खित्ति उत्तं तहिं
ता एक्कणवि अट्टमाणमइणा आवट्टमाणंसुणा ॥ ३ ॥

छाया—

यावत्तं यावदवटं पश्याम्यवटे तावत्तावत् क्षिप्तो मुधा-
जीवे ! जीवितप्रावारके सुशिशुना ते मुक्तप्रावारकम् ।
एवमेव च्चिअ एवमेव नु बलः साक्षीत्युक्तं तस्मिन्
तस्यैकेनापि आवर्तमानमतिना आवर्तमानाश्रुणा ॥

केनापि तस्यै यशोदायै तस्मिन् भगवति विषये इत्युक्तं निवेदितम् । आवर्तमाना क्षुभ्यमाणा मतिर्यस्य । आवर्तमानाश्रुणा पुनः पुनरुत्पद्यमानाश्रुणा । तात्कालिकमिदं विशेषणद्वयम् । उक्तिप्रकारमाह— हे मुधाजीवे ! शिक्षणीयस्य पुत्रस्य दौश्शील्योपेक्षणाद् वृथाजीवितधारिणि ! । जीवितप्रावारके जीवितस्य प्रावारकम् आच्छादकमेव शरीरं यस्य । अनेन शरीरस्यापि नैष्फल्यं सूचितम् । कुत एवमधिक्षेपः क्रियत इत्याह— यावद् यावदहं तमवटं गर्तं पश्यामि तावत् तावत्ते सुशिशुना अवटे क्षिप्तः पातितः । अत्रानुभूतमर्थं विषयीकरोति तच्छब्दः । मुक्तप्रावारकमिति क्रियाविशेषणम् । मम प्रावरणमाच्छिद्य मामप्यवटे क्षिप्तवानित्यर्थः । एवमेवैतदिति शेषः । न मयैवमारोप्याभिहितमित्यर्थः । एवमेव नु अत्रत्यानां वः सर्वेषां मयोक्तं निर्विवादं कच्चिदिति तत्रत्यान् वीक्ष्याभिहितमिदमिति द्रष्टव्यम् । 'नु पृच्छायां विकल्पे च' इति सिंहः । बलः बलभद्रः एव साक्षी ॥

"यावदादिषु वस्य"(४।५)इत्यनेन यावदादिषु शब्देषु विकल्पेन

---

१. 'एमेअ' ङ. २. 'तावत् क्षिप्तो' घ.
३. 'जीविते' घ. ४. 'तत्र' घ. ङ.
५. 'तस्याः केनापि' घ. ङ.

वकारलोपः । यावदवटतावज्जीवप्रावारकैवमेवावर्तमानचक्रवाकदेवकुल-शब्दा यावदादयः । अत्र श्लोके आवर्तमानान्ताः । वकारलोपे यस्य जत्वे अन्त्यहल्लोपः जा । यस्य जत्वे लोपाभावे जाव । वलोपे टस्य डत्वे अडं । †"दृशेः पुळ णिअ णिपच्छपेच्छा" (८।६९) इति णिआदेशे "इडूमिपोर्मिः"(७।३) इति मत्वे एत्वे णिएमि । टस्य डत्वे अवडे । तावच्छब्दस्य वकारलोपे ता । लोपाभावे ताव । क्षस्य खत्वे पलोपे द्विः खित्तो । धस्य हत्वे मुहाजीवे । "*आत ए" (५।२८) इत्यामन्त्रणविषये एत्वम् । तलोपे रलोपे जीविअपारए इति भवति । शकारद्वयस्य सत्वे सुसिसु इति भवति । "आङि च–"(६।२२)इत्यादिना दे । तुण्डरूपत्वादुत ओत्वे कलोपे तकारस्य द्वित्वे रलोपे कलोपे मोत्तपावारए इति भवति । वलोपे एमेव । ¶"च्चिअ च्चेअ अवधारणे"(९।३)इति च्चिअ । एवमेव । नस्य णत्वं णु । लस्य ळत्वं वळो । क्षस्य खत्वे ह्रस्वे द्वित्वे इतेरिकारलोपे सक्खित्ति । कलोपे द्वित्वे उत्ति । "तच्छब्दाद् §डेर्हिं वा"(६।७) इति तहिं । स्त्रीलिङ्गत्वेनाकारान्तात्तच्छब्दात् "टाङसि–"(५।२२) इत्यादिना एत्वं ताए । किंशब्दात् "[1]किमः कः" (६।१३) इति कत्वे "टामोर्णः"(५।४)इति णत्वे "ए च सुपि"(५।१२)इत्येत्वे अपिशब्दस्य सन्धावग्लोपे वत्वे केणवीति भवति । वकारस्य लोपे पूर्वस्य ह्रस्वे तस्य टत्वे द्वित्वे शानचो मानादेशे तलोपे अट्टमाणमइ इति भवति । "टा णा"(५।१७)इतीकारान्ताट्टा इत्यस्य णादेशः । उत्तरत्र वलोपाभावः ।

† "दृशेः पुलअणिअक्कअवक्खाः" (chow-edn.,)
"दृशेः पुलअणिअच्छअवक्खसच्चवाः" (Sarasvatibhavana edn.,)

* "स्त्रियामात एन्" इति मुद्रितपाठः ।

¶ "चिअ चेअ–" इति मुद्रितपाठः ।

§ "डेर्हि" इति मुद्रितपाठः ।

१. 'किमः को नपुंसक इति' क. ख.

अश्रुशब्दस्य वक्रादित्वाद् बिन्दुश्च विशेषः। आवट्टमाणंसुणा। शार्दूल-विक्रीडितं वृत्तम् ॥

चक्काअभूसं बहुचक्कवाइअं
  मादेउळं देवउळच्चणंबुअं।
काहीअ संखोहिअपाणिअं सरं
  सुओ हु तुज्झ त्ति अ केणवीरिअं ॥ ४ ॥

छाया—

चक्रवाकभूषं बहुचक्रवाकिकं
  मादेवकुलं देवकुलार्चनाम्बुजम्।
चकार संक्षोभितपानीयं सरः
  सुतो हु तवेति च केनापीरितम् ॥

केनापि पुंसा तस्यै यशोदायै इति च ईरितम्। उक्तिप्रकार-माह— तव सुतः मादेवकुलं मया श्रिया युक्तस्य देवस्य विष्णोः कुलं गृहं यस्मिन्। लाक्षणिकः प्रयोगः तीरगतविष्णुमन्दिरमित्यर्थः। तथा-विधं विशिष्टं सरः संक्षोभितपानीयं चकार। सरो विशिनष्टि— चक्र-वाकैः भूषा भूषणं यस्य। बहुचक्रवाकिकं बह्व्यः चक्रवाकिका यस्मिन्। देवकुलमर्च्यते एभिरिति देवकुलार्चनानि। तथाविधानि अम्बुजानि यस्मिन् सरसि। अनेन तेषां पद्मानामप्युपमर्दनं सूचितम्।

चक्रवाकदेवकुलशब्दौ यावदादी। "अन्त्यहलः" (४।६)

---

१. 'चक्काअ' क. ख, 'चक्काइ' ङ.

२. 'वाक्षसित:' क. ख.

इत्यनेनान्त्यस्य हलो लोपो विधीयते स्म । इन्द्रवज्रा वंशस्थं च अत उपजातिर्वृत्तम् ।

'विनीतमविनीतं वो बालगोपालविग्रहम् । अवनीतं नावनीतं कृष्णं द्रक्ष्ये कदान्वहम् ॥'

अण्णो वईअ अ रुआरुइविज्जुळद्दो
उद्धत्थणीरसरओ अह पावुसोव्व ।
खेपं सहासमउळं अणुठाइ मंदो
ऊ मज्झ तुज्झ तणओ सहिपंतिमज्झे ॥ ५ ॥

छाया —

अन्य उवाच च रुड्रुचिविद्युदार्द्र
ऊर्ध्वास्तनीरस[1]रदोऽथ प्रावृडिव ।
क्षेपं सहासमतुलमनुतिष्ठति मन्दः
ऊ[2] मम तव तनयः सखिपङ्क्तिमध्ये ॥

अन्यश्च उवाच । रुड्रुचिविद्युदार्द्रः रुषः क्रोधस्य या रुचिः दीप्तिः सैव विद्युद् दुर्निरीक्ष्यत्वात् तया आर्द्रः स्विन्नगात्रः । ऊर्ध्वेति— ऊर्ध्वमस्ता उत्तरोष्ठापनयनाद् विवृता अत एव नीरसाः शुष्का दन्ता अस्य । अयं खलु क्रोधस्वभावः । प्रावृडिव । अस्तं वर्षेण निरवशेषितं नीरं जलं यस्याः सा अस्तनीरा । ऊर्ध्वगता स्थानान्तरभाविनी अस्तनीरा च शरद् यस्याः प्रावृषः । तस्योक्तिप्रकारमाह— हे यशोदे! मन्दः मूढः तव तनयः सखिपङ्क्तिमध्ये सहासं सपरिहासं मम अतुलं क्षेपम् अधिक्षेपमनुतिष्ठति । ऊशब्दः सूचनार्थे ।

---

१. 'शरदिति च' ख. घ. ङ

२. 'ऊ इति क्षेपे विस्मये वा' घ. ङ.

"स्त्रियामात्" (४।७) इत्यनेनान्त्यस्य हलः आकारादेशः। अत्रान्त्यहल इत्यस्य पञ्चम्यन्तत्वेन किल योजना। अतस्तस्योपर्याकारप्रयोगः। *"न विद्युति" (४।९) इत्यनेनाकारो निषिद्ध्यते। "अन्त्यहलः"(४।६)इति तकारलोपः। ‡"विद्युत्पीताभ्यां ळः"(४।२६) इति स्वार्थे ळप्रत्ययः विज्जुळा। "शरदो दः"(४।१०) इत्यनेन शरच्छब्दस्यान्त्यहलो दकारः। तस्य प्रायोलोपः सरओ। प्रावृट्शब्देऽन्त्यहलः सकारः ¶"प्रावृषः सः"(४।११)इत्यनेन "नसान्तप्रावृट्छरदः पुंसि" (४।१८) इति पुल्लिङ्गत्वं पाउसो। "मो बिन्दुः" (४।१२) इत्यनेनान्त्यहलभूतस्य मकारस्य बिन्दुः लेपं। "अचि मश्च"(४।१३) इत्यनेन अचि परतो मकारस्य मकार एव। चकाराद् बिन्दुश्च। सहासमउळं अणुठाइ। "नङोर्हलि" (४।१४) इत्यनेन नकारङकारयोर्हलि परतो बिन्दुः। नकारस्य बिन्दौ णंदो। ङकारस्य बिन्दौ पंति। वसन्ततिलकं वृत्तम्॥

वंकं तंसमुहं पडिंसुअमहादोब्भग्गमंसुच्चअ-
　　प्फंसा पुंबकअंसुदंसणजुओ गिंठीसरं सुंकिअं।
तं घोसे अहिजुंतमज्ज थविरं माणंसिणीए खु दे
　　वच्छो वाइइ केणविन्ति कहिओ सुंसूइअण्णो वओ॥६॥

छाया –
वक्रं त्र्यश्रमुखं प्रतिश्रुतमहादौर्भाग्यश्मश्रूच्चय-
　　स्पर्शात् पूर्वकृताश्रुदर्शनयुगो गृष्टीश्वरं शुल्किकम्।

---

* 'रो रा' (४।८) इति सूत्रं नोदाहृतम्।

‡ "विद्युत्पीताभ्यां वा ळः" इति मुद्रितपाठः।

¶ "दिक्प्रावृषोः सः" इति मुद्रितपाठः।

तं घोषे अभियुक्तमद्य स्थविरं मनस्विन्याः खु ते
वत्सो बाधते केनापीति कथितं शुश्रूषितादन्यद् वचः ॥

केनापि पुंसा शुश्रूषितात् श्रोतुमिष्टादन्यत् श्रोतुमनिष्टं वचः इति कथितम् । हे यशोदे! मनस्विन्याः मनस्विन्यहमित्यभिमन्यमानायाः । खु निश्चये । तादृश्यास्ते वत्सः स्थविरं गृष्टीश्वरं गृष्टीनां गवामीश्वरं प्रतिश्रुतमहादौर्भाग्यश्मश्रूच्चयस्पर्शाद् बाधते प्रतिश्रुतमाख्यातं लक्षणहीनत्वान्महादौर्भाग्यं येन तस्य श्मश्रूच्चयस्य चिबुकमात्रे विरळत्वेन प्ररूढस्य स्पर्शात् स्पर्शं विधाय शिरसा सहाकृष्य बाधते । ल्यब्लोपे पञ्चमी 'प्रध्ये जला'दिति भर्तृहरिवचनवत् बाधते पीडयति नित्यश इति शेषः । गृष्टीश्वरे दृश्यमाने कृष्णः शीघ्रं तस्य चिबुके गृहीत्वा पीडयतीति तात्पर्यार्थः । स्वयं पूर्वकृताश्रुदर्शनयुगः स्वापराधापह्नवाय बाधनात् पूर्वं कृताश्रु मृषोत्पादिताश्रु दर्शनयुगं नयनयुग्मं येन । गृष्टीश्वरमेव विशिनष्टि— वक्रं वक्रशरीरम् । त्र्यश्रमुखम् उभयोर्गण्डयोर्बृहत्त्वात् चिबुकस्य कृशत्वाच्च त्र्यश्राकारं मुखं यस्य । अद्य घोषे शुल्किम् अभियुक्तं शुल्कस्य राजदेयस्य भागस्य इयत्तापरिज्ञानार्थं कंसेन नियुक्तम् ।

"वक्रादिषु"(४।१५) इत्यनेन वक्रादिषु शब्देषु संयोगात् पूर्वं बिन्दुर्विधीयते वंकं इत्यादि । वक्रत्र्यश्रप्रतिश्रुतश्मश्रुस्पर्शपूर्वाश्रुदर्शनगृष्टिशुल्काभियुक्तमनस्विनीशुश्रूषाशब्दा वक्रादयो दर्शिताः । शार्दूलविक्रीडितं वृत्तम् ॥

मंसं घसंतो अइमांसळं हरी
रण्णेसु णूणं अह सम्मुहं गए ।

कहं दरं खाइ ण कण्हमोइए
वच्छे तदाणिं किणविित्ति संअं ॥ ७ ॥

छाया—

मांसं ग्रसन्नतिमांसळं हरि-
रण्येषु नूनमथ सम्मुखं गतान् ।
कथं दरं खादेन्न[1] कृष्णमोचितान्
वत्सान् तदानीं केनापीति शंसितम् ॥

तदानीं निवेदनसमये केनापि यशोदायै इति शंसितं निवेदितम् । शंसनप्रकारमाह— अरण्येषु वनप्रदेशेषु अतिमांसलं मांसं ग्रसन् भक्षयन् हरिः सिंहः नूनम् । अस्तीति शेषः । हरिशब्देनात्र व्याघ्रादयोऽन्ये क्रूरसत्त्वा अप्युपलक्ष्यन्ते । अथ तस्मात् कृष्णमोचितान् कृष्णेन स्वेच्छया मोचितान् सम्मुखं गतान् स्वनिवासस्थस्य हर्यादेरभिमुखं गतान् वत्सान् कथं दरमीषदत्र श्रमेण । न खादेत् खादेदेवेत्यर्थः । अत्रैतदुक्तं भवति— कृष्णोऽस्मान् कदर्थीकृत्य वत्सान् मोचयित्वा कैश्चिद् दारकैः सह धाष्ट्यात् क्रूरमपि वनं प्रविशति । तथा च सति सिंहादिः तानवश्यं भक्षयेदेव । अतो वयं भीततरा इति ।

"मांसादिषु वा"(४।१६)इत्यनेन मांसादिषु शब्देषु विकल्पेन बिन्दुसद्भावपक्षो दर्शितः । अभावपक्ष उत्तरश्लोके दर्शयिष्यते । मांसमांसळनूनंसम्मुखकथंदरंतदानींशब्दा मांसादयः । उपजातिवृत्तम् ॥

मासममासळळं तवाळए
णूण सम्मुह गओ वणे कह ।

---

१. 'खादति न' घ.

भाइ म दर सुओ सुएण दे
कणवित्ति अ तदाणि संसिअं ॥ ८ ॥

छाया

मांसमांसळलसद्व्याळके
नूनं सम्मुखं गतो वने कथय ।
बिभ्येद् दरं सुतः सुतेन ते
केनापीति च तदानीं शंसितम् ॥

कृष्णेन सह सदा गमनशीलस्य कस्यचिद् गोपशिशोः पित्रा केनाचिद् गोपेन तदानीं यशोदायै इति शंसितम् । तत्प्रकारमाह— ते सुतेन सह वने सम्मुखं गतः मम सुतः कथं दरमीषद् बिभ्येद् अधिकमधिकं बिभ्येदेव । तव सुतेन सहास्मत्सुतमाकृष्य गमनं कर्तुमशक्यमित्यभिप्रायः । अत्यन्तभयस्य हेतुगर्भतया वनं विशिनष्टि— मांसेति । मांसेन मांसभक्षणेन मांसळा बृहत्काया लसन्तो व्याळा दुष्टमृगा यस्मिन् । नूनमिति निश्चयेऽपि । बिन्दुभावपक्षः प्रदर्शितः । रथोद्धतावृत्तम् ॥

तेषां निवेदनं परिसमापयति—

इत्थ[1]ण्ठाणञ्जसोआसवणे[2]मुपगओ तस्स कीळाण जम्मो
जस्सी तेओ [3]णिसग्गा मुणिमणसुणिओ पाउसो [4]संजरे जो ।
तेळ्ळोक्कंभोअबोहे णवअरसरदो आगमाणं सिरं जं
सव्वव्वत्तं णहं [5]विञ्चि अ सइ अविआरप्पमाठाइ तत्तं ॥

---

१. 'त्थं ठाणं जसोआ' क. ख. ङ. २. 'णमणुगओ' ङ.
३. 'णिमग्गा' ङ. ४. 'सञ्जरे' ङ. ५. 'व च्चिअ' ङ.

छाया—

इत्थं स्थानं यशोदाश्रवणमुपगतं तस्य क्रीडानां जन्म
यस्मिंस्तेजो निसर्गान्मुनिमनोजातः प्रावृट् संज्वरे यः।[1]
त्रैलोक्याम्भोजबोधे नवतरशरदागमानां शिरोऽयं[2]
सर्वव्याप्तं नभ इव [3]चिअ सदा अविकारात्मातिष्ठते[4] तत्त्वम् ॥

इत्थम्भूतानां नवनीतापहारादिलक्षणानां क्रीडानां जन्म उद्भवं यशोदाश्रवणं स्थानं यशोदाकर्णविवरात्मकमवकाशमुपगतं प्राप्तम्। यस्मिन्निसर्गात् स्वभावात् तेजः दीप्तिः। देहगतकान्तिरेवास्य दिव्यत्वज्ञापनायालमित्यर्थः। मुनीति- मुनीनां मननशीलानाम्। "मनेरुच्चोपधायाः" इति मनिधातोरुणाद्युत्पत्तिः। तेषां मानसाज्जातो यः। यः सञ्ज्वरे सम्भृतज्वरे जननादिसंसारतापयुक्ते प्रावृट्। तापनिराससाम्यात्। यस्मिन् ज्ञाते तापाः सर्वे नश्येयुरित्यर्थः। यः त्रैलोक्याम्भोजबोधे नवतरशरत् त्रैलोक्यरूपस्याम्भोजस्य प्रलयनिशायामनभिव्यक्तकारणात्मना स्थितस्य बोधे विकासे अभिव्यक्तौ सृष्टौ नवतरा नित्यनूतना शरत्। नित्याभिनवत्वाच्छरच्छब्देन तत्कालभव आदित्य उपचर्यते। ननु परतत्त्वस्य परमार्थभूतस्य परब्रह्मण एव स्वरूपेण कथञ्चिन्मनोमात्रवेद्यत्वं सकलरूपेण प्रपञ्चनिमित्तत्वमुपादानकारणत्वम् उपास्यत्वं च श्रुतिमस्तकप्रसिद्धम्। तत् कथं कृष्णे घटते। नैष दोषः। अस्यैवेतिहासपुराणादिप्रामाण्यात् परब्रह्मत्वसिद्धेरिति द्योतयन् विशिनष्टि- आगमानामिति। यश्चिअ अयमेव आगमानां शिरः उपनिषद्भागः नभ इव सर्वव्याप्तं सर्वगतं सदा अविकारात्म अविकारस्वरूपं तत्त्वमातिष्ठते आस्थां करोति तात्पर्येण प्रतिपादयतीत्यर्थः। शिरोऽत्र कर्तृ।

---

१. 'यम्' ङ. २. 'यत्' क. ख. 'यः' ङ.
३. 'चिअ इत्यवधारणे सदा' ङ. ४. 'त्ममाति' क. ख.

"*झलि तद्वर्गान्त्यः"(४।१७) इत्यनेन झलि परतस्तद्वर्गान्त्य आदेशो विधीयते । परिशेषाच्चवर्गटवर्गयोः । "नङोर्हलि"(४।१४)"अचि मश्च"(४।१३)इति च नङमानां विध्यन्तरदर्शनात् । इत्थण्ठाणञ्झोआ । "नैसान्तप्रावृट्शरदः पुंसि"(४।१८) इत्यनेन नकारान्तादीनां पुंस्त्वं विधीयते । जम्मो तेओ पावुसो सरदो । "न शिरोनभसी"(४।१९) इत्यनेन पुंस्त्वमेतयोः प्रतिषिद्ध्यते सिरं णहं । स्रग्धरावृत्तम् ॥

पट्ठीए जस्स देवा उरुरणसमए जस्स पट्ठं ण दिट्ठं
सत्तूहिं जस्स अच्छी जळरुहसरिसं जस्सिमच्छी सिरिए ।
पण्हा जस्सिं मुणीणं सइ वि सुविइउं जस्स पण्हो ण काउं
भत्ताणं चिन्तिआदो अहिअअरफळं ओगओ ओमळो जो ॥

छाया –

पृष्ठे यस्य देवा उरुरणसमये यस्य पृष्ठं न दृष्टं
शत्रुभिर्यस्याक्षि जलरुहसदृशं यस्मिन्नक्षि श्रियः ।
प्रश्नो यस्मिन्मुनीनां सदापि सुवेत्तुं यस्य प्रश्नो न कर्तुं
भक्तानां चिन्तितादधिकतरफलमवगतोऽपमलो यः ॥

यस्य पृष्ठे देवाः । देवानामेनं भगवन्तं पुरस्कृत्य सदा प्रवर्तमानत्वात् । शत्रुभिः उरुरणसमये यस्य पृष्ठं न दृष्टं कदाचिदपि युद्धवैमुख्या-

* 'ग्यि तद्वर्गान्तः' (Chow-edn.,)
'कपि तद्वर्गान्तः' (Sarasvati-edn.,)

१. 'वर्गावर्ग', २. 'अश्चिमश्चा इति', ३. 'नन्दमा',
४. 'त्थठाणजमाआ', ५. 'स्नन्तप्रा' क. ख.
६. 'अदिट्ठ' ङ. ७. 'स्याक्षिणी' ङ.
८. 'सदृशे' ङ. ९. 'दा सुवेत्तुं' क. ख.

भावात् । यस्याक्षि जलरुहसदृशं पङ्कजोपमम् । यस्मिन् श्रियः लक्ष्म्याः अक्षि अस्मिन्नौत्सुक्यातिशयात् । मुनीनां सुवेत्तुं सुष्ठु ज्ञातुं साक्षात्कर्तुं यस्मिन् सदा प्रश्नः यस्य भक्तानां चिन्तितात्तन्मनोरथादधिकतरफलं कर्तुं न प्रश्नः । भक्तानां मनसि यद् वाञ्छितं वर्तते तत् प्रश्नं विना तस्मादधिकं फलं स्वयमेव ददातीत्यभिप्रायः । यः अपमलः अपगतः अविद्याकामकर्मरहित इति ज्ञातः । अथवा यस्य प्रश्नः ज्ञातुं न तु ज्ञात्वा । कर्तुं कर्म वोपासनं वानुष्ठातुम् । ज्ञेयस्यैव सुखसाक्षात्कारेण फलरूपत्वात् ज्ञानेनात्मनः कर्तृत्वाद्यभिमानबाधाच्च । यः भक्तानां चिन्तितादधिकतरं फलमवगतः चिन्तिताद् ध्यानात् साधनात् न्यक्कृतकर्मफलत्वेन परमपुरुषार्थस्वरूप इत्यवगतः । अपमलः दुःखरूपप्रपञ्चमल-रहितः ।

"पृष्ठाक्षिप्रश्नाः स्त्रियां वा"[1] (४।२०) इत्यनेन पृष्ठादिशब्दानां वा स्त्रीत्वं पट्ठीए पट्ठं । अच्छी अच्छि । पण्हा पण्हो । "ओद-वापयोः"(४।२१)इत्यनेनावापयोरुपसर्गयोरोत्वम् । ओगओ ओमलो । स्रग्धरावृत्तम् ॥

समाअदाए कअबाळअत्तणं
घेत्तूण काऊण अ किंवि[2] सासणं ।
तं ओक्खळे बन्धिउमासि गोविआ
जो भासिरो सो भवबंधमोक्खदो ॥ ११ ॥

छाया—

समायतया कृतबालकत्वं
गृहीत्वा कृत्वा च किमपि शासनम् ।

१. 'प्रश्नानां स्त्रियां वा' क. ख. २. 'पि' ङ.

तमुलूखले बन्धुमासीद् गोपिका
यो भासिता स भवबन्धमोक्षदः ॥

गोपिका यशोदा तं गृहीत्वा किमपि शासनं कृत्वा उलूखले बन्धुमासीत् । प्रवृत्तेति शेषः । समायतया मायासहितत्वात् कृतबालत्वं परिगृहीतबालभावम् । यः स मायावानपि स्वतो निर्मायः । भासिता भासनशीलः स्वयंप्रकाशमानचैतन्यस्वरूपः । अत एव भवबन्धमोक्षदः ब्रह्माकारान्तःकरणवृत्तिसमारूढतयास्यैव मोक्षप्रदत्वात् ।

" तल्त्वयोर्दात्तणौ "(४।२२)इत्यनेन तल् त्व इत्येतयोर्दात्तणावित्यादेशौ विधीयेते । समाअदाए कअबाळअत्तणं । " *क्त्व तूण " (३।२३) इत्यनेन क्त्वाप्रत्ययस्य तूण इत्ययमादेशः । भासिरो घेत्तूण काऊण । " घेत् क्त्वातुमुंस्तव्येषु " (८।१६) इति गृह्णातेर्घे इत्यादेशः । " कृञः का भूतभविष्यतोश्च "(८।१७) इति करोतेः कादेशः " ¶तृच इर शीले "(४।२४) इत्यनेन तृच् प्रत्ययस्य इरादेशः । भासिरो । इन्द्रवंशावृत्तं वंशस्थं च ॥

पेम्माळू अह पेम्मिअळळणअणं रोउळळवच्छोइअं
खेइळ्ळं भअवंतमप्पतणुअं धीइन्तमब्भन्तरे ।
वच्छं वच्छअ दुट्ठ वेच्चसु तुवं चोरेसु सक्कोसि ए
[1]संसीअ त्ति अ तं तिविक्कमसहो गोपी पहासुत्तरं ॥

---

* ' क्त्व ऊणः ' मुद्रितपाठः ।

¶ ' तृण इरः शीले ' (chow-edn.,) ' तृन इर शीले ' Sarasvati Bhavana-edn.,

---

१. ' संसीए त्ति ' ङ.

छाया—

प्रेमवत्यथ प्रेमवन्नयनं रोदवद्वत्सोचितं
खेदवन्तं भगवन्तमात्मतनुजं धीमन्तमभ्यन्तरे ।
वत्सं वत्सक दुष्ट व्रज त्वं चोरय शक्तोऽसि चे-
च्छशंसेति च तं त्रिविक्रममहो गोपी प्रहासोत्तरम् ॥

किमपि शासनं कृत्वेत्युक्तम् । तत्प्रकारमाह— अथ श्रवणानन्तरं गोपी वत्समात्मतनुजं त्रिविक्रमं भगवन्तं अभ्यन्तरे प्रहासोत्तरमिति शशंस च उक्तवती । कीदृशी– प्रेमवती । पुत्रस्य हितेच्छुरिति यावत् । कीदृशं प्रेमवन्नयनं नयनयोः प्रेमप्रकाशकमित्यर्थः । रोदवतां बालानामुचितं यथा भवति तथा खेदवन्तम् । बाला यथा खेदवन्तो रुदन्ति तथा वर्तमानमित्यर्थः । धीमन्तं कृत्रिममपि भयादि अकृत्रिममिव कर्तुं समर्थम् । शंसनप्रकारमाह— हे वत्सक! बालक! दुष्ट! त्वं शक्तोऽसि चद् व्रज चोरय । यथा तव गन्तुं चोरयितुमप्यशक्यं भवति तथा त्वामहं बध्नामीत्यर्थः । शसनस्य प्रहासप्रधानत्वं क्रोधस्वभावः ।

"*आल्विल्लोल्लालवन्तेन्ता मतुपः" (४।२५) इत्यनेन मतुपः आल्वादयः षडादेशा भवन्ति । आलु पेम्मालू, इअल्ल पेम्मिअळ्ळ, उल्ल रोउळ्ळ, इल्ल खेइळ्ळ, वन्त भअवन्त इन्त धीइन्त । "¶स्वार्थे का वा" (४।२६) इत्यनेन स्वार्थे कप्रत्ययः वच्छअ । शार्दूलविक्रीडितं वृत्तम् ।

* 'आल्विल्लोल्लाल—' इति मुद्रितपाठः ।

¶ सूत्रमिदं चौखाम्बापुस्तके नास्ति ।

१. 'भयवन्तं' घ. २. 'तनूजं' घ.

३. 'हे वत्स! केषु बालेषु दुष्ट' क. ख.

खे विज्जुळा वारिवहं व पीअळं
जं विज्जुपीअम्बरमिंदिरा पइं ।
उरम्मि णीळं कुणए हु [1]पीअवं
[2]भावुंदरंगा सुरवुंदवंदिअं ॥ १३ ॥

छाया—
खे विद्युद् वारिवाहमिव पीतं
यं विद्युत्पीताम्बरमिन्दिरा पतिम् ।
उरसि नीलं करोति[3] हु पीतं
[4]भावृन्दाङ्गा सुरवृन्दवन्दितम् ॥

भावृन्दाङ्गा शोभासमायुक्ताङ्गा पीता इन्दिरा लक्ष्मीः सुरवृन्द-वन्दितं नीलं यं पतिम् उरसि स्वनिवासात् पीतं करोति । खे आकाशे विद्युत् तटित् वारिवाहमिव मेघमिव । विद्युत् स्वयं पीता नीलं मेघं स्वनिवासस्थाने पीतं करोति । विद्युदिव पीतमम्बरं यस्य तम् । त्रिविक्रममिति पूर्वश्लोकेन सम्बन्धः । मेघपक्षे अम्बरमाकाशम् । हुशब्दः सम्भावनार्थकः ।

“ *विद्युत्पीताभ्यां ळः ” (४।२६) इत्यनेन विद्युत्पीताभ्यां परं स्वार्थे विकल्पेन ळप्रत्ययो विधीयते विज्जुळा पीअळं । अभावे विज्जु-पीअम्बरं । “ अन्त्यहलः ”(४।६)इति तकारलोपः । “ †पीताद्वश्चेति

* ‘ विद्युत्पीताभ्यां वा लः ’(chow-edn.) ‘ विद्युत्पीतयोर्ळः ’ (Sarasvati Bhavana- edn.,)

† सूत्रमिदं मुद्रिते न दृश्यते ।

१. ‘ पीअं ’ क. ख ङ. २. ‘ भावुंदसंगा ’ ङ. ३. ‘ ति खलु पी ’ घ.
४. ‘ भावृन्दाङ्गात्सुर ’ क ख, ‘ भावृन्दसङ्गात् सुर ’ ग. ङ.

वक्तव्यम्" । पीतशब्दाद् वत्वं च पीअवं । $"वृन्दे दो रः"(४।२७) इत्यनेन वृन्दशब्दे दकारात् परं[1] वा रादेशः । माबुंदरंगा सुरवुंदवंदिअं । इन्द्रवंशावृत्तं वंशस्थं च ॥

सुअं कणेरूव्व करेणुगामिणं
आणाळखम्भे व भअप्फइत्थुअं[2] ।
बन्धूण जाआ मइळस्समंसुणा
चित्तेण रोसा मळिणेण दूसिआ ॥ १४ ॥

छाया—

सुतं करेणुमिव करेणुगामिनं
आलानस्तम्भ इव बृहस्पतिस्तुतम् ।
बद्ध्वा याता मलिनास्यमश्रुणा
चित्तेन रोषान्मलिनेन दूषिता ॥

विलासयुक्तत्वात् करेणुरिव गजस्त्रीव वर्तमाना यशोदा सुतं कृष्णमालानस्तम्भे गजबन्धनस्तम्भे इव उलूखले बद्ध्वा याता निजकृत्यायेति शेषः । करेणुरिभः तद्वद् गमनं यस्य । 'करेणुरिभ्यां स्त्री नेभे' इति सिंहः । बृहस्पतिः सुराचार्यः तेन स्तुतम् । अश्रुणा नयनजलेन मलिनमास्यं यस्य स तथा । तां विशिनष्टि— रोषात् स्वपुत्रस्य दौःशील्यजनिताद् दुःखरूपात् क्रोधात् मलिनेनाप्रसन्नेन चित्तेन मनसा दूषिता विकृतिं प्रापिता ।

---

$ 'वृन्दे वो रः' (chow-edn.,), 'वृन्दे दो वः' (Sarasvati bhavana-edn.,)

---

१. 'परं रादेशः' क. ख. २. 'हअप्फइ' क. ख.

"स्थितिपरिवृत्तिः" स्थितिः स्थानं तस्य परिवृत्तिर्विपरिवर्तनम् उपर्यधोगतयोर्द्वयोरक्षरयोर्वैपरीत्यं भवति इतः परमापरिच्छेदान्तं विकल्पेनेत्यस्य सूत्रस्यार्थः । आधिकारिकं सूत्रमिदम् । "*करेण्वां रणोः" (४।२८) इत्यनेन गजीवाचिनि करेणुशब्दे रेफणकारयोः परिवर्तनं कणेरुव्व । तदभावे करेणुगामिणञ् । "आलाने लनोः"(४।२९) इत्यनेनाळानशब्दे ळकारनकारयोर्वा परिवर्तनम् आणाळक्खंभे व । "†बृहस्पतौ बहोर्भऔ" (४।३०) इत्यनेन बृहस्पतिशब्दे बकारहकारयोर्[1]भकाराकारादेशौ भअप्फइत्थुअं । "मलिने लिनो रिळो वा"(४।३१) इत्यनेन मलिनशब्दे लकारनकारयोर्वा इळादेशः क्रमाद्भवति । मइळस्समंसुणा रोसामळिणेण । इन्द्रवंशा वंशस्थं च वृत्तम् ॥

ताए घरं गहवईअ गआइ कण्हो
तं ओक्खळं खलखलात्ति रवेण णिन्तो ।
जुग्गज्जुणाण अह मज्झगओ दुअं ते
काहीअ भग्गविडपे पडिए धराइ ॥ १५ ॥

छाया—

तस्यां गृहं गृहवत्यां गतायां कृष्णः
तदुलूखलं खलखलेति रवेण नयन् ।

* 'करेण्वां रणोः स्थितिपरिवृत्तिः' इति मुद्रितपाठः । अत्र तु 'स्थितिपरिवृत्तिः' 'करेण्वां रणोः' इति द्वे सूत्रे ।

† 'बृहस्पतौ बर्होर्हयः' क. ख. 'बृहस्पतौ बहोः' (Sarasvati-bhavana edn.)

1. 'हयादेशः । हयप्फइत्थुअं' । क. ख.

युग्मार्जुनयोरथ मध्यगतो द्रुतं तौ
चकार भग्नविटपौ पतितौ धरायाम् ॥

गृहवत्यां गृहस्वामिन्यां तस्यां यशोदायां गृहं गतायां कृष्णः खलखलेति रवेण शब्देन तदुलूखलं नयन् युग्मार्जुनयोर्मध्यगतः द्रुतं शीघ्रं तौ युग्मार्जुनौ भग्नविटपौ भग्नशाखौ धरायां पतितौ चकार।

"गृहस्य घरोऽपतौ" (४।२२) इत्यनेन अपतिशब्दपरस्य गृहशब्दस्य घरादेशः घरं। पतिशब्दोत्तरपदे गहवई। नयतेर्धातोः "न्तमाणौ शतृशानचोः"(७।१०) इति न्तादेशे 'दीर्घस्य ह्रस्वता नित्या संयुक्तोत्तरता यदि' इति ह्रस्वे 'नो णः' इति णत्वे णिन्तो इति रूपं भवति। वसन्ततिलकावृत्तम् ॥ 'आकृष्योलूखलं तिर्यग्गतं सोऽर्जुनभञ्जनम्। करिष्यन्नपि सारथ्यं तस्य चक्रेऽद्भुतार्भकः' ॥

दाढासिप्पिं भुमअमवह्नोवासलग्गं णिडाळे
एण्हिं धीदा भुवणविहुणो संवहन्तीव मिच्चू।
जा दे कण्हं घसइ ण खले! ता इमं ओक्खळादो
मोत्तुं पावे! कुणसु भणिआ तत्थ इत्थं जसोआ ॥ १६॥

छाया—

दंष्ट्राशुक्तिं भ्रुवमुभयपार्श्वलग्नां ललाटे
इदानीं दुहिता भुवनविभोः [1]संवहन्तीव मृत्युः।
[2]यावत् ते कृष्णं ग्रसति न खले तावदिममुलूखला-
न्मुक्तं पापे कुरुष्व भणिता तत्रेत्थं यशोदा ॥

---

१. 'न्तीहु मृत्युः' ङ, 'न्ती खलु मृत्युः' घ.
२. 'यावत् तावत् कृष्णं' घ.

तत्र तस्मिन् काले यशोदा इत्थं भणिता उपायेन कृष्णं मोचयितुमुक्ता तत्रत्यैः सर्वैः जनैरिति सिद्ध्यति। उक्तिप्रकारमाह— हे खले कठिनचित्ते पापे पापयुक्ते इदानीं दंष्ट्राशुक्तिं शुक्तिवद्धवळतरां दंष्ट्रां वहन्ती ललाटे उभयपार्श्वलग्नां भ्रुवं च वहन्ती भुवनविभोर्भुवनसंहर्तृ रुद्रस्य दुहिता भद्रकालीव मृत्युरन्तकः वनमध्यगतमुलूखलपीडितमाचिन्तितपतितप्रतिभयार्जुनविटपिविटपान्तरितं ते कृष्णं यावन्न ग्रसति तावदेवैनमुलूखलान्मुक्तं कुरुष्व इति। ते कृष्णमित्यनेन कृष्णस्य सङ्कटे तवात्यन्तासहनीया पीडा भविष्यति। अस्माकं तु त्वत्सम्बन्धादेव कृष्णे प्रीतिरिति सूच्यते।

"दाढादयो बहुलम्" (४।३३) इत्यनेन दंष्ट्रादीनां शब्दानामर्थे दाढादयः शब्दा बहुळं निपात्यन्ते। दंष्ट्रा दाढा शुक्ति सिप्पि। भ्रूर्भुमआ उभय मवहो ललाटं निडाळ इदानीं एण्हिं दुहिता धीदा इत्यादि। दंष्ट्रादिराकृतिगणः। असंख्येयत्वाद् यत्र प्राकृतपदं न संस्कृतानुसारि दृश्यतेऽत्र दंष्ट्रादिषु तदिति प्रायशो ग्राह्यम्। 'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ तौ गुरू चेत्' इति वृत्तरत्नाकरे॥

ताए विमुक्तो अह सो वि गोळा-
णिळेहकंदोट्टविणिन्दिविग्गहो।
मळूरसुन्देरफिओ समिद्ध-
माअन्ददोग्घट्टवणेसु खेळिओ॥ १७॥

छाया —

तया विमुक्तोऽथ सोऽपि गोदावरी-
नीलोत्पल[1]विनिन्दिविग्रहः।

---

१. 'लविनिन्दितवि' क. ख. ध.

मण्डूकसौन्दर्यस्फिक् समृद्ध-
चूतवारणवनेषु खेलितः ॥

अथ तया यशोदया विमुक्तः सोऽपि समृद्धचूतानि वारणवनानि गजवनानि तेषु खेलितः क्रीडितः । गोदावर्या यानि नीलोत्पलानि वर्णप्रकर्षात् तिरस्कारि विग्रहं शरीरं यस्य । मण्डूकवत् सौन्दर्ययुक्ते स्फिजौ यस्य ।

"*गोदावर्यादीनां वा" इत्यनेन विकल्पेनैव गोदावर्यादीनां दाढादिषु प्रयोगः । पूर्वत्र दाढादिषु बहुळत्वम् । अत्र गोदावर्यादिषु विभाषामात्रमिति विशेषः । 'इन्द्रवज्रा च वंशस्थमिन्द्रवज्रेन्द्रवंशिका । क्रमाच्चतुर्षु पादेषु मिश्रत्वादुपजातिता ॥'

गोआवरीणीळमहुप्पळासिए
मण्डूकसद्दप्पमुहा अदूसिए ।
तस्सिं वणे सो धुअचूअवल्लवो
सिरिं विओ आसि अ वारणो विअ ॥ १८ ॥

छाया—

गोदावरीनीलमहोत्पलासिते
मण्डूकशब्दप्रमुखाददूषिते ।
तस्मिन् वने स धुतचूतपल्लवः
श्रीप्रिय आसीच्च वारण इव ॥

स श्रीप्रियः विष्णुः तस्मिन् वने गजवने वारण इव बहुविलास-

---

* सूत्रमिदं मुद्रितपुस्तकयोर्नास्ति ।

युक्तत्वाद् गज इवासीच्च । सर्वत्र सविलासं स्वैरं चचारेत्यर्थः । वनं विशिनष्टि — गोदावरीनीलमहोत्पलवदसिते कृष्णवर्णे वृक्षाणां बहुत्वाद् रविकरप्रवेशाभावान्मूले जलसन्निहितत्वाच्च वर्णानां कार्ष्ण्यातिशय इत्यवसेयम् । सण्डूकशब्दप्रमुखाद् मण्डूकशब्दझिल्लिकास्वरादयोऽरमणीयपदार्था अपि बहुरमणीयपदार्थास्पदत्वात् तद् दूषयितुं नालमित्यर्थः । धुतचूतपल्लवः धुताः कम्पिताः चूतपल्लवा येन । वारणसाम्यप्रसिद्ध्यर्थमिदं श्रीप्रियविशेषणम् । श्रीप्रियत्वं वारणेऽपि भवति । 'इयं हि श्रीयुत्करिण' इति वचनात् ।

पूर्वस्मिन् श्लोके गोदावर्यादीनां दाढाद्यन्तर्भाव उक्तः । अस्मिंस्तद्राहित्यम् । आद्येषु त्रिषु पादेषु इन्द्रवंशा, चतुर्थे वंशस्थम् अत उपजातिवृत्तम् ॥

नवद्विपद्यै रचितोऽत्र काव्ये
श्रीचिह्नसंज्ञे विवृतश्चतुर्थः ।
सन्नागकात्यायनसूत्रलक्ष्य-
स्तुर्ये परिच्छेदवरे ससर्गः ॥

इति गोविन्दाभिषेके सङ्कीर्णकार्यविलसितं नाम

चतुर्थः सर्गः समाप्तो

विवृतश्च ।

---

## अथ पञ्चमः सर्गः ।

पूर्वं बृहद्वने वसतो वासुदेवस्य क्रीडनमुक्तम् । इदानीं बृन्दावन-गमनादि वर्ण्यते—

कण्हो गोवा अ वच्छे वसअणमअळोहेण बाळाण सेहिं
गोहिं घेत्तूण जाओ सह अ रिवुवहत्थेण वुन्दावणं तं ।
घोसा संसेविआदो सकअवअभअक्खोहदुट्ठादु सप्फं
च्छीणं पत्ताहि मण्णे उवरअमउळं तस्स घोसस्स पुण्णं ॥

छाया—

कृष्णो गोपाश्च वत्सान् वृषगणमचलौघेन बालानां स्वै-
गोंभिर्गृहीत्वा यातः सह च रिपुवधार्थेन बृन्दावनं तत् ।
घोषात् संसेवितात् स्वकृतवृकभयक्षोभदुष्टाच्छष्पं
क्षीणं प्राप्तान्मन्ये उपरतमतुलं तस्य घोषस्य पुण्यम् ॥

कृष्णः चकाराद्रामश्च संसेवितात् सम्यक् चिरं सेविताद् घोषाद् घोषस्थानभूताद् बृहद्वनाद् बृन्दावनं यातः। गोपाश्च याता इति वचन-विपरिणामः। किं कृत्वा वत्सान् वृषगणं च गृहीत्वा। बालानाम् अच-लौघेन सह भगवति भक्ततमत्वात् तेषां तत्समीपादचलनम्। तथाविधेन ओघेन समूहेन स्वैर्गोभिश्च सह। किमर्थं यातः रिपुवधार्थेन रिपुवध-प्रयोजनेन हेतुना। पुनरपि रिपून् धर्मद्विषः उद्धर्तुमित्यर्थः। घोषं विशिनष्टि- स्वकृतेति। स्वकृतेन आत्मना कृतेन वृकभयेन यः क्षोभः सञ्चलनं तेन दुष्टाद् वस्तुमशक्यात्। एतद्धरिवंशानुसारेणोक्तम्। तत्र हि किञ्चित्कारणमुत्पाद्यास्माद् देशाद् गन्तव्यमित्यभिप्रायवता भगवता

स्वदेहाद् वृकाः सृष्टा[1] इत्युक्तम् । तथाहि—'घोराश्चिन्तयतस्तस्य स्वतनूरुहजास्तदा । विनिष्पेतुर्भयकराः सर्वशः शतशो वृकाः ॥' इति । क्षीणं उत्सन्नप्रायं शष्पं प्राक्षात् । शष्पाभावेन गवां वस्तुमशक्यत्वमुक्तम् । कविरूढप्रकारमाह– मन्ये इति । तस्य घोषस्य बृहद्वनगतघोषस्य अतुलं भगवत्सान्निध्यलक्षणत्वादपरिमेयं पुण्यं शुभकर्मजनितमपूर्वाख्यं संस्कारमुपरतं शान्तं मन्ये तर्कयामि । बृहद्वननिवासिनां खगमृगनगादीनामेवंविधं पुण्यसुखं पुनः कदाचिदपि न भावीत्यवगच्छामीत्यर्थः ।

"*अत ओ सौ"(५।१) इत्यनेन अकारान्तस्याङ्गस्य सौ परत ओत्वं कण्हो । "जश्शसोर्लोपः"(५।२) इत्यनेन जसो लोपः गोवा । तेनैव शसोऽपि लोपः वच्छे । "अतोऽमः"(५।३)इत्यनेन अकारान्तादुत्तरस्यामोऽकारस्य लोपः वसगणं ।" टाआमोर्णः" (५।४) इत्यनेन टा इत्यस्य णकारः अअळोहेण । आमः षष्ठीबहुवचनस्यापि । आकारः बाळाण । "भिसो हि"(५।५)इत्यनेन भिसो हि । सेहिं गोहिं । "ङसेरादोदुहयः"(५।६) इत्यनेन ङसेः आ दो दु हि इति चत्वार आदेशा भवन्ति । घोसा संसेविआदो दुट्ठादु पत्ताहि । कृष्ण इति स्थिते "ऋतोऽत्" (१।२७) इत्यकारे "स्नष्णक्ष्णह्नश्नां ण्हः" (३।२७) इति ष्णशब्दस्य ण्हादेशः । अत ओत्वे कण्हो इति भवति । गोपशब्दस्य "पो वः" (१।१५)इति वत्वे ¶"जश्शस्ङस्यांसु दीर्घः" (५।११) इति दीर्घे जसो लोपे गोवा इति भवति । चकारस्याव्ययस्य प्रायोलोपः अ । वत्सशब्दस्य "श्चत्सप्सां छः"(३।४०) इति छत्वे आदेशत्वादस्य द्वित्वे "ए च सुपि–"(५।१२)इत्येत्वे शसो लोपे वच्छे इति भवति । वृषगणशब्द-

* 'अत ओत् सोः' मुद्रितपाठः ।

¶ अत्र मुद्रिपाठक्रमो नादृत इति भाति ।

1. 'स्पृष्टा' क. 'स्पष्टा' ख.

स्यात्वे सत्वे गकारस्य लोपे वसअणमिति भवति । अचलौघशब्दस्य प्रायो लोपे ळत्वे औत ओत्वे घस्य हत्वे टा इत्यस्य णादेशे "ए च सुपि-" इत्येत्वे अअळोहेण इति भवति । आमो णादेशे[1] लस्य ळत्वे "जश्शस्ङस्यांसु दीर्घः"(५'११) इति दीर्घे बाळाण इति भवति । स्वशब्दस्य वलोपे सुप्यत्वे भिसो हित्वे 'बिन्दुर्वे'ति योगविभागाद् बिन्दौ सेहिं गोहिं । ओकारान्तत्वादेत्वाभावः । ग्रहेर्धातोः क्त्वस्तूणादेशे घेत्त्वे घेत्तूण इति भवति । यात इति स्थिते आदियकारस्य जत्वे तकारस्य प्रायोलोपेऽत्र ओत्वे जाओ इति भवति । सहशब्दस्याविशेषः । चशब्दस्य प्रायोलोपः । रिपुवधार्थेन इत्यस्य वत्वे हत्वे रलोपे द्वित्वे ह्रस्वत्वे रिवु-वहत्थेण इति भवति । बृन्दावनशब्दस्य ऋत्वादित्वादुत्वे नस्य णत्वेऽपि बुन्दावणमिति भवति । अन्त्यहल्लोपेऽपि तं इति भवति । घोषशब्दस्य सत्वे ङसेः आत्वे घोसा इति । संसेवितशब्दस्य प्रायोलोपे दीर्घे ङसेर्दो-भावे संसेविआदो इति भवति । स्वकृतेत्यादेर्वलोपे ऋकारस्यात्वे तलोपे क्षस्य खत्वे भस्य हत्वे ष्टस्य ठत्वे द्वित्वे ङसावात्वे तस्य दुत्वे सकअ-वअभअक्खोहदुट्ठादु इति भवति । शष्पशब्दस्य शस्य सत्वे ष्पस्य फत्वे द्वित्वेऽपि सप्फमिति । अक्ष्यादित्वाच्छत्वेऽपि छीणमिति । प्राप्त-शब्दस्य रलोपे ह्रस्वे पलोपे द्वित्वे ङसेर्हित्वे दीर्घे पत्ताहीति । "शेषः संस्कृतात्"(९।१८)इति न्यायेन मन्ये इत्यस्य यलोपे नस्य णत्वे द्वित्वे मण्णे इति भवति । पस्य वत्वे तलोपेऽपि उवरअमिति। तलोपे लस्य ळत्वेऽपि अउळं इति भवति । तच्छब्दस्यान्त्यहल्लोपे ङसः स्सभावे तस्स इति । षस्य सत्वे घोसस्स इति । पुण्यशब्दस्य यलोपे द्वित्वेऽपि पुण्णं इति भवति । स्रग्धरावृत्तम् ॥

---

१. 'आदौ ङसो णादेशे' क, ख.

वृन्दावनप्रवेशे तत्रत्यानां वृक्षाणां दर्शनमाह—

वच्छाहिन्तो भिंगवाळासिळिट्ठ-
पुप्फासुन्तो तस्स वुन्दावणस्स ।
अच्छीजुग्गे किं वि दीहम्मि सोक्खं
कण्हो पत्तो किं खु रुक्खेसु भग्गं ॥ २ ॥

छाया—

वृक्षेभ्यो भृङ्गबालाश्लिष्ट-
पुष्पेभ्यस्तस्य वृन्दावनस्य ।
अक्षियुग्मे किमपि दीर्घे सौख्यं
कृष्णः प्राप्तः किं खु वृक्षेषु भाग्यम् ॥

कृष्णः तस्य वृन्दावनस्य वृक्षेभ्यः दीर्घे अक्षियुग्मे किमपि सौख्यं प्राप्तः । वृक्षान् विशिनष्टि– भृङ्गेति । अत्रत्यानां वृक्षाणां मकरन्दस्यामृतोपमत्वात् तदुपजीविनां भृङ्गाणामक्षीणयौवनत्वेन बाल-शब्दः। भृङ्गबालैराश्लिष्टानि पुष्पाणि येषां ते तथा । किं खु इति वितर्के । एषु भगवन्नयनप्रीतिकरेषु वृक्षेषु । किं खलु भाग्यं भाग्यस्य स्वरूपं परिच्छेत्तुं नालमित्यर्थः ।

"*भ्यसो हिन्तो सुन्तो" (५।७) इत्यनेन भ्यसो हिन्तो सुन्तो इत्येतावादेशौ भवतः । वच्छाहिन्तो, पुप्फासुन्तो । "स्सो ङसः" (५।८) इत्यनेन ङसः स्स इत्यादेशः । तस्स, वुन्दावणस्स । "ङेरम्मी" (५।९) इत्यनेनाकारान्तादुत्तरस्य ङेः सप्तम्येकवचनस्य ए म्मि इत्येतावादेशौ

* 'सो हिंतो सुंतो' मुद्रितपाठः.

1. 'खलु वितर्के भाग्यं' क. ख.

स्तः। अच्छीजुग्गे, दीहम्मि। "सुपः सुः"(५।१०)इत्यनेन सुपः सप्तमी-बहुवचनस्य सु इत्ययमादेशः। "ए च सुपि"(५।१२)इत्येत्वम्। रुक्खेसु वृक्षशब्दस्य ऋकारस्यात्वे क्षस्य छत्वे तस्य द्वित्वे भ्यसो हिन्तो इत्यादेशे "ए च सुपि-"इति चकारादात्वे वच्छाहिन्तो इति रूपम्। भृङ्गत्यादि। ऋष्यादीत्वे लस्य ळत्वे आश्लिष्टशब्दस्य [1]विकर्षे पूर्वस्य तत्स्वरत्वे शस्य सत्वे [3]ष्टस्य ठत्वे ष्पस्य फत्वे भ्यसस्सुन्तो इत्यादेशे चकाराद् द्वित्वे भिंगबाळासिळिट्ठपुप्फासुन्तो इति रूपं भवति। तच्छब्दस्यान्त्यहलो लोपे ङसः स्सादेश तस्सेति। वृन्दावनशब्दस्य ऋत्वादित्वादुत्वे नस्य णत्वे ङसि वुन्दावणस्सेति भवति। अक्षियुग्मशब्दस्य क्षस्य छत्वे "पृष्ठाक्षिप्रश्नाः स्त्रियां वे"ति न्यायेन स्त्रीत्वाद् "आदीतौ बहुळम्" (५।२४)इतीत्वे यकारस्य जत्वे "अधो मनयाम्" इति मकारलोपे गस्य द्वित्वे ङौ अच्छीजुग्गे इति भवति। किमपीत्यत्र "सन्धावचाम्-" इत्यलोपे किंपि इति भवति। औत ओत्त्वे यलोपे द्वित्वे सोक्खमिति रूपं भवति। ऋकारस्यात्वे ष्णस्य ण्हत्वे सौ कण्हो इति। प्राप्तशब्दस्य रलोपे ह्रस्वे पलोपे तकारस्य द्वित्वे सौ पत्तो इति भवति। किं खु। वृक्षशब्दस्य "वृक्षे वेन रुर्वा" (१।३२) इति रुत्वे क्षस्य खत्वे सुप्येत्वे रुक्खेसु इति भवति। भाग्यशब्दस्य यलोपे गस्य द्वित्वे आकारस्य ह्रस्वे भग्गमिति भवति। शालिनीवृत्तम्॥

गोवा सूरज्जोइमुत्तंतरादो
मंदं मज्झे खेळमाणाणिळादु।
णीसंदन्तत्थोअवुप्फासवाहि
जाआ तत्तो दिव्वतोसाण सीमा॥ ३॥

---

१. 'विकल्पे' क. ख. २. 'तत्परत्वे' क. ख.
३. 'ष्टस्यात्वे' क. ख. ४. 'हत्वे' क. ख.

छाया—

गोपाः सूर्यज्योतिर्मुक्तान्तरा-
न्मन्दं मध्ये खेलमानानिलात् ।
निष्यन्दमानस्तोकपुष्पासवाद्
यातास्ततो दिव्यतोषाणां सीमाः ॥

गोपास्ततो वृन्दावनाद् दिव्यतोषाणाम् असाधारणसन्तोषाणां सीमाः पराः काष्ठा याताः प्राप्ताः । वृन्दावनं विशिनष्टि— सूर्येति । सूर्यज्योतिर्भिर्मुक्तमन्तरमवकाशो यस्मिन् । मध्ये अन्तर्भागे । मन्दं मान्द्यगुणयुक्तम् । खेलमानाः क्रीडन्तोऽनिला यस्मिन् । एतच्छैत्यसौरभ्ययोरप्युपलक्षणम् । तदुपपत्तिमाह— निष्यन्देति । निष्यन्दमानस्तोका निष्यन्दमानशीकराः पुष्पासवा यस्मिन् ।

"*जस्ङस्यांसु दीर्घः" (५।११)इत्यनेन त्रिषु दीर्घः । जसि गोपाः । ङसि मुत्तंतरादो । आमि तोसाण । गोपशब्दस्य जसि दीर्घे वत्वे जसो लोपे गोवा इति । सूरज्जोइमुत्तंतरादो- सूर्यशब्दस्य "सूर्ये वा"(३।१९)इति र्यस्य रादेशे ज्यस्य यलोपे द्वित्वे तकारस्य प्रायोलोपे अन्त्यहलो लोपे सन्धावग्लोपे ङसि दीर्घे दोभावे सूरज्जोइमुत्तंतरादो इति भवति । मंदं । "ध्यह्योर्झः" (३।२८)इति झादेशे द्वौ मज्झे इति भवति । लस्य ळत्वे दीर्घे दुभावे खेळमाणाणिळादु इति भवति । णीसंदन्तेत्यादि । स्यन्दतेर्धातोः शानचि न्तादेशे पूर्वस्य नेरुपसर्गस्य "सुभिस्सुप्सु दीर्घः" (५।१८)इत्यस्मा[1]द्दीर्घ इति योगविभागाद् दीर्घे षस्य सत्वे यलोपे स्तस्य थत्वे द्वित्वे णीसंदन्तत्थोअपुप्फासवाहीति भवति । याता इत्यस्यादेर्यकारस्य जत्वे तलोपे जसि दीर्घे जसो लोपे जाआ इति

* "जश्शस्ङस्यांसु—" इति मुद्रितपाठः ।

1. 'स्यादीर्घः' क. ख.

भवति। तच्छब्दस्यान्त्यहल्लोपे ङसौ "त्तो दो ङसेः" (६।९) इति त्तो आदेशे तत्तो इति भवति। दिव्येति– यलोपे वकारस्य शेषत्वाद् द्वित्वे षस्य सत्वे आमो णादेशे दीर्घे दिव्वतोसाण इति भवति। सीमच्छब्दस्य "मनः"(पा०सू० ३-२-८२) इति ङीपि प्रतिषिद्धे "डाबुभाभ्याम्–" (पा०सू० ४-१-१३)इति डाप्याकारान्तत्वम्। तत आकारान्ताच्छसि "जश्शसोर्लोपः" (५।२)इति शसो लोपे सीमा इति भवति। शालिनी-वृत्तम् ॥

रम्मे देसे दिट्ठसप्फेण तस्स
गोजूहेहिं पेच्छिरो ळोअणेसु।
तोसाहिन्तो पूरिओ रामभद्दो
पुण्णासुन्तो तक्खणा माणसे अ ॥ ४ ॥

छाया–

रम्यान् देशान् दृष्टशष्पेण तस्य
गोयूथैर्द्रष्टा लोचनयोः।
तोषेभ्यः पूरितो रामभद्रः
पूर्णेभ्यस्तत्क्षणान्मानसे च ॥

तस्य वृन्दावनस्य रम्यान् देशान् द्रष्टा दर्शनशीलो रामभद्रः रौहिणेयः मानसे पूर्णेभ्यस्तोषेभ्यः लोचनयोः पूरितश्च। लोचने अत्यन्तं प्रसन्ने अभूतामित्यर्थः। रम्यप्रदेशदर्शनजनितः तोषः राम-भद्रस्य हृदयं पूरयित्वा लोचनद्वारा बहिरपि प्रकाशतां प्रापेत्यर्थः। तत्क्षणात् तस्मिन् काले गोयूथैर्दृष्टशष्पेणोपलक्षितानिति देशविशेषण-त्वेन योजनीयम्।

---

१. 'ङसो' क. ख. २. 'दृष्ट्वा' ख.

"ए च सुपि---"(५।१२)इत्यनेन सुप्सु परतः एत्वं चकाराद् दीर्घश्च भवतः। अत्र सुबिति प्रत्याहारो गृह्यते। इतरविधिरहिते सर्वत्राप्यनयोः प्राप्तिः। शसि रम्मे देसे। तृतीयैकवचने दिट्ठसप्फेण। भिसि गोजूहेहिं। बिन्दुर्वेति योगविभागाद् बिन्दुः। भ्यसि दीर्घः तोसाहिन्तो, पुण्णासुन्तो। "क्वचिद् ङसिङ्योर्लोपः" (५।१३) इत्यस्योदाहरणम्- तक्खणा माणसे अ इति प्रवृत्त्यप्रवृत्तिभ्यां क्वचिच्छब्दार्थः प्रकटीक्रियते। शालिनीवृत्तम् ॥

सउंतिणो सिअतरुणो [1]णिअच्छिअं
मुरारिणो भुवणवइस्स ळोअणं।
वरोरुणो णिइळगुरुस्स णन्दिअं
ण होइ किं गळुळरहस्स तं खमं ॥ ५ ॥

छाया –

शकुन्तीन् श्रिततरून् [2]दृष्टं
मुरारेर्भुवनपतेर्लोचनम्।
वरोरोर्निखिलगुरोर्नन्दितं
न भवति किं गरुडरथस्य तत् क्षमम् ॥

श्रिततरून् वृक्षस्थितान् शकुन्तीन् पक्षिणः [3]दृष्टं मुरारेर्लोचनं नन्दितं सन्तोषयुक्तमासीदिति शेषः। गरुडरथस्य गरुडवाहनस्य गरुडप्रीतियुक्तस्येत्यर्थः। तत् क्षमं योग्यं न भवति किं योग्यमेवेत्यर्थः। भुवनपतेः त्रैलोक्यरक्षितुः। वरोरोः सर्वावयवसुन्दरस्येत्यर्थः। निखिलगुरोर्धर्मज्ञानयोरुपदेष्टुः।

"इदुतोः शसो णो" (५।१४)इत्यनेनेदुतोरुत्तरस्य शसो णोत्वं

---

१. 'णिअच्चिरं' क. ख. २. 'द्रष्टुर्मुरारेः' क, 'द्रष्टुम्मुरारेः' ख.
३. 'द्रष्टुर्मुरारेः' क.

सउंतिणो, सिअतरुणो । "ङसो वा" (५।१५)इत्यनेनेदुतोरुत्तरस्य ङसो वा णोत्वं । मुरारिणो, वरोरुणो । अभावे भुवणवइस्स, णिहळगुरुस्स । 'शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः' इति सिंहः । रुचिरावृत्तम् । 'चतुर्ग्रहैरिह रुचिरा जभस्जगाः' इति वृत्तरत्नाकरे ॥

सुअओ सिइणो सुहज्जुई
पहओ तं उरुणो पसू वणं ।
हरिणा गुरुणा हु पाविआ
उपजाआ अहिआसिऊसुआ ॥ ६ ॥

छाया—

शुचयः शितयः शुभद्युतयः
प्रभवस्तदुरवः पशवो वनम् ।
हरिणा गुरुणा हु प्रापिताः
उपजाता अधिकाशिरुत्सुकाः ॥

हरिणा कृष्णेन गुरुणा ज्येष्ठेन बलभद्रेण तद्वनं वृन्दावनं प्रापिताः पशवः अधिकाशिरुत्सुकाः उपजाताः अधिकासु आशिस्सु भगवद्विषयेऽधिकास्वाशिस्सूत्सुका अभवन्नित्यर्थः । पशून् विशिनष्टि— केचित् शुचयः शुक्लाः । केचित् शितयः कृष्णाः । 'शिती धवलमेचकौ' इति सिंहः । अन्ये शुभद्युतयः चित्रवर्णाः । प्रभवः शक्ताः । उरवः बृहत्कायाः । 'महद्भद्रोरुविपुलं पीनपीव्नी तु स्थूलपीवरे' इति सिंहः ।

"*जस ओ वा चात्वम्(५।१६)इत्यनेनेदुतोः परस्य जसः वा

---

* "जसश्च ओ यूत्वम्" (chow-edn.),
"जस ओ वो वात्वं च" (Saraswati: edn.)

ओत्वम् । ओत्वपक्षे इदुतोरत्वं च । सुअओ पहओ । तदभावे णोत्वं च । तदभावे शेषोऽदन्तवद्भावे जसो लोपे "जस्ङस्यांसु दीर्घः" इति दीर्घे सुहज्जुई, पसू । णोत्वपक्षे सिइणो उरुणो इति त्रिधा रूपं भवति । चकारात् ङसोऽपि ओत्वणोत्वे भवतः । णोत्वं पूर्वश्लोके उक्तम् । "टा णा" (५।१७)इत्यनेन इदुतोरुत्तरस्य तृतीयैकवचनस्य णा इत्ययमादेशः । हरिणा,गुरुणा । वैतालीयं वृत्तम् ॥

सुरुई पईहि सुगिरीसु जोइओ
सिसिसू पडूहि विरुरूसु गोगणो ।
तिणवारिभूमिपिअणाअसूणअ-
स्सणसञ्चिआइहिखमच्चणेसु सो ॥ ७ ॥

छाया—

सुरुचिः पतिभिः सुगिरिषु योजितः
सशिशुः पटुभिः विरुरुषु गोगणः ।
तृणवारिभूमिपिकनादसूनृत-
स्वनसञ्चितातिथिक्षमार्चनेषु सः ॥

सशिशुः सवत्सः । अत एव सुरुचिः सुतरां रुचियुक्तः । पटुभिः गोरक्षणकुशलैः । पाटवस्य फलं गिरिविशेषणत्वेनाह– विरुरुषु विगता रुरवो दुष्टमृगा येभ्यस्ते विरुरवः । रुरुपदमुपलक्षणं व्याघ्रादीनामपि । गिरीणां गृहस्थायमानत्वं गोगणस्यातिथित्वं च द्योतयति– तृणेति । तृणानि वारीणि च भूमयः पिकनादसूनृतस्वनाश्च एतैः सञ्चितम् अति-

१. 'तयोरभावे' ख.

२. 'उक्तम् । अप्रसिद्धत्वाद् जसो रूपादभेदावतत्पक्षोऽत्र नोदाहृतः । टा णा' क.ख. ३. 'पादपस्य' क. ख.

थिक्षममतिथियोग्यमर्चनं[1] यैस्ते तथोक्ताः। 'यक्षानुरूपो हि बलि'रिति न्यायान्न शब्दोपादानम् । 'प्रियं सत्यं च सूनृतम्' इति सूनृतलक्षणम् ।

"सुभिस्सुप्सु दीर्घः" (५'१८) इत्यनेन दीर्घः । सौ सुरुई । भिसि पईहि । सुपि सुगिरीसु । एवमुकारान्तस्यापि । सौ ससिसू । भिसि पहूहि । सुपि विरुरूसु । मञ्जुभाषिणीवृत्तम् ॥

जाआउ सच्चप्पमदाहिआओ

गोवी अ लच्छिं सुहपद्धईइ ।

चारूउ णारीअ व सुन्दरीआ

पुप्फेहि वुन्दावणमेइणीए ॥ ८ ॥

छाया —

यताः सत्यप्रमदाभिधाः

गोप्यश्च लक्ष्मीं शुभपद्धत्या । (शुभपद्धत्याः शुभपद्धत्याः शुभपद्धत्यामिति च ।)

चार्वा (चार्वाः चार्वाः चार्वामिति च ।)

नार्येव (नार्या इव नार्या इव नार्यामिवेति च ।)

सुन्दर्या (सुन्दर्याः सुन्दर्याः सुन्दर्यामिति च ।)

पुष्पैः बृन्दावनमेदिन्या ॥ (बृन्दावनमेदिन्याः बृन्दावनमेदिन्याः बृन्दावनमेदिन्यामिति च ।)

गोप्यः बृन्दावनमेदिन्या हेतुभूतया पुष्पैः लक्ष्मीं शोभां याताः । सत्यभूता अन्वर्थयुक्ता प्रमदाभिधा यासां ताः तथा । "प्रमदसम्मदौ हर्षे' इति निपातनात् प्रमदयुक्तत्वादासामभिधायाः सत्यत्वम् । बृन्दावनमेदिनीं विशिनष्टि — शुभपद्धत्याः शुभाः सुखसञ्चारयोग्याः पन्थानो यस्यां सा तथा । चार्वा पश्यतां सुखदत्वात् चारुभूतया ।

1. 'मर्चना' क. ख.

सुन्दर्या लक्षणयुक्तया विशिष्टया । नार्या स्त्रिया । यथा तत्समीपवास्त-व्यानां श्रीर्भवति तद्वत् तस्यामपि शुभमार्गप्रवृत्तत्वात् शुभपद्धतित्वं चारुत्वं च युज्यत इति तृतीयान्तत्वे योजना । गोप्यः वृन्दावन-मेदिन्या लब्धैः पुष्पैः लक्ष्मीं याता इति पञ्चम्यन्तत्वे लब्धशब्दमध्या-हृत्य योजनीयम् । नार्याः सकाशादिति विशेषः । विशेषणान्यपि पञ्चम्यन्तत्वेन योजनीयानि । वृन्दावनमेदिन्याः पुष्पैः इति षष्ठ्य-न्तत्वे नार्याः सम्बन्धिन इव इति विशेषः । वृन्दावनमेदिन्यां पुष्पैरिति सप्तम्यन्तत्वे षष्ठीसप्तम्योः †इति विशेषणानां तथैव योजना । नार्यां लक्ष्मीं शोभामिव तन्निकटस्थः ।

"*जसो वा स्त्रियामुदोतौ"(५।१९)इत्यनेन स्त्रीलिङ्गे जसः सामा-न्येनानुवादाद् उत् ओत् इत्येतौ भवतः । जाआउ, सच्चप्पसदाहिआओ । उदोत्त्वयोरभावेऽदन्तवद्भावाज्जसो लोपः । गोवी । "अमि ह्रस्वः"(५।२१) इत्यनेनामि द्वितीयैकवचने ह्रस्वत्वम् । ठच्छि । "¶टाङस्ङीनामिदुद-दादेतः" (५।२२) इत्यनेन टादीनां एकवचनानां सर्वेषां सर्वेऽप्यादेशा विधीयन्ते । इत् उत् अत् आत् एत् इति पञ्च । पद्धईइ, चारूउ, णारीअ, सुन्दरीआ, मेइणीए । पद्धईइ, पद्धईउ, पद्धईअ, पद्धईआ, पद्धईए । एवं सर्वत्र द्रष्टव्यम् । अनया युक्त्यात्र श्लोके चतुर्धा योजना व्याख्याता । वैचित्र्यप्रदर्शनाय ग्रन्थविस्ताराभावाय च एवं श्लोको विरचितः । इन्द्रवज्रावृत्तम् ॥

कीळाइ चित्ताउ विवड्ढिआए
सोहं च वच्चीअ हु सप्फसामळी ।

† अत्र किञ्चिल्लुप्तमिव भाति ।

* "स्त्रियां जस उदोतौ" (५।१९) "जसो वा" (५।२०) इति मुद्रितपाठः ।

¶ "टाङस्ङीनामिदेददातः" (chow- edn.),
टाङस्ङीनामिदेदादतः" (Saraswati- edn.)

सा सामळा कण्हज्जुईहि तस्स
मण्णे ण तीए सरिसं धराअळं ॥ ९ ॥

छाया—

क्रीडया (क्रीडायाः क्रीडायाः क्रीडायां)
चित्रया (चित्रायाः चित्रायाः चित्रायां) विवर्धितया (विवर्धितायाः विवर्धितायाः विवर्धितायां)
शोभां च वव्राज हु शष्पश्यामला ।
सा श्यामला कृष्णद्युतिभिः तस्य
मन्ये न तस्याः सदृशं धरातलम् ॥

शष्पैः तृणविशेषैः श्यामला । तस्य कृष्णस्य । कृष्णद्युतिभिः कृष्णाभिर्द्युतिभिश्च श्यामला । सा पूर्वोक्ता बृन्दावनमेदिनी । कृष्णादीनां चित्रया नानारूपया विवर्धितया क्रीडया शोभां वव्राज प्राप्तवती । क्रीडादिषु शब्देषु पूर्ववत् पञ्चम्याद्येकवचनान्तत्वेन च योजना । कविरूहं करोति– मन्ये इति । तस्याः बृन्दावनमेदिन्याः सदृशं तुल्यं धरातलं न हु नैवेति मन्ये कल्पयामि । 'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः । उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥' इति न्यायाद् उत्प्रेक्षा ।

"नातोऽदातौ" (५।२३)इत्यनेन पूर्वसूत्रोक्तेषु पञ्चसु अत् आत् इत्येतौ वर्जयित्वाकारान्तादिदुदेदित्येते त्रय एवादेशा भवन्ति । तृतीयादिषु कीळाइ, चित्ताउ, विवड्ढिआए । "आदीतौ बहुलम्" (५।२४) इत्यनेनाकारान्तादादीतौ बहुलं भवतः । सामळा, सामळी ।

---

१. 'भावे' क. ख.

"*नपुंसके सोर्बिन्दुः(५।३०) इत्यनेन नपुंसके प्रथमैकवचनस्य बिन्दु-र्विधीयते । सरिस धराअलं । इन्द्रवज्रेन्द्रवंशाभ्यामुपजातिवृत्तम् ॥

¹सुणिळाइ तमाळमण्डळाइं
अहि सोहंति ²हरिं च सो अ ताइं ।
महुराइ जहा महुप्पळाइं
महुवं सो अ जहा पुढाइ ताइं ॥ १० ॥

छाया—

³सुनीलानि तमालमण्डलानि
अभि शोभन्ते हरिं च स च तानि ।
मधुराणि यथा महोत्पलानि
मधुपं स च यथा स्फुटानि तानि ॥

तत्र वृन्दावने सुनीलानि यानि तमालमण्डलानि तानि च हरिमभि शोभन्ते स्म स च हरिश्च तान्याभिमुख्येन शोभते स्मेति वचन-विपरिणामेन सम्बन्धः । अभेः कर्मप्रवचनीयत्वात् तद्योगे ⁴द्वितीया । भूतले मधुराणि महोत्पलानि मधुपं यथा स च यथा स्फुटानि विकसितानि तानि ।

"$ई जश्शसोर्दीर्घश्च "(५।२६) इत्यनेन नपुंसके जश्शसोर्बहुल-

---

* " सोर्बिन्दुर्नपुंसके " (chow-edn.)

$ " इज्जश्शसोः- " (chow-edn.)' इं जश्शसोः- (Saraswati-edn.)

---

१. ' वुणिळेहतमाल ' क. ख. ग ङ पाठयोरयं भागो नोपलभ्यते ।

२. ' हरी ' क. ख.

३. ' सुनीलतमाल ' क. ख. ङ. ग घ पाठयोः भागोऽयं नास्ति ।

४. ' द्वितीयात्मशब्दयोगे भूतले ' क. ख.

मीकारः । तस्मिन् परतः पूर्वस्य प्रातिपदिकस्य दीर्घश्च । जसि मण्ड-ळाई, शसि ताई । बहुलग्रहणादिकारश्च । तस्य सबिन्दुत्वं च । क्वचिन्निर्बिन्दुत्वं च । पक्षे जसि महुराइ महुप्पळाइं । शसि पुढाइ ताइं । औपच्छन्दसिकं वृत्तम् ॥

एवं वृन्दावने वर्तमानस्य कृष्णस्य सेवार्थमागतानां देवानां कंसवधोद्योगजनकं स्तुतिवाक्यमाह—

णाह सोरि पर वेण्हु सुसीमे !
पाहवस्स सुहसेणि सअंभु ! ।
केळिआर ! अणुगण्हसु माअं
एरिसं तु भणिओ सुरसंघो ॥ ११ ॥

छाया—

नाथ शौरे पर विष्णो सुसीमे !
प्राभवस्य शुभश्रेणि स्वयम्भो ! ।
क्रीडितः ! अनुगृहाण मातरम्
ईदृशं तु भणितः सुरसङ्घः ॥

सुरसङ्घः ईदृशं भणितः कर्तरि निष्ठा बभाणेत्यर्थः । नाथ स्वामिन् । शौरे वसुदेवपुत्र । पर परमात्मन् । विष्णो व्यापनशील ! । प्राभवस्य निग्रहानुग्रहप्रयोजकस्यैश्वरत्वस्य सुसीमे शोभनमर्यादाभूत ! । निरतिशयैश्वर्यस्यात्यन्तरमणीयत्वात् शुभश्रेणि ! 'मङ्गळानां च मङ्गळ-मि'त्युक्तत्वात् । स्वयम्भो स्वेच्छागृहीतविग्रह ! क्रीडितः क्रीडाशील ! मातरमनुगृहाण । क्रीडारसास्वादात् तेऽवतारकार्यस्य विघ्नो मा भूत् । बद्धां हतबालसुतां दीनां मातरं कंसवधेनानुगृहाण अनुगृहीतां कुर्वि-त्यर्थः । ईदृशमिति क्रियाविशेषणम् ।

---

१. 'भिकार' क. ख.

" नामन्त्रणे सावोत्वदीर्घत्वबिन्दवः *"(५।२७)इत्यनेन सम्बुद्धावोत्वदीर्घे नपुंसके बिन्दुश्च न भवति । त्रिषु लिङ्गेषु त्रिष्यन्तेषु चायं विधिः । पुल्लिङ्गेऽकारान्ते णाह । इकारान्ते सोरि । उकारान्ते वेण्हु । " †आत ए "(५।२८) इत्यनेनामन्त्रणे आकारस्य एकारो विधीयते । "ईदूतोर्ह्रस्वः"(५।२९) इत्यनेनामन्त्रणे ईकारोकारयोः ह्रस्वः । सुहसेणि, सअंसु । "ऋत आरः सुपि" (५.३१) इत्यनेनामन्त्रणे परत ऋकारान्तस्य आर इति विधीयते । केळिआर । "मातुरा$" (५।३२) इत्यनेन मातृशब्दस्याकारः माअ । स्वागतावृत्तम् । 'स्वागतेति रनभाद् गुरुयुग्मम्' इति हि वृत्तरत्नाकरे ॥

घेणूणं पाउणो ते तहिंमणुभविऊ णन्दिआरा रसाणं
 सप्फेहिं रंतुणो ते वसहसिसुअए सोहिआरे तणंता ।
ळोआणं गोत्तुणा ही णिअसंअढघरे[1] केळिआरेण[2] गुत्ता
 कीळा सा भत्तुणो से णणु रिवुणिअअत्तुरस्स जेआरअस्स ॥

छाया—

घेनूनां पातारस्ते तस्मिन्ननुभवितारो नन्दितारो रसानां
 शष्पै रन्तृस्तान् वृषभशिशुचयांच्छोभितॄन् तन्वानाः ।
लोकानां गोप्त्रा ही निजशकटगृहे क्रीडित्रा गुप्ताः
 क्रीडा सा भर्तुरस्य ननु रिपुनिचयात्तुर्जेतुः ॥

---

* 'दीर्घबिन्दवः' मुद्रितपाठः ।
† 'स्त्रियामात एत्' (chow-edn.)
$ 'रात्' (chow-edn.)

---

१. 'सअड' ङ. २. 'क्रीडिआ' ङ.

ते धेनूनां पातारो गोपाः तस्मिन् बृन्दावने लोकानां गोप्त्रा कृष्णेन गुप्ता अभूवन्निति शेषः। कथं— रसानां गोरसानामनुभवितारः नन्दितारः समृद्ध्यानन्दयुक्ताः। पुनः कीदृशाः- वृषभशिशुचयान् शष्पै रन्तॄन् शोभितॄंश्च तन्वानाः। हीत्याश्चर्ये। सा अस्य भर्तुः कृष्णस्य क्रीडा ननु। ननुरवधारणे। रिपुनिचयात्तुः शत्रुसमूहसंहर्तुः। जेतुः सर्वत्र जयशीलस्य। सम्भाव्यमानोपद्रवे देशे निरुपद्रवा अत्यन्तसुखिनस्ते गोपा बभूवुरिति यत् तदाश्चर्यमित्यर्थः।

"उ जश्शष्टाङस्सु वा"(५।३३)इत्यनेन जश्शष्टाङस्सु चतुर्षु परेषु ऋकारान्तस्य उत्वमार च विकल्पेन विधीयते। जस्युत्वपक्षे पाउणो अनुभविऊ। आरपक्षे णन्दिआरा। शसि रंतुणो, सोहिआरे। टात्वे गोत्तुणा, केळिआरेण। ङसि भत्तुणो, अत्तुस्स, जेआरअस्स। स्वार्थागतस्य ककारस्य प्रायोलोपः। अनुभविऊ, अत्तुस्स इत्येतावुत्वपक्षस्य रूपभेदावेव। स्रग्धरावृत्तम्॥

पिअरं सहभाअरं णिअं
गिरिआमाअरमग्गिभू विअ।
मुइओ अणु पिंछसेहरो
गळसत्तंबरणच्चिओ विहू॥ १२॥

छाया—

पितरं सहभ्रातरं निजं
गिरिजामातरमग्निभूरिव।
मुदितोऽनु पिञ्छशेखरो
गळसक्ताम्बरनृत्तो विभुः॥

विभुः कृष्णः सहभ्रातरं भ्रात्रा बलभद्रेण सह वर्तमानम्। निजं

पितरं नन्दगोपनम् अनु लक्षीकृत्य । अनुशब्दो लक्षणे अभिमुखीकृत्ये-त्यर्थः । गळसक्ताम्बरनृत्तः गळे सक्तमम्बरं यथा भवति तथा नृत्तः । कर्तरि निष्ठा नर्तितेत्यर्थः । क्रीडाविशेषणस्य 'सुप् सुपे'ति नृत्तशब्देन समासः । कमिव— गिरिजामातरं गिरेर्हिमवतो जामातरं महादेवम् । 'जामाता दुहितुः पतिः' इति सिंहः । अग्निभूर्गुह इव ।

"पितृभ्रातृजामातॄणामरः" (५।३४) इत्यनेन पित्रादिषु त्रिषु अरादेशः । पिअरं, सहभाअरं, गिरिजामाअरं । वैताळीयं वृत्तम् ॥

अथ नन्दानुग्रहार्थं बृन्दावनं गतो नारदः कृष्णं विष्णुरेवाय-मिति तस्मै बभाणेत्याह—

लोआणं पढमपिआ हरिस्स भाआ
जामाआ जलणिहिणो इमो सिसू दे ।
रक्खत्थं चिअ इह संगओ त्ति णंदं
आजाओ अह इह णारदो भणीअ ॥ १४ ॥

छाया—

लोकानां प्रथमपिता हरेर्भ्राता
जामाता जलनिधेरयं शिशुस्ते ।
रक्षार्थं[1] चिअ[2] इह सङ्गत इति नन्द-
मायातोऽथेह नारदोऽभणत् ॥

अथ नारदः इह बृन्दावने आयातः नन्दमित्यभणत् । कथ-मित्याह— ते अयं शिशुः कृष्णः रक्षार्थमिह सङ्गतः सम्प्राप्तः । लोकानां प्रथमपिता पितामहस्यापि पिता विष्णुरेवेत्यर्थः । पितामह-स्यापि पितरि तव शिशुम्मन्यतेति भावः । विष्णुमेव विशिनष्टि—

---

१. 'ति ब' ख.  २. 'चिअ इत्यवधारणे' घ. ङ.

हरेरिन्द्रस्य भ्राता उपेन्द्रत्वेन कश्यपाजातत्वात्। जलनिधेर्जामाता श्रीभर्तृत्वात्।

"आ च सौ" (५।३५) इत्यनेन पित्रादीनां सौ परतः आत्वं विधीयते। पढमपिआ, भाआ, जामाआ। चकारादरश्च भवति। प्रहर्षिणीवृत्तम्॥

कविरुत्प्रेक्षते—

लोआण मण्णे पिअरो अ भाअरो
जो देवसङ्घाण पहुस्स वज्जिणो।
जामाअरो वारिणिहिस्स सो इमो
ऊ पूअणारित्ति अ तेण णिच्छिअं॥ १५॥

छाया—

लोकानां मन्ये पिता च भ्राता
यो देवसङ्घानां प्रभोर्वज्रिणः।
जामाता वारिनिधेः सोऽयं
ऊं[1] पूतनारिरिति च तेन निश्चितम्॥

लोकानां पिता वज्रिणो भ्राता वारिनिधेर्जामाता च यः स विष्णुरयं शिशुः इति नारदोक्त्या तेन नन्देन निश्चितं यत्तत् पूतनारिरिति चेत्यहं मन्ये। पूतनारित्वाच्चेत्यर्थः। पूतनावधादिभिरतिमानुषैः प्रत्यक्षदृष्टैरस्य कर्मभिः शङ्कमानस्य नन्दोक्त्या निश्चयो जात इत्यर्थः।

अरपक्षे पिअरो, भाअरो, जामाअरो। इन्द्रवंशावृत्तम्॥

---

1. 'ऊशब्दः सूचनार्थः' घ. ङ.

राआ रक्खेसु राअं तिहुवणवलए राअ बाळाण तं मे
राआणो णो खु राआ वळरिवुपमुहा जम्मि णाहे तुमम्मि ।
राआणो सो अ राए जिअसु दणुसुए राइणो धीण रण्णो
भूए राअस्स वस्से दणुसुअविहुणो कण्ह कंसस्स सव्वे ॥

छाया—
राजा रक्ष राजंस्त्रिभुवनवलये राजन् बालानां त्वं मे
राजानो नो खु राजानो वलरिपुप्रमुखाः यस्मिन्नाथे त्वयि ।
राज्ञः से च राज्ञो जय दनुसुतान् राज्ञो धियां राज्ञो
भुवो राज्ञो वश्यान् दनुसुतविभोः कृष्ण कंसस्य सर्वान् ॥ १६ ॥

हे राजन् कृष्ण! रक्ष जगदिति शेषः । हे त्रिभुवनवलये बालानां राजन् प्रधानभूत त्वं मे राजा स्वामी । यस्मिन् त्वयि नाथे इदानीं नाथतयात्रावतीर्णे वलरिपुप्रमुखा इन्द्रादयः प्रसिद्धा राजानो नो खु नैव राजानः । तत्कर्तव्यस्यापि त्वयैव क्रियमाणत्वात् । स त्वं दनुसुतविभोः असुरपरिवृढस्य कंसस्य राज्ञः वश्यान् दनुसुतान् जरासन्धादिरूपान् राज्ञो राज्ञः सर्वान् जय । वीप्सायां द्विरुक्तिः । कीदृशस्य कंसस्य- भुवो राज्ञः राजसामान्यस्य । धियां राज्ञः मनसापि कंसस्य प्रतिकूलाचरणं केनाप्यशक्यमिदानीमिति भावः ।

"*राज्ञः"(५।३६)इत्यनेन राजन्शब्दस्य सौ परे आत्वं विधीयते राआ । "¶आमन्त्रणे बिन्दुर्वा"(५।३७) इत्यनेन सम्बुद्धौ विकल्पेन

* 'राज्ञश्च' इति मुद्रितपाठः,
¶ 'आमन्त्रणे वा बिन्दुः' इति मुद्रितपाठः,

१. 'साण' ङ.    २. 'पश्यन् क. ख.
३. 'स्वानां रा' घ. ङ.

बिन्दुर्विधीयते राअं राअ। "*जश्शसोर्णो"(५।३८)इत्यनेन "जश्श-सोर्ङसश्च विकल्पेन णोत्वं विधीयते। जसि णोत्वे राआणो, णोत्वाभावे राआ। अत्रान्त्यहलो लोपेऽकारान्तवद्रूपसिद्धिः। शसि राआणो ङसि राइणो। अत्र पक्षे द्वित्वजलोपौ। रण्णो, राअस्स। स्रग्धरावृत्तम्॥

राआणं पि अ राइणा थुअ जए रण्णो हु रण्णा जुअं
णाआणं तुह राइणो सुअरिए वीरव्वए राइणा।
राआणो मुणिमण्डळाण चरिअं [1]चिंतंति णिच्चं जहा
राआणं तह राइणो हुवसु तं काळो हु कंसस्स अ॥ १७॥

छाया—
राज्ञामपि च राज्ञा स्तुत! जगति राज्ञो [2]हु राज्ञा युतं
नागानां तव राज्ञः सुचरिते वीरव्रते राज्ञा।
राजानो मुनिमण्डलानां चरितं चिन्त[3]यन्ति नित्यं यथा
राज्ञां तथा राज्ञो भव त्वं कालो हु कंसस्य च॥

हे कृष्ण! जगति राज्ञामपि च राज्ञा वैश्रवणेन स्तुत। तथा कंसस्य च कालोऽन्तको भव। चकाराज्जरासन्धादीनां च। कीदृशस्य कंसस्य। राज्ञां राज्ञः सार्वभौमस्य। यथा राज्ञः दुष्टानां शास्तुस्तव वीर-व्रते शत्रुमथनलक्षणे राज्ञा प्रजापालकेन त्वयेत्याहार्यम्। सुचरिते सुष्ठु निष्ठिते। मुनिमण्डलानां राजानः श्रेष्ठाः। चरितं चिन्तयन्ति नित्यं तवेति शेषः। नागानां राज्ञः नागश्रेष्ठस्य। अत्रैकवचनस्य प्रयोजना-भावान्नागश्रेष्ठानामित्यर्थः। तेषामपि राज्ञा। हुशब्दोऽपिशब्दार्थे

* 'जश्शस्ङसां णो' इति मुद्रितपाठः.

१. 'चिंततु' ङ. २. 'हि' घ.
३. 'यन्तां नि' घ. 'यन्तु नि' ङ.

सम्भावनायां वा । युतं युक्तमिति क्रियाविशेषणम् । बलभद्ररूपेणानन्तेन सहेत्यर्थः । एतद्वीरव्रतचरणे कालभवने च सम्बध्यते ।

"†आमो णं" (५।४०)इत्यनेन राजन्शब्दस्य षष्ठीबहुवचने णं विधीयते राआणं । "टा णा" (५।४१) इत्यनेन तृतीयैकवचने णा विधीयते राइणा । "§ङसश्च द्वित्वं जलोपश्च"(५।४२)इत्यनेन षष्ठीतृतीयैकवचनयोर्णकारस्य द्वित्वं जलोपश्च विधीयते । रण्णो, रण्णा । "इद्-द्वित्वे" (५।४३) इत्यनेन णो णा इत्येतयोर्द्वित्वाभावे इत्वं विधीयते राइणो, राइणा । "*णोणमोरादङसि" (५।४४) इत्यनेनाङस्याकारो विधीयते । राआणो, राआणं । शार्दूलविक्रीडितम् ॥

अप्पाणस्स पिएण तेण मुणिणा अप्पो[1] जअत्तो थुओ
इत्थं पाळिअमप्पणा वअमळंकाहीअ तुट्ठो विहू ।
बम्हा सो वि जुवा गओ सुरघरं सव्वे वि दे विम्हिआ
गोवा तस्सिमए सिरी सरमणे एक्कम्मि सा जत्थ हि ॥१८

छाया—

आत्मनः प्रियेण तेन मुनिना आत्मा जगदात्मा स्तुतः
इत्थं पालितमात्मना व्रजमलञ्चकार तुष्टो विभुः ।
ब्रह्मा सोऽपि युवा गतः सुरगृहं सर्वेऽपि ते विस्मिताः
गोपास्तस्मिन्व्रजे श्रीः स्वरमणे एकस्मिन् सा यत्र[2] हि ॥

---

† 'अमो णं' (Sarasvati-edn.,)

§ 'ङसश्च द्वित्वं वान्त्यलोपश्च' (chow-edn.,)

* 'आ णोणमोरङसि' मुद्रितपाठः ।

---

१. 'अप्पा' ङ. २. 'यस्मिन् हि' ध.

आत्मनः स्वस्य प्रियेण तेन मुनिना नारदेनात्मा कृष्णः इत्थमुक्तप्रकारेण स्तुतः। जगदात्मा जगतः स्वरूपभूतः कृष्णः स्तुत्या तुष्टः आत्मना पालितं व्रजमलङ्चकार । प्रसादचिह्नैर्युक्तो वनाद् व्रजं प्राप्तवानित्यर्थः। युवा ब्रह्मा युवराज इतिवत्। ब्रह्मकल्प इत्यर्थः। स नारदोऽपि सुरगृहं गतः। कृष्णवार्तया देवान् हर्षयितुं स्वर्गं गतः। सर्वे ते गोपा अपि तस्मिन्व्रजे विषयभूते विस्मिताः नारदागमनादि दृष्ट्वा विस्मयं प्राप्ताः। कथम्भूते- यत्रैकस्मिन् सर्वप्रार्थनीया श्रीर्लक्ष्मीर्वर्तत इति शेषः। स्वरमणे आत्मारामे अपीति शेषः।

"आत्मन अप्पाणो वा"(५।४५)इत्यनेनात्मन्शब्दस्य अप्पाणादेशः। अप्पाणस्स। आदेशाभावे अप्पो। "आत्मनि पः" (३।४८) इति विकल्पेन पकारः। तदभावे अत्तो। "¶इत्वाद्वित्ववर्जं राजवदनादेशे" (५।४६) इत्यनेन राजन्शब्दवदपि भवति। अप्पणा "*ब्रह्मादयोऽप्येवम्" (५।४७)इत्यनेन ब्रह्मादीनामन्येषामपि नकारान्तानामादेशरहितस्यात्मन्शब्दस्येव रूपं भवति बम्हा जुवा। "सर्वादेर्जस ए"(६।१) इत्यनेन सर्वनाम्नां जस एत्वं भवति सव्वे। "ङः स्सिम्मित्थाः"(६।२) इत्यनेन सर्वादेः सप्तम्येकवचनस्य स्सि म्मि त्थ इत्येते आदेशा भवन्ति। तस्सि एकम्मि जत्थ। शार्दूलविक्रीडितं वृत्तम्।

लच्छी णो इसिणा इमेण अ जसो रक्खा सआ एदिणा
एदेण च्चिअ मंडणं अह्न किणा पुण्णेण पत्तो इमो।
तुव्लो केण वि णो हु जो इह जिणा अम्हे कआ जेण सा
णट्ठा पूअणिआ तिणा सिसुहरी थण्णेण तेण च्चिअ ॥१९॥

¶ 'इद्द्वित्व-' (Sarasvati edn.,)

* 'ब्रह्माद्या आत्मवत्' (chow edn.,)

1. 'त्थण्णेण' ङ.

छाया—

लक्ष्मीर्नोऽनेनानेन च यशो रक्षा सदैते-
नैतेनैव मण्डनमथ केन पुण्येन प्राप्तोऽयम् ।
तुल्यः केनापि नो हु[1] य इह येन वयं कृता[2] येन सा
नष्टा पूतनिका तेन शिशुहरी[3] स्तन्येन तेनै[4] चिअ ।

अथ 'ळच्छी' इत्यारभ्य 'भग्गं किंपि च्चेअ णिण्णीदमेदं'(श्लो० २७) इत्यन्तः पद्यैः गोपाः कृष्णस्य गुणान् वर्णयन्ति । नः अस्माकं गोपानां लक्ष्मीः समृद्धिः अनेन ! भवतीति शेषः । अनेन यशश्च सदा रक्षा च एते एतेनैव । मण्डनम् अलङ्कारः । अथशब्दः प्रश्ने । अयमित्यस्माकं सर्वस्व-भूतः । केन पुण्येन प्राप्तः ! न येन केनापि अस्माभिरार्जितेन महता पुण्येनैवायं प्राप्तः । तत्कीदृशमिति वयं न जानीम इत्यर्थः । य इहास्मिन् लोके केनापि न हु तुल्यः नैव तुल्यः । येन वयं कृताः रक्षिता इति यावत् । येन तेन हेतुभूतेन कृष्णेन । स्तन्येन स्तनपयसा शिशुहरी सा पूतनिका तेन स्तन्येनैव नष्टा ।

"इदमेतत्किंयत्तद्भ्यष्टा इणा वा" (६।३) इत्यनेन इदमेतत्-किंयत्तदित्येतेभ्यः पञ्चभ्य उत्तरस्य टा इत्यस्य विकल्पेन इणा इति भवति । तदभावेऽदन्तवद्भावादकारान्तवत् । इदमः इमिणा इमेण । "इदम इमः"(६।१४)इति इदम इमादेशः । एतदः एदिणा एदेण । अन्त्यहलो लोपः, "सन्धावचां–" इत्यकारलोपः । किमः किणा केण । अन्त्य-हल्लोपः । अत्रापि पूर्ववत् सन्धिः । यदः जिणा जेण । "आदेर्यो जः" इति यकारस्य जकारः । पूर्ववत् सन्धिः । तदः तिणा तेण । पूर्ववदन्त्य-हल्लोपः सन्धिश्च । शार्दूलविक्रीडितं वृत्तम् ॥

---

१. 'हि य इह' घ, 'ह्विति निश्चये । य इह' ङ. २. 'स्वकृताः' घ.
३. 'हरा' ङ. ४. 'तेनैव' घ.

वच्छाणं वि इमेसिमच्छिमणिसं असिंस इमाणं मणो
    एदेसिं वसहाण एत्थ णअणं एदाण रंकूण अ ।
केसिं किं व इमा तणू ण दइआ काणं च दिट्ठी सुहं
    जेसिं जाणमहं ण तेसिममअं अच्छीण ताणं इमो ॥२०॥

छाया—
वत्सानामप्येषामस्मिन्नक्षि अनिशमस्मिन्नेषां मनः
    एतेषां वृषभाणामेतस्मिन्नयनं एतेषां रङ्कूणां च ।
केषां किं वेयं तनुर्न दयिता केषां च दृष्टिः सुखं[1]
    येषां येषामघं न तेषाममृतमक्ष्णां तेषामयम् ॥

एषां वत्सानां अचिरजातत्वेऽपि अक्षि चक्षुरिन्द्रियं अस्मिन् रमत इति शेषः । अत एव एषां मनश्चास्मिन् । एतेषां वृषभाणां नयनमप्यस्मिन् स्वपालके कृष्णे । एतेषां रङ्कूणां निसर्गतः क्रूराणामपि सम्बन्धविशेषरहितानामपि अस्मिन्नयनमनसी । किं वा किमनेन परिगणनेन । तेषामियं तनुः न दयिता मनःप्रीतिकरी । सर्वेषामपि दयितैवेत्यर्थः । केषां च दृष्टिः दर्शनं अस्य दर्शनं न सुखम् । सुखशब्दस्य नियतलिङ्गत्वादेवमुक्तिः । सर्वेषामपि निरतिशयसुखहेतुरस्य दर्शनमित्यर्थः । किन्तु येषां येषामघं पापं न तेषां तेषां जनानाम् अक्ष्णाममृतमयं अमृतवदास्वादनीयत्वात् । पापरहितानामेवास्य दर्शनं लभ्यत इत्याशयः ।

"आम एसिं"(६।४) इत्यनेन इदमादिभ्यः पञ्चभ्य उत्तरस्यामो विकल्पेनैसिमादेशः । तदभावे णादेशः । इमेसिं इमाण, एदेसिं एदाण ।

---

१. 'सुभं' घ. ङ.

"बिन्दुर्वा" इति योगविभागाद् बिन्दुविकल्पः। केसिं काणं। जेसिं जाणं। तेसिं ताणं। शार्दूलविक्रीडितं वृत्तम् ॥

कास एस णन्दणो ण कस्स वि त्ति बुज्झिमो
जास ताअताअदा जएसु जस्स णो जणी[1]।
तास केळिअं इणं ण तस्स होइ अण्णहा
सङ्गई भवेण जस्स णारअत्थुई तहा ॥ २१ ॥

छाया—
कस्यैष नन्दनो न कस्यापीति बुध्यामहे
यस्य तातताता जगत्सु यस्य नो जनिः[3]।
तस्य केळितमिदं न तस्य भवत्यन्यथा
सङ्गतिर्भवेन यस्य नारदस्तुतिस्तथा ॥

एष कृष्णः कस्य पुरुषस्य नन्दनः पुत्रः। ननु नन्दनन्दनोऽयं नेत्याह— न कस्यापीति। बुध्यामहे जानीमहे। कुत इत्याह— यस्य जगत्सु तातताता तातः स्रष्टृत्वाद् ब्रह्मा जगतां, तस्यापि तातत्वात्। अत्र जनिमतां हि तातो विद्यते। अस्य न जन्म। तथा सति जन्माभावमूलकारणत्ववादिवेदविरोधादिदोषप्रसक्तेः। अतस्तर्ह्यस्यापि जनकः कोऽपि स्यादिति न वाच्यमित्याह— यस्य नो जनिः। 'जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः' इति सिंहः। तस्य कृष्णस्य इदं जन्माद्यनुकरणं केळितं क्रीडितं किन्तु क्रीडितमेवेति मन्यामहे। अन्यथा क्रीडितं न चेत् तस्य भवेन जन्मना सङ्गतिः सम्बन्धो न भवति न घटत इति यावत्। कथमेवं निश्चीयते इत्याह— यस्य तथा नारदस्तुतिः। पूर्वं

१. 'जणी इरा' ङ.  २. 'भएण' ङ.
३. 'निः। इरेत्यनिश्चयाख्याने तस्य' ङ.

'ळोआणं पडमपिआ हरिस्स भाआ' इत्यादौ नन्दं प्रति नारदवचनमिह नारदस्तुतिशब्देनोच्यते ।

"किंयत्तद्भ्यो ङस आसः" (६।५) इत्यनेन किमादिभ्य उत्तरस्य ङसः षष्ठ्येकवचनस्य विकल्पेनास इत्यादेशः। कास कस्स, जास जस्स, तास तस्स । अतिशक्वर्यां वृत्तम् । गरळं नष्टं इति संख्याप्रस्तारेण ज्ञायते नाम्नोऽश्रुतत्वात् । नामाकुशलो न जि प्रियादिति न्यायात्(?) ॥

किस्सा किस्से कीइ रे कीउ कीअ
  कीआ कीए णो घरं एस कण्हो ।
सन्तुट्ठीए सोम्मदाए खमाए
  भाए धीए उण्णईए सिरीए ॥ २२ ॥

छाया—

कस्याः कस्याः कस्या रे[1] कस्याः कस्याः
  कस्याः कस्या नो गृहमेष कृष्णः ।
सन्तुष्ट्याः सौम्यतायाः क्षमायाः
  [2]भाया धिय उन्नत्याः श्रियः ॥

एष कृष्णः कस्याः सन्तुष्ट्या न गृहम् । किंशब्दः क्षेपे । सर्वासामपि सन्तुष्टीनां गृहम् आश्रयभूतः । 'सर्वत्र सम्पदस्तस्य सन्तुष्टं यस्य मानसम्' इति न्यायात् सन्तोषस्य हि गुणेषु प्राधान्यम् । अतः प्रथममुपादानम् । एवं कस्याः सौम्यताया नो गृहमेष कृष्णः इत्यादिप्रकारेण योजनीयम् ।

---

१. 'रेशब्दः पादपूरणे । कस्याः ' घ. ङ.

२. 'भाया भास इति च ' घ, ' भाया भास इति वा ' ङ.

"§ईतः स्सास्से" (६।६) इत्यनेन कियत्तद्भ्य उत्तरस्य ङसः षष्ठ्येकवचनस्य स्सा स्से इत्येतौ विधीयेते। "आदीतौ बहुलं" इति स्त्रियां बहुलमीत्वस्य विधानादीत इत्युक्तम्। आदेशस्य द्वित्वे "सन्धावचा"मिति ह्रस्वे किस्सा किस्से इति रूपसिद्धिः। तदभावे "टाङसि-" इत्यादिनेदादिषु च सत्सु कीइ इत्यादिरूपसिद्धिः। किस्सा किस्से कीइ कीउ कीअ कीआ कीए इति सप्तधा रूपसिद्धिः। रे इति पादपूरणे "¶इजेरे पादपूरणे" इति। शालिनीवृत्तम्॥

जिस्सा जिस्से जीइ रे जीउ जीअ
जीआ जीए अप्फअं णाम वेण्हु।
तिस्सा तिस्से तीइ रे तीउ तीअ
तीआ तीए सव्वलोएक्कणाहो॥ २३॥

छाया—
यस्या यस्या यस्या रे यस्या यस्या
यस्या यस्या आस्पदं नाम विष्णुः।
तस्यास्तस्यास्तस्या रे तस्यास्तस्याः
तस्यास्तस्याः सर्वलोकैकनाथः॥

एष कृष्णः यस्याः सन्तुष्ट्याः यस्याः सौम्यतायाः यस्याः क्षमायाः यस्या भायाः यस्या धियः यस्या उन्नत्याः यस्याः श्रियः आस्पदं प्रतिष्ठागृहमित्यर्थः। 'आस्पदं प्रतिष्ठायाम्' इति निपा-

---

§ 'इदमः स्सा से' मुद्रितपाठः।

¶ "इजेराः पादपूरणे" (८।८) (Sarasvati-edn.,)

तनम्। यस्याः सन्तुष्ट्याः सर्वलोकैकनाथः विष्णुरास्पदं नाम इति पूर्वश्लोकगतैः सन्तुष्ट्यादिभिरन्वयः। तस्याः सौम्यतायाश्च तस्याः क्षमायाश्च तस्या मायाश्च तस्या धियश्च तस्या उन्नत्याश्च तस्याः श्रियश्च विष्णुरास्पदमिति सम्बन्धः। सन्तुष्ट्यादिभिर्गुणैर्विष्णुरेवायमिति सम्भाव्यते। सम्भावनायां नामशब्दः। 'नाम प्रकाश्यसम्भाव्य-क्रोधोपगमकुत्सने' इति सिंहः। पूर्ववत् स्सा स्से इत्यादयः। शालिनी-वृत्तम् ॥

कहिं वि रत्ताहु जहिं तहिं धरा
कस्सिं वि जस्सिं खळु तस्सिमीसिदा।
परक्कमो कम्मि वि जम्मि तम्मि सो
जए सिरी कत्थ वि जत्थ तत्थ सा ॥ २४ ॥

छाया—

कस्मिन्नपि रक्ता हु यस्मिंस्तस्मिन् धरा
कस्मिन्नपि यस्मिन् खळु तस्मिन्नीशिता।
पराक्रमः कस्मिन्नपि यस्मिंस्तस्मिन् सः
जये श्रीः कस्मिन्नपि यस्मिंस्तस्मिन् सा ॥

यस्मिन् कस्मिन्नपि भूपतित्वाभिमानिनि पुरुषे वर्तमाना धरा भूमिः तस्मिन् हु तस्मिन्नेव रक्ता कृष्णे एवानुरागवती। अयमसाधारणः पतिरित्यर्थः। यस्मिन् कस्मिन्नपि वर्तमाना ईशितापि तस्मिन्नेव रक्ता पक्षपातयुक्ता। यस्मिन् कस्मिन् पुरुषे वर्तमाना सा प्रसिद्धा जये श्रीः जयश्रीरपि तस्मिन्नेव। उत्तरश्लोकगतेन इममित्यनेनास्य श्लोकस्य सम्बन्धः।

"$डेर्हिं वा" (६।७) इत्यनेन किंयत्तद्भ्य उत्तरस्य ङेः सप्तम्येकवचनस्य वा हिं भवति । हिमभावपक्षे स्सिम्मित्थाः पूर्वविहिताः इति चत्वार आदेशाः । कहिं जहिं तहिं, कस्सिं जस्सिं तस्सिं, कम्मि जम्मि तम्मि, कत्थ जत्थ तत्थ । वंशस्थेन्द्रवंशाभ्यामुपजातिवृत्तम् ॥

काहे दिणम्मि कइआ अ पए कहिं अ
णत्तं वि कस्सिसु णिसापमुहम्मि कम्मि ।
सामाविरामपहरे अह कत्थ काळे
अम्हो इमं विणिइराण कअत्थदा ण ॥ २५ ॥

छाया—

कस्मिन् दिने कस्मिंश्च प्रगे कस्मिंश्च
नक्तमपि कस्मिन् निशाप्रमुखे कस्मिन् ।
श्यामाविरामप्रहरेऽथ कस्मिन् काले
अस्माकमिमं विद्रष्टॄणां कृतार्थता न ॥

तमिमं धराराणादेर्विषयभूतं विशेषेण द्रष्टॄणामस्माकं कस्मिन् काले कृतार्थता न एतद्दर्शनेन वयं सर्वदैव कृतार्था इत्यर्थः । तानेव कालविशेषानाह— दिनेऽहनि एकस्मिन् प्रगे उदयान्तरभवे प्रातःकाले कस्मिन्नक्तं रात्रौ कस्मिन्निशाप्रमुखे प्रदोषे । उरपिशब्दार्थे । 'त्वं व्योम त्वमु धरणिरि'त्यादिवत् । कस्मिन् श्यामाविरामप्रहरे श्यामाया रात्रेः विरामप्रहरे अवसानयामे उषसीत्यर्थः । 'श्यामा स्याच्छारिवा निशा' इति सिंहः । कृष्णस्य तत्तत्कालोचितैः क्रीडाविशेषैरतिरमणीयत्वादेवमुक्तिः ।

---

$ 'ङेर्हिं' मुद्रितपाठः ।

"[†]आहे इआ च काले" (६।८) इत्यनेन किंयत्तद्भ्य उत्तरस्य ङेः सप्तम्येकवचनस्य आहे इआ च विधीयेते। चकारात् पूर्वविहिताः हिंस्सिम्मित्थाश्च भवन्ति। एवं किमादीनां त्रयाणामत्र ङौ षड्रूपाणि भवन्ति। काहे कइआ कहिं कस्सिं कम्मि कत्थ। वसन्ततिलकावृत्तम्॥

जाहे णच्चइ आहसेइ जइआ कण्हो जहिं गाअए
जस्सिं खुप्पइ जम्मि खाइ समए संठाअए जत्थ अ।
ताहे णच्चिमु आहसेमु तइआ अम्हे तहिं गाइमो
तस्सिं खुप्पिमु तम्मि खामु समए संठाइमो तत्थ अ॥२६॥

छाया—
[1]यस्मिन्नृत्यत्याहसति [2]यस्मिन् कृष्णो यस्मिन् गायति
यस्मिन्मज्जति यस्मिन् खादति समये सन्तिष्ठते यस्मिंश्च।
[3]तस्मिन्नृत्याम आहसा[4]मः तस्मिन् वयं तस्मिन् गायाम
तस्मिन्मज्जा[5]मः तस्मिन् खादा[6]मः समये सन्तिष्ठामहे तस्मिंश्च॥

कदाचिदपि भगवता विरहं सोढुमक्षमा गोपा वदन्ति—यस्मिन् समये कृष्णो नृत्यति तस्मिन् समये वयमपि नृत्यामः। यस्मिन् समये काले कृष्ण आहसति आभीक्ष्ण्येन हसति तस्मिन् काले वयमपि आहसामः। एवं सर्वत्र योजनीयम्। संस्थितिः सम्यगवस्थानम्।

अत्र श्लोके यच्छब्दतच्छब्दयोः षट् षड्रूपाणि उदाहृतानि। जाहे जइआ ताहे तइआ तहिं इत्यादि। शार्दूलविक्रीडितं वृत्तम्॥

---

† "आहे इआ काले" मुद्रितपाठः।

---

१. 'यदा' घ. २. 'यदा' ध. ङ. ३. 'तदा नृ' ध. ङ.
४. 'मस्त' क. ख. घ. ५. 'मस्त' क. ख. घ. ६. 'मः स' क. ख. घ.

कत्तो अम्ह एस पत्तो[1] कदो वा
जत्तो तत्तो हुं जदो ऊ तदो हु[2] ।
किं णो मिच्छा[3]चिंतणादो तदो तो
भग्गं किंपि च्चेअ णिण्णीदमेदं ॥ २७ ॥

छाया—
कुतो[4]ऽस्मादेष प्राप्तः कुतो[5] वा
यतस्ततो [6]हुं यत ऊँ ततो हु ।
किं नो मिथ्याचिन्तना[9]त्ततस्ततो-
भाग्यं किं[10]अपि चैव[11] निर्णीतमेतत् ॥

कुतः कस्मात् स्थानात् कस्माद्वा हेतोः एष कृष्णः अस्मान् प्राप्त इत्येक आह । अन्य आह– हुं इति निवारणे अलं वितर्केणेत्यर्थः । ऊ इत्याश्चर्ये । एवं कुत्रापि न दृश्यत इति भावः । हु इति च निश्चये। आश्चर्यमित्येव निश्चीयते । यतस्ततः स्थानादस्तु यतस्ततो वा हेतोः। किं नो मिथ्याचिन्तनात् । स्थानहेत्वोस्तत्त्वज्ञाने वयं न शक्ता इति भावः । ततस्ततः यद्यदेतदीयं कर्म तस्मात्तस्मादस्मदीयं किमप्यनिर्देश्यम्, च्चेअशब्द एवार्थे, इत्येतन्निर्णीतमेव । अत्र न नः संशय इति भावः । यद्वा ततः स्थानात् ततो हेतारस्माकं किमप्यनिर्देश्यं भाग्यं कृष्णतया प्राप्तं निर्णीतमित्यर्थः ।

---

१. 'पत्थो' क. ख.  २. 'खु' ङ.  ३. 'हंत' ङ.
४. 'कस्मादस्मा' क. ख.  ५. 'कस्माद्वा' क. ख.
६. 'हुमिति निवारणे यत' घ,
७. 'ऊ इति विस्मये सूचनायां वा ततो' घ. ङ.
८. 'खु इति निश्चये' ङ.
९. 'नात्तस्मात्तस्माद्भाग्यं' क. ख.  १०. 'मप्येव निर्णी' घ.
११. 'चेयेत्यवधारणे निर्णी' ङ.

* "त्तो दो ङसेः"(६।९)इत्यनेन किमादिभ्य उत्तरस्य ङसेः पञ्चम्येकवचनस्य त्तो दो विधीयते। कत्तो कदो, जत्तो जदो, तत्तो तदो। §"तद ओऽच्च।"(६।१०) इत्यनेन तच्छब्दस्याचा सह तच्छब्दादुत्तरस्य ङसेः पञ्चम्येकवचनस्य ओकारो विधीयते। शालिनीवृत्तम् ॥

इत्थं से वआणिळआ गुणे वअन्ता
संतुट्ठा मुहमणु तास पेच्छमाणा।
ते जाओ उवणिअऊण तस्स हासो
सिं सद्दा विळसइ[1] ताण को इमो व ॥ २८ ॥

छाया—

इत्थं तस्य व्रजनिलया गुणान् वदन्तः
सन्तुष्टा मुखमनु तस्य पश्यन्तः।
[2]तान् जात उपदृश्य तस्य हासः
तेषां शब्दान् विलस[3]ति तेषां कोऽयमिव ॥

व्रजनिलयाः गोपाः तस्य गुणानित्थं वदन्तः सन्तुष्टा अभूवन्निति शेषः। कीदृशाः। तस्य मुखमनुपश्यन्तः अनुक्षणं पश्यन्तः अन्तरान्तरा पश्यन्त इत्यर्थः। तेषां शब्दान्। तस्य कृष्णस्य तान् गोपानुपदृश्य हासो जातः प्रीत्यतिशयात्। तेषां गोपानामयमिव कृष्ण इव को विलसति अयमेवैवं विलसतीति तात्पर्यम्।

* 'ओत्तोदो ङसेरनिदमः' (Sarasvati-edn.)
§ 'तद ओश्च' (Chow-edn.)

१. 'सउ' ङ.　　२. 'ते जात' ङ.
३. 'सतु तेषां' घ. ङ.

"ङसा से" (६।११) इत्यननेन तच्छब्दस्य ङसा षष्ठ्येकवचनेन सह से आदेशः । से, पक्षे तास । "आमा सिं" (६।१२) इत्यनेन तच्छब्दस्य आमा षष्ठीबहुवचनेन सह सिमादेशः । सिं, पक्षे ताण । *"किमः कोऽनपुंसके" (६।१३) इत्यनेनानपुंसकविषये किमः कादेशः, को । "इदम इमः" (६।१४) इत्यनेन इदम इमादेशः इमो । प्रहर्षिणीवृत्तम् ॥

अथ,

'विषवृक्षः कपित्थोऽभूत् कालिन्द्या दक्षिणे तटे ।
प्रभूतस्कन्धविटपः खगमैरनुवासितः ॥'

इत्यादि श्रीहरिवंशे प्रसिद्धं प्रमेयं वक्तुमुपक्रमते । तत्र च तस्य वृक्षस्य वायुसमानीतपुष्परेणुकणगन्धवशाद् गोपालादीनां ज्वरातीसारादिपीडा बभूव । तद्भार्यापुत्रादीनां गोवत्सादिरूपेण समीपे वर्तनात् तन्निग्रहे गोहत्याशङ्का मा भूदिति तूष्णीमासीने कृष्णे नन्दादीनां मतेन तत्पीडाशान्तिः । विशिष्टदेवालये शिवपूजायां विप्रैः कारितायां कस्मिंश्चिद्विप्र आविष्टेन शिवाज्ञाकरेण केनाचिद् भूतेनोक्तम्—कालकलिर्नामकश्चिदसुरो विषवृक्षरूपी जातः । तद्भृत्याश्च विषकञ्जकिवृक्षलतारूपा जाताः । तद्भार्याः पुत्राश्च गोरूपा वत्सरूपाश्च तत्सान्निधौ वर्तन्ते । तेन वो ज्वरादिपीडोद्भवः । स च कृष्णरामाभ्यां हन्तव्य इति । तदनन्तरं शिवपूजामाहात्म्यात् पीडायामपि प्रायेण शान्तायां मन्दीकृततन्निग्रहप्रवृत्तौ कृष्णे कदाचित् तेभ्यो महानुपद्रवः सञ्जात इत्याह—

तत्तो अस्स पिए इमस्स णिळए वुंदावणे सोरिणो
अस्सिं कंतभरे इमस्सिमहिवे संकीळमाणे इह ।

---

* 'किमः कः' मुद्रितपाठः ।

---

१. 'ङसावामे इत्यनेन तच्छब्दस्यामा षष्ठीबहुवचनेन सह सिमादेशः । सी पक्षे ताण ।' क. ख.

जाअं णाम इदं इणं हु इणमो पावं त्ति अक्कोसिअं
हाउं ताउमिदं इणं च इणमो रक्खेसु णाह त्ति अ ॥२९॥

छाया—

ततोऽस्य प्रियेऽस्य निलये वृन्दावने शौरेः
अस्मिन् कान्तभरेऽस्मिन्नधिपे सङ्क्रीडमाने इह ।
जातं नामेदमिदं हु इदं पापमित्याक्रोशितं
हातुं त्रातुमिदमिदं चेदं रक्ष नाथेति च ॥

ततः शिवपूजया मुक्तपीडेषु जनेषु भगवति चोदासीन इव स्थिते कदाचिद् इति एवंप्रकारम् । आक्रोशितम् आह्वानं रोदनं च कृतम् । किमर्थं- हातुम् उपद्रवहेतुमिति शेषः । तत् किमर्थम्- त्रातुं व्रजमिति शेषः । आक्रोशितप्रकारमाह- अस्य शौरेः प्रिये इष्टे इह वृन्दावने इदं पापं जातम् । बहुनाद्युक्तिवशादसकृदिदंशब्दप्रयोगः । पापानुचितत्वेन वृन्दावनं विशिनष्टि-अस्य निलये निवासभूते । नैतावन्मात्रम् । अस्मिन्नधिपे नाथे कृष्णे । अस्मिन् वृन्दावने कान्तभरे न्यस्तसमस्तरक्षणीयभारे सङ्क्रीडमाने सत्यपि रक्षितुरसान्निध्यादपि नेत्याभिप्रायः । नामशब्दः कुत्सायाम् । हे नाथ त्वमिदं वृन्दावनं रक्ष इति चाक्रोशितम् । अत्रापि पूर्ववदिदंशब्दबहुत्वम् ।

*"स्सास्सिमोरद्वा" (६।१५) इत्यनेन इदमः स्सास्सिमोः परतो वा अद् भवति । अस्स, इमस्स । अस्सि, इमस्सि । "†ङेर्दा हः" (६।१६) इत्यनेन ङेः सप्तम्येकवचनस्य इदमो दकारेण सह हकारः । इह । "न त्थः" (६।१७) इत्यनेन त्थादेशः प्रतिषिध्यते । तेनेदमः त्थादेशो

---

* 'अं स्सिंस्सयोर्वा' (Sarasvati-edn.)

† 'ङेर्देन हः' (Chow-edn), 'ङेर्मेन हः' (Sarasvati-edn.)

नोदाहृतः। "नपुंसके स्वमोरिदमिणमिणमो" (६।१८) इत्यनेन नपुंसके स्वमोः परतः इदमः इदं इणं इणमो इत्येते आदेशा भवन्ति । इदं, इणं, इणमो। एवमग्रे च। इदं रक्खेसु इत्यादि। शार्दूलविक्रीडितं वृत्तम् ॥

तत्तो कण्हो एस एसो ह्मि णाहो
एत्तो रक्खं जाह एदा समिद्धिं[1] ।
एदादो[2] सं केळिमेदादु सव्वं
एदाहि त्ति च्चेअ गाईअ सोरी ॥ ३० ॥

छाया—

ततः कृष्ण एष एषोऽस्मि[3] नाथः
एतस्माद्रक्षां यात एतस्मात् समृद्धिम् ।
एतस्माच्छं केलिमेतस्मात् सर्वं
एतस्मादिति च्चेअ[4] जगौ शौरिः ॥

ततः आक्रोशानन्तरं शौरिः इत्येवं जगौ उक्तवान् । उक्तिप्रकारमाह— एष कृष्णः आजगामेति शेषः। एषोऽहं नाथोऽस्मि भवतां पालयिता। एतस्मान्मत्तो यूयं रक्षां यात । एतस्मात् समृद्धिं यात। एतस्माच्छं यात। एतस्मात् केळिं यात। किं बहुना अभीप्सितं सर्वमप्येतस्माच्चेय एतस्मादेव यूयं यातेति ।

*"एतदः सावोत्वं वा" (६।१९) इत्यनेन एतच्छब्दस्य प्रथमैकवचने वा ओत्वम्। एस, एसो । "त्तो ङसेः" (६।२०) इत्यनेन पञ्चम्येकवचने त्तो इत्यादेशः। एत्तो। पूर्वोक्ता आदोदुहयश्च भवन्ति । एदा

* 'एतदः सोरोत्वं वा' (Sarasvati-edn.)

1. 'समिच्छि' ङ. 2. 'एदासो' क. ख.
3. 'ह्मिन्नाथः' क. ख. घ. ङ. 4. 'चेएत्यवधारणे जगौ' घ. ङ.

इत्यादि । एत्तो इत्यत्र *"त्तोत्थयोस्तो लोपः" (६।२१) इति तकार-लोपः । शालिनीवृत्तम् ॥

एत्तो रक्खं वच्चिम[1] च्चेअ एत्थ
सो एसो णो वल्लहो सा गई अ ।
एसा एदं मंगळं सं असुं णो
इत्थंवाआ तं पवण्णा अ गोपा ॥ ३१ ॥

छाया—

एतस्माद्रक्षां व्रजामः[2] च्चेअ[3] एतस्मिन्
स[4] एष नो वल्लभः सा गतिश्च ।
एषा एतन्मङ्गळं शं अदो नः
इत्थंवाचस्तं प्रपन्नाश्च गोपाः ॥

गोपाश्च भगवद्वचनश्रवणजनिताश्वासाः इत्थंवाचः इत्थम्भूता वाचो येषां ते इत्थंवाचः तं भगवन्तं प्रपन्नाः शरणं प्राप्ताः । कथंवाच इत्याह– वयमेतस्माद्रक्षां व्रजाम एव । एतस्मिन् भूप्रदेशे स एषः यः पूर्वमपि सर्वसङ्कटेषु अस्मानरक्षीत्, नः अस्माकं वल्लभः मनोनुकूलः स्वामी । सा या इदानीमस्माकं योगक्षेमकारिणी सैषा गतिश्च एषः । इदं सर्वजनप्रार्थनीयं मङ्गळं च एषः । अदः विशिष्टतरं शं सुखं च एष नः ॥

* 'त्तत्थयोस्तस्य लोपः' (Sarasvati-edn.),
'त्तोत्थयोस्तलोपः' (Chow-edn.)

१. 'वच्चिमे च्चेय' क. ख. २. 'व्रजामहे' क. ख.
३. 'च्चेअ इति प्राग्वत् । एत' घ, 'चेएत्यवधारणे । एत' ङ.
४. 'सोऽपि एष' ङ.

"त्तोत्थयोस्तो लोपः"(६।२१) इत्यनेनातीतसमनन्तरविहितस्य त्तो इत्यस्य "ङेः स्सिम्मित्थाः" इति सूत्रितस्य त्थादेशस्य चेत्येतयोः परत्वे एतदस्तकारस्य लोपः । 'अन्त्यहलः' इति दकारलोपः । 'सन्धा-वचा'मित्यकारलोपः । एत्तो, एत्थ । "तदेतदोस्सस्सावनपुंसके" (६।२२) इत्यनेन तदेतदोस्तकारस्य सौ परतः सकारादेशोऽनपुंसकविषये विधीयते । सो एसो, सा एसा । नपुंसके तु एदं मङ्गलं । "अदसो दो मुः"(६।२३) इत्यनेनादःशब्दे दकारस्य सुपि परतः त्रिषु लिङ्गेषु मु इत्यादेशः अमु । शालिनीवृत्तम् ॥

अह धीरमब्भुदंमसुं सुहं च दे[1][2]
अह धी अमु च्चिअ सिरी णओ अह ।
अइओ अमू तमहिवो तुवं तुमं
अइमो तुमं च्चिअ गइत्ति ते णआ ॥ ३२ ॥

छाया—

अदो धैर्यमद्भुतमदः सुखं च ते
असौ धीरसौ च्चिअ[3] श्रीर्नयोऽसौ ।
अजितोऽसौ त्वमधिपस्त्वं त्वा-
मयामहे[4] त्वं च्चिअ[5] गतिरिसि ते नताः ॥

च्चिअनिपातद्वयमवधारणे । शरणं प्रतिपन्ना ये गोपाः ते इत्युक्त्वा नताः भगवत्पादमूले कृताञ्जलिपुटा नेमुः । कथमुक्त्वे-त्याह- अदस्ते अद्भुतं धैर्यम् अस्मासु भीतेषु अभीतोऽस्मान् रक्षितु-

१. 'अममुं' ङ.     २. 'ते' ङ.
३. 'च्चियेत्यवधारणे । श्री' घ. ङ.     ४. 'मयामस्त्वं' घ.
५. 'चियेत्यवधारणे । गति' घ. ङ.

मपि प्रगल्भसे यत्। अदश्च ते सुखं यत् सर्वेषां रक्षणम्। असौ ते श्रीः या सदा जगद्रक्षणनिपुणा। असौ ते श्रीः शोभा या रक्षाप्रवृत्तौ परैरभिभवनीया। असौ ते नयः उपायः कदाचिदपि न सीदति यः असावेवं-गुणविशिष्टः। त्वमजितः कदाचित् केनचिदपि न जितः। अधिपस्त्वम् अजितत्वादेव त्वमधिपो भूत्वा पालयितेत्यर्थः। अत एव त्वामयायहे त्वमेव गतिः अस्माकमिति शेषः।

"हश्च सौ"(६।२४) इत्यनेनादश्शब्दस्य सौ परतो हकारादेशः। चकारान्मुत्वं च। अह अमु, अह अमू, अह अमुं। "पदस्य"(६।२५) अधिकारसूत्रमिदम्। अतः परं वक्ष्यमाणं पदस्येति वेदितव्यम्। न प्रातिपादिकमात्रस्य नापि विभक्तिमात्रस्य। *"युष्मदस्तं तुवं सौ" (६।२६) इत्यनेन युष्मदः पदस्य सौ परतस्तं तुवं इत्येतौ विधीयेते। तं तुवं। †"तुममामि च" (६।२७) इत्यनेन अमि द्वितीयैकवचने परतः तुममिति रूपं भवति। चकारात् सौ परतश्च। तुमं अइमो, तुमं विअ गई। मञ्जुभाषिणीवृत्तम्॥

तुज्झे सुहा सुवह धीरअरा हु तुम्हे
वो किं भअं सरइ वाहइ को अ तुज्झे।
तुम्हे परक्खमि पसंसह मीणिमित्तं
संचोइएहि अणिअं हरिणत्ति तेहिं॥ ३३॥

छाया—

यूयं शुभा भवत धीरतरा हु यूयं
युष्मान् किं भयं सरति बाधते कश्च युष्मान्।

* 'युष्मदस्तं तुमं' मुद्रितपाठः
† 'तुं चामि' मुद्रितपाठः।

१. 'तुम्मे' क. ख. २. 'तुम्मे' क. ख.
३. 'शुभाः सुखा इति वा भवत' घ. ४. 'हु इति निश्चये यूयं' घ.

युष्मान् प्ररक्षामि प्रशंसत भीनिमित्तं
सञ्चोदितैर्भणितं हरिणेति तैः ॥

तेषां नमनानन्तरं भगवतस्तदाश्वासनदायि वचनमाह- हे गोपाः यूयं शुभाः त्यक्तदुःखतया प्रसन्ना भवत । धीरा हु यूयम् । हु निश्चये । अतः किमेवं चापलं क्रियते युष्माभिरिति भावः । युष्मान् मन्नाथान् किं भयं सरति । किंशब्दः क्षेपे । प्रबलेषु बाधितृषु सत्सु कथं भयराहित्यमित्यत्राह—बाधते कश्च युष्मान् । अत्र किंशब्दः प्रश्ने । प्ररक्षामि प्रकर्षेण रक्षाम्यहं युष्मान् । अतो भीनिमित्तं प्रशंसत साकल्येन कथयत इत्येवं हरिणा सञ्चोदितैर्नियुक्तैस्तैर्गोपैः इति वक्ष्यमाण-प्रकारेण कथितम् ।

*"तुज्झे तुम्हे जसि" (६।२८) इत्यनेन जसि प्रथमाबहुवचने तुज्झे तुम्हे इत्येतावादेशौ भवतः । तुज्झे तुम्हे । "वो च शसि"(६।२९) इत्यनेन शसि द्वितीयाबहुवचने वो इत्ययमादेशः । चकारात् तुज्झे तुम्हे च । वो सरइ । तुज्झे बाहइ । तुम्हे परक्खामि । वसन्ततिलकं वृत्तम् ॥

तइ तएअ तुमे तुमए वओ
विळसिओ रमिओ ठविओ धओ ।
तइ तए अ तुमे तुमए अ णो
सइ मणो णअणं वअणं पसू ॥ ३४ ॥

छाया—

त्वया त्वया च त्वया त्वया व्रजो
विलसितो रमितः स्थापितो धृतः ।

---

* 'तुज्झे तुज्झ तुम्हे जसि' (Sarasvati- edn.)

---

१-४ 'तुम्मे' क. ख.

त्वयि त्वयि च त्वयि त्वयि च नः
सदा मनो नयनं वचनं पशवः ॥

त्वया व्रजो विलसितः स्वसान्निध्येन शोभितः त्वया रमितश्च सुखैकशरणः कृतश्च । न केवलं सन्निधिजनितां शोभां कृतवानसि पक्षपातविशेषजनितं सुखसम्पादनमपि कृतवानसीत्यर्थः । ततोऽपि विशेषोऽस्ति- त्वया स्थापितः स्थिरीकृतः तत्तदापन्निरसनात् । अत एव त्वया धृतः। उक्तानां विलसनरमणस्थापनधारणानां यथाक्रमेण फलमाह- त्वयि सदा नो अस्माकं मनो नयनं च सुखहेतु मनोनयनसङ्गजनकत्वात् । त्वयि सदा नो वचनं च । आत्मस्थापयितरि हि स्वामिनि सर्वेषां गुणकीर्तनोपपत्तेः । त्वयि सदा नः पशवश्च । गोपानां नः पशुधनत्वात् ।

"टाङ्योस्तइ तए तुमे तुमए" (६।३०) इत्यनेन तृतीयैकवचने सप्तम्येकवचने च परतः तइ तए तुमे तुमए इति चत्वार आदेशाः प्रत्येकं विधीयन्ते । पूर्वस्मिन्- तइ विळसिओ, तए रमिओ, तुमे ठविओ, तुमए धरिओ । द्वितीयस्मिन्- तइ मणो, तए णअणं, तुमे वअणं, तुमए पसू । द्रुतविळम्बितं वृत्तम् ॥

तुव तुम तुह [1]तुम्ह तुज्झ तुब्भं
च्चिअ समसं समसं सुहं भअं णो ।
घसिमु पिबिमु ते हु [2]दे उ ते दे
वणमवणं च तुमाइ सप्पहु ह्मो ॥ ३५ ॥

---

१. 'तुब्भ तुज्झ तुम्ह' क.  २. 'दे खु ते' क.

छाया—

तव तव तव तव तव तव
[1]चिअ शमशं स्वमस्वं शुभं भयं [2]नः।
घसामः पिबामः त्वया हु त्वया [3]उ तव तव
वनमवनं च त्वया सप्रभवः स्मः॥

तव शं सुखमेव नः। चिअशब्द एवार्थे। तव सुखमेवास्माकं सुखम्। तवाशं असुखमेवास्माकमसुखम्। एवं स्वमादीनां चतुर्णामपि तवपदैः प्रत्येकं सम्बन्धः। स्वं धनादि अस्वं तद्विपरीतम्। शुभं मङ्गळं भयं भयनिमित्तम्। बिभेत्यस्मादिति। भयनिमित्तं शंसतेति हि पूर्वं भगवतोक्तम्। अयमभिप्रायः- यस्मिन् भयनिमित्ते तव भयबुद्धिर्नास्ति चेदस्माकमपि भीर्निवृत्तेति। एतद्वचनार्थमेव शमादिवचनमिति द्रष्टव्यम्। एवमस्मद्रक्षणोद्युक्तौ त्वयैव हेतुना वयं घसामः भक्षयामः। त्वयैव पिबामः। तवैव वनमिदं बृन्दावनम्। तवैवावनं रक्षणं त्वयैवेदं सर्वं रक्षणीयमिति भावः। त्वया वयं सप्रभवः स्मः भवामः। उ निश्चितमेतत्। अस्माकं देहादि सर्वस्वमपि त्वदधीनमेवेत्यर्थः।

*"ङसि तुवतुहतुमतुम्हतुज्झतुब्भाः" (६।३१) इत्यनेन ङसि षष्ठ्येकवचने तुवादयः षडादेशा विधीयन्ते। तुव सं, तुह असं, तुम सं, तुह्म असं, तुज्झ सुहं, तुब्भ भअं। "आङि च ते दे" (६।३२) इत्यनेनाङि तृतीयैकवचने चकारात् ङसि च ते दे इत्येतौ विधीयेते। ते घसिमु, दे पिबिमु, ते वणं, दे अवणं। "तुमाइ च" (६।३३) इत्य-

* 'ङसि तुमोतुहतुज्झतुह्मतुम्माः' (Chow- edn.,)
'ङसि तुमोतुहतुज्झतुवतुम्हाः' (Sarasvati- edn.,)

१. 'चिआवधारणे। शमशं' घ. २. 'अस्माकम्' घ. ङ.
३. 'खु प्राग्वत् तव' ङ.

नेन तृतीयैकवचने तुमाइ इति भवति । तुमाइ सप्पहु ह्मो । पुष्पिताग्रावृत्तम् ॥

वितुज्झेहि तुम्हेहि भव्वं ति लुद्धो
णुं तत्तो तइत्तो तुमादो तुमादु ।
तुमाहि व्व सद्दो धणी आकिदिंगो
पउत्ती मणक्खारगंधो अ पुव्वं ॥ ३६ ॥

छाया—
[2]वियुष्माभिर्युष्माभिर्भाव्यमिति लब्धो
नुँ त्वत् त्वत त्वत त्वत् ।
त्वदिव शब्दो ध्वनिराकृतिङ्गः
प्रवृत्तिर्मनस्कारगन्धैश्च पूर्वम् ॥

वीति वैपरीत्ये वियुष्माभिर्युष्माभिर्भाव्यम् । इदानीं पूर्वावस्थातो विपरीतैर्युष्माभिः पूर्ववद् भाव्यमित्यर्थः । इति एवंविधः शब्दः त्वद्, भवत्सकाशादेव लब्धः प्राप्तः अस्माभिरिति शेषः । 'तुज्झे सुहा भुवह' इत्युक्तत्वात् । एवं कथयतः त्वत् त्वत्तो ध्वनिरपि लब्धः । ध्वन्यते अनेनेति ध्वनिः प्राणः । वियुष्माभिर्युष्माभिर्भाव्यमिति भवद्वचनश्रवणात् प्रागस्माकं भयेन प्रायो गतप्राणत्वात् प्राणोऽपि ततः परमेव लब्धः । आकृतिङ्गः आकृतिं गच्छतीत्याकृतिङ्गः आकारयुक्तः । दिदृक्षितः सर्वोऽपि पदार्थ इति भावः । सोऽपि त्वदेव एवं वदतो भवत्सकाशादेव लब्धः । पूर्वं भयेनेदमित्थमिति द्रष्टुमशक्यत्वात् प्रवृत्तिश्च

---

१. 'ण तत्तो' ङ. २. 'वीति वैपरीत्ये युष्मा' ङ.
३. 'भंव्य' ङ. ४. 'न त्वत्' ङ.
५. 'न्धो वा पूर्वम्' घ. ङ.

त्वदेव उत्साहश्चैवं वदतस्त्वत्सकाशादेव अत्र लब्धेति लिङ्गविपरिणामेन योजना। त्वदेव मनस्कारगन्धश्च लब्धः। पूर्वं मनस्कारः चित्ताभोगः तस्य गन्धः प्रसरः। सर्वेषां व्यापाराणां मनःप्रसादमूलत्वात् तस्य पूर्वमिति प्राथम्योक्तिः। मा भैष्टेति भगवन्मुखादाश्वासने श्रुते पूर्वं मनःप्रसादो जातः। ततः प्राणस्य तत्सहकारिणां सर्वेन्द्रियाणां सामर्थ्यं जातमित्युक्तं भवति।

*"तुज्झेहि तुम्हेहि भिसि" (६।३४) इत्यनेन भिसि तृतीयाबहुवचने तुज्झेहि तुम्हेहि इत्येतावादेशौ भवतः। वितुज्झेहि तुम्हेहि। ¶"तत्तो तइत्तो तुमादो तुमादु तुमाहि ङसौ" (६।३५) इत्यनेन ङसौ पञ्चम्येकवचने तत्तो इत्यादयः पञ्चादेशाः क्रमेण विधीयन्ते। तत्तो तइत्तो तुमादो तुमादु तुमाहि। भुजङ्गप्रयातं वृत्तम्॥

अथ भगवदुक्तिमाह—

तुम्हाहिंतो णो इणं सव्वमज्जा
तुम्हासुंतो भीअहेउं सुणामु।
वो सोक्खत्थं हो सिसू [1]तुज्झ णं व
तुम्हाणं भी [2]मे त्ति कण्हो गईअ॥

---

* 'तुज्झेहिं तुझेहिं तुम्मेहिं भिसि' (Chow- edn.), 'तुज्झेहि तुब्भेहि तुम्हेहि भिसि' (Sarasvati- edn.)

¶ 'ङसौ तत्तो तइत्तो तुमादो तुमादु तुमाहि' (Chow- edn.), 'ङसौ तत्तो तइत्तो तुमाओ तुमाइ तुमाहि वा' (Sarasvati- edn.)

---

१. 'तुज्झणव्व' ङ. २. 'मत्ति' ङ.

छाया—

युष्मन्न इदं सर्वमार्याः[1]
युष्मद्भियो हेतुं शृणवानि ।
युष्माकं सौख्यार्थं युष्माकं शिशुर्युष्माकमिव
युष्माकं भीर्भ[2] इति कृष्णोऽगादीत् ॥

हे आर्याः! नः इदं सर्वमपेक्षणीयं वस्तु युष्मत् । तेषां मोहनार्थ-मिदं वचनम् । अहं भियः हेतुं युष्मच्छृणवानि । इदानीं भयमुक्त्वा तत्कारणं यथावत् कथ्यतामित्यभिप्रायः । युष्माकं शिशुरहम् । युष्माकं सौख्यमेव नान्यथा मन्तव्यम् । युष्माकं भीर्ममापि युष्माकमिव । अतो-ऽवश्यं भयहेतुमपनेष्यामीति भावः । इति एवंप्रकारं कृष्णोऽगादीद् गदितवान् ।

"तुम्हाहिंतो तुम्हासुंतो भ्यसि" (६।३६) इत्यनेन भ्यसि पञ्चमी-बहुवचने तुम्हाहिंतो तुम्हासुंतो इत्येतावादेशौ विधीयेते । तुम्हाहिंतो णो इणं तुम्हासुंतो भीअहेउं । "वो हो तुज्झाणतुम्हाणमामि" (३।३७) इत्यनेनामि षष्ठीबहुवचने वो हो तुज्झाण तुम्हाण इति चत्वार आदेशा विधीयन्ते । वो सोक्खत्थं, हो सिसू, तुज्झाणं, तुम्हाणं, भी मेत्ति । शालिनीवृत्तम् ॥

तुमास्सि णाहम्मि तुमम्मि रक्खए
वाहन्ति वच्चा इह केवि आसुरा ।
उत्तो इणंतेहि गईअ सो विहू
तुज्झेसु तुम्हेसु व णो भअं जए ॥

---

१. 'युष्मदस्माकमिदं' ख. ङ. २. 'भीर्ममेति' ङ.

छाया—

त्वयि नाथे त्वयि रक्षके
बाधन्ते वृक्षा (वत्साः)[1] इह केऽप्यासुराः ।
उक्त इदं तैरगादीत् स[2] विभु-
र्युष्मासु[3] युष्मास्विव नो भयं जगति ॥

त्वयि नाथे प्रभौ त्वयि रक्षके पालयितरि आसुराः असुराधिष्ठिताः केऽपि वृक्षा वत्साश्च इति तन्त्रेणार्थद्वयमभिप्रेतम् । वत्सपदं गवामप्युपलक्षणम् । बाधन्ते अस्मानिति शेषः । इतीदं वचनमिति शेषः । तैर्गोपैरुक्तः स विभुरगादीद् उक्तवान् । कथम्— जगति न केवलमिह । युष्मासु वर्तमानं भयं नः अस्माकं युष्मास्विव । तेषां प्रार्थनाप्राचुर्येण भगवदुक्तेरपि प्राचुर्यमिति द्रष्टव्यम् ।

*"ङौ तुमस्सि तुमम्मि" (६।३८) इत्यनेन सप्तम्येकवचने तुमस्सि तुमम्मि इत्येतौ विधीयेते । तुमस्सि णाहम्मि, तुमम्मि रक्खए । ¶"तुज्झेसु तुम्हेसु सुपि"(६।३९) इत्यनेन सुपि सप्तमीबहुवचने तुज्झेसु तुम्हेसु इत्येतौ विधीयेते । तुज्झेसु तुम्हेसु । वंशस्थेन्द्रवंशाभ्यामुपजातिः ॥

हं ते धुणामि अहमेत्थ खमो ण वेरी
किं अज्जुणाण अहअं मि अएह तुम्हे ।
मि च्चेअ ओ सरमि मं परिबाहिरो को
कण्हं समं ण मुणह त्ति चळीअ णाहो ॥

---

* 'ङौ तुमम्मि' मुद्रितपाठः ।

¶ 'तुज्झेसु तुब्भेसु तुम्हेसु सुपि' (Sarasvati-edn.,)

---

१. 'वत्सा इति वा इह' घ. ङ. २. 'ततो विभु' ङ.

३. 'विभुर्विधुरिति वा युष्मासु' घ. ङ.

छाया—

अहं तान् धुनोम्य[1]हमत्र क्षमो न वैरी
किमर्जुनयोरहं मामयध्वं यूयम् ।
अहं [2]चेअ [3]ओ सरामि मां परिबाधिता कः
कृष्णं मां न जानीथ इत्यचालीन्नाथः ॥

चेअ अवधारणे । ओ विकल्पे । नाथ इत्युक्त्वा अचालीत् चलितवान् । उक्तिप्रकारमाह— अहं तान् युष्मच्छत्रून् धुनोमि नाशयामि । अहमत्र शत्रुनिग्रहे क्षमः शक्तः । मम शक्तत्वं युष्माभिरपि ज्ञातमिति द्योतयन्नाह— नाहं किमर्जुनयोर्वैरी तयोः घातयितृत्वात् । यूयं मामयध्वं मया सह वृक्षनिपातनार्थं अनुगच्छतेति भावः । ओ उत अहमेव सरामि युष्माभिरत्र स्वैरं स्थीयताम् । स्वस्यासामर्थ्यशङ्कामपनयन्नाह— मां परिबाधिता कः न कोऽपीत्यर्थः । यूयं मां कृष्णं न जानीथ । ननु इति शेषः । अथवा पूर्वातीतं किमिति पदमत्रापि योजनीयम् । पूर्वापदानेन मयि विश्वस्ता भवतेत्यर्थः ।

"अस्मदो हमहमहअ सौ" (६।४०) इत्यनेनास्मच्छब्दस्य सौ परतः हं अहं अहअं इति त्रय आदेशा भवन्ति । हं धुणामि, अहं खमो, अहअं वेरी । †"मिरमि च"(६।४१) इत्यनेनामि द्वितीयैकवचने चकारात् प्रथमैकवचने च मीत्ययमादेशः । मि अएह । $"मं ममं" (६।४२) इत्यनेन द्वितीयैकवचने मं ममं इत्येतावादेशौ भवतः । मं परिबाहिरो, ममं मुणह । वसन्ततिलकं वृत्तम् ॥

---

† 'अहंस्मिरमि च(chow-edn.)' अम्मिरमि च' (Sarasvati-edn.)
$ 'मं ममं च (Sarasvati- edn.)

---

१. 'म्यहमेतस्मिन् क्षमो' घ. ङ.
२. 'चेय अवधारणे ओ विकल्पे सरा' घ.
३. 'ओ इति विकल्पार्थः सरा' ङ.

अम्हे पुव्वं हुमम्हे पउळह णणु मे किं ण सक्कं ममाइ
  वज्झा वच्छा रिऊ ते मइ हसह मए णिस्समे किं मइव्व ।
ते सक्कं किं मए ते विहअमणुगअं धीरमम्हेहि मत्तो
  हीणो तुं को मइत्तो समहिअकिरिओ मंसळो को ममादो ॥

छाया—
वयं पूर्वं [1]हुं अस्मान् [2]प्रपश्यत ननु मया किं न शक्यं मया
  वध्या वृक्षा (वत्सा इति च) रिपवस्ते मयि हसत मयि निश्रमे किं मयेव ।
त्वया शक्यं किं मया ते विहतमनुगतं धैर्यमस्माभिर्म-
  द्धीनस्त्वं को मत् समधिकक्रियो मांसळः को मत् ॥

पूर्वं भयेन मृतकल्पानां पश्चाद् भगवदुद्योगजीवातुना लब्धगर्वाणां गोपानां चेष्टितमाह समभिः श्लोकैः । वयं पूर्वमिति केचिदूचुः गच्छाम इति शेषः । अन्ये केचित् तान् निवारयन्त ऊचुः । हुमिति निवारणे मैवमित्यर्थः । अस्मान् प्रपश्यत प्रकर्षेण सावधानं पश्यत समालोचने सति हि वयमेव पूर्वं गन्तुं समर्था इति ज्ञात्वा स्थीयते युष्माभिरित्यर्थः । अन्यः कश्चिदाह— ननु मया किं न शक्यं यूयं सर्वेऽपि तिष्ठन्तु अहमेव साधयामि कार्यमित्यभिप्रायः । पुनरन्य आह— मया वध्या वृक्षाः वत्सा वा तद्रूपास्ते रिपवः । किं तव कत्थनेनेति शेषः । तस्मादपि स्वस्य विशेषं दर्शयन्नन्य आह— मयि निश्रमे मयि हसत मयि गत्वा तान् हत्वा निर्गतश्रमे निवृत्ते यूयं मयि विषयभूते हसत रिपुवधजनितसन्तोषनिमित्तं हासं कुरुध्वम् । अन्यः कश्चिदाह— किं मयेव त्वया शक्यं त्वयोक्तमिदं सर्वं मयैव खलु शक्यमिति भावः । रिपुवधाय गन्तुं प्रवृत्तमन्यं विलोक्यान्यः कुपित आह— किं मया ते

1. ‘हुमिति निवारणे पृच्छायां वा’ घ., ‘हुमिति निवारणे’ ङ.
2. ‘पश्यत’ क. ख. घ.

विहतं यतस्त्वं मया वध्यान् रिपून् पूर्वमेव जिघांससि मद्यशोपहरणाय किं मया तेऽपराद्धमिति भावः। अन्ये केचिदाहुः— अनुगतं धैर्यमस्माभिः। वयं न यूयमिव चपलवाचो भवामः क्रियामेवोत्तरीकुर्म इति भावः। अन्य आह— मद्धीनस्त्वं त्वमहमिव कर्तुं न शक्तः तस्मादहमेव पुरो गच्छामीत्यर्थः। अन्यः कश्चित् कश्चिदाह— को मत्समधिकक्रियः को मन्मांसलश्च क्रिययाकुत्वा चाहमेवाधिकः। अतोऽहमेव शक्ष्याम्येतत् कर्तुमित्यभिप्रायः। भगवति रिपुवधायोद्युक्ते तद्बलमवष्टभ्य स्थितानां गोपानामहमहमिकात्र प्रकाशिता।

"अम्हे जश्शसोः"(६।४३) इत्यनेनास्मच्छब्दस्य जश्शसोः परतः अम्हे इत्यादेशो विधीयते। अम्हे पुव्वं, अम्हे पउळह। "*आङि मे ममाइ"(६।४५) इत्यनेन आङि तृतीयैकवचने मे ममाइ इति रूपे विधीयेते। मे सक्कं, ममाइ वज्झा। "ङौ च मइ मए"(६।४६) इत्यनेन ङौ सप्तम्येकवचने चकारात् तृतीयैकवचने च मइ मए इत्येतावादेशौ विधीयेते। मइ हसइ, मए णिस्समे, मइव्व सक्कं, मए विहअं। "अम्हेहि भिसि"(६।४७) इत्यनेन भिसि तृतीयाबहुवचने अम्हेहि इति रूपं भवति। अम्हेहि अणुगअं। "मत्तो मइत्तो ममादो ममादु ममाहि ङसौ"(६।४८) इत्यनेन ङसौ पञ्चम्येकवचने मत्तो मइत्तो ममादो ममादु ममाहि इति पञ्चादेशा विधीयन्ते। मत्तो हीणो, मइत्तो समहिअकिरिओ, ममादो मंसळो। शेषमुत्तरश्लोके। स्रग्धरावृत्तम्। 'सत्त्वाधिकानां पुंसां तु धनुर्वेदोपजीविनाम्। गर्जनाज्जायते शक्तिः स्वरश्च न विषीदति' इति न्यायेनास्मिन्नपि श्लोके गोपानामहमहमिकोत्कर्षः प्रकाश्यते। एवमुत्तरत्रापि द्रष्टव्यम्॥

---

* 'णो च शसि' (६।४४) इति सूत्रं नोदाहृतम्।

अण्णो को सो विक्कमज्जो ममादु
णीउल्लो को सत्तुदाहे ममाहि ।
अम्हाहिन्तो ळाहवं काण हत्थे
अम्हासुन्तो के ण बीहन्ति सत्तू ॥ ४१ ॥

छाया—

अन्यः कः स विक्रमज्ञो मत्
नीतिमान् कः शत्रुदाहे मत् ।
अस्मल्लाघवं केषां हस्ते
अस्मत् के न बिभ्यति शत्रवः ॥

मदन्यः विक्रमज्ञः यः स कः न कोऽपीत्यर्थः । "अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते" (पा० सू० २-३-२९) इति पञ्चमी । शत्रुदाहे मन्नीतिमान् कः । अत्र विभक्ते पञ्चमी । अस्मद्धस्ते लाघवं केषाम् । लाघवं शीघ्रकारिता, अत्रापि विभक्ते पञ्चमी । के शत्रवोऽस्मन्न बिभ्यति । अत्र "भीत्रार्थानां भयहेतुः" (पा० सू० १-४-२५) इति पञ्चमी ।

ममादु अण्णो, ममाहि णीउल्लो इति पूर्वसूत्रोदाहरणम् । "अम्हाहिन्तो अम्हासुन्तो भ्यासि"(६।४१) इत्यनेन भ्यासि पञ्चमीबहुवचने अम्हाहिन्तो अम्हासुन्तो इत्येतावादेशौ विधीयेते । अम्हाहिन्तो ळाहवं, अम्हासुन्तो बीहन्ति । शालिनीवृत्तम् ॥

मे सा ळट्ठी कुठारो मम मह पळिहो[1] मज्झ बाहू हु सत्थं
का णो भी अम्ह तुम्हे भुवइ परिसरे सत्थमम्हाणमस्सा[2] ।

---

१. 'फलिहो' क.  २. 'अत्थ' क.

अम्हे रुक्खो ममम्सि तुवरह चलिए धी ममम्मिव्व कस्सि
अम्हेसु च्चेअ फद्धा तुह अहमअळो दोहि ओ तिहि तेहि ॥

छाया—

[1]मे सा यष्टिः कुठारो मम मम परिघो मम बाहुर्हुं[2] शस्त्रं
कास्माकं भीरस्माकं यूयं भवत परिसरे शस्त्रमस्माकमश्मा[3][4] ।
अस्माकं वृक्षो मयि त्वरध्वं चलिते धीर्मय्येव कस्मिन्
अस्मासु [5]चेअ स्पर्धा तवाहमचलो द्वाभ्यां [6]ओ त्रिभिस्तैः ॥

रिपुवधार्थमुद्युक्तेषु गोपेषु कश्चिदाह– मे सा यष्टिरिति । वत्स-रूपान् रिपूनहं निगृह्णामि इत्यभिप्रायः । पुनरन्य आह– मम कुठार इति । वृक्षरूपानहं भिनद्मीत्यस्याभिप्रायः । पुनरपर आह– मम परिघः । गोरूपान् रिपून् हन्मीत्यस्याभिप्रायः । मम बाहुरेव शस्त्रम् । अहं बाहुभ्यामेव मत्पुरः पतितान् शत्रून् सूदयामीत्यस्याभिप्रायः । पुनरपर आह– भीतिः का । नोऽस्माकं भीः । यूयं भवत अस्माकं परि-सरे सङ्घातभूतैर्युष्माभिः । मम भीराहित्यमित्यस्याभिप्रायः । अन्ये केचिदाहुः– शस्त्रमस्माकमश्मा । वयमश्मभिरेव दूरतो रिपून्मारयितुं समर्था इत्यभिप्रायः । अन्ये केचिदाहुः– अम्हो रुक्खो अस्माकं वृक्षः इति । न त्वायुधनियमोऽस्माकम् । शत्रून् कुतश्चिद् वृक्षानप्युत्पाट्य निष्प-त्रीकृत्य तैरेव हन्तुं समर्था इत्यभिप्रायः । अन्यः कश्चिदाह– मयि चलिते यूयं त्वरध्वम् । नाहं युष्मान् मन्दमतीन् प्रतिपाल्य विलम्बनं सहे इति भावः । अन्य आह– धीर्मय्येव कस्मिन् मद्बुद्धिरेवाञ्जसा वर्त-माना रिपुनिग्रहार्थमित्यभिप्रायः । पुनरन्य आह– अस्मास्वेव स्पर्धा तव । अस्मद्गमनसमय एव तन्निरोधायेव तव च गमनारम्भ इत्यभि-

१ 'मम सा' घ. ङ.
२. 'हुं, इति सम्भावनायां'
३. 'अस्त्र' घ. ङ.'
४. 'श्माश्मान इति वा' घ. ङ.
५. 'चेअ अवधारणे' घ.
६. 'ओ विकल्पे त्रि' घ. ङ.

प्रायः । पुनरन्य आह- अहं द्वाभ्यां त्रिभिर्वा तैरचलः । ओ इति विकल्पे । बहुभिरपि शत्रुभिरहमप्रकम्प्य इति भावः ।

"मे मम मह मज्झ ङसि"(६।५०) ङसि षष्ठ्येकवचने मे इत्यादयश्चत्वार आदेशा भवन्ति । मे लट्ठी, मम कुठारो, मह फलिहो, मज्झबाहू । *"णो अम्ह अम्हाण अम्हे आमि"(६।५१) इत्यनेन आमि षष्ठीबहुवचने णो इत्यादयश्चत्वार आदेशा भवन्ति । णो भी, अम्ह परिसरे, अम्हाणं सत्थं, अम्हे रुक्खो । ¶"ममस्सि ममम्मि ङौ" (६।५२) इत्यनेन ङौ सप्तम्येकवचने ममस्सि ममम्मि इत्येतावादेशौ भवतः । ममस्सि चलिए, ममम्मि धी । "अम्हेसु सुपि" (६।५३) इत्यनेन सुपि सप्तमीबहुवचने अम्हेसु इत्ययमादेशो विधीयते । अम्हेसु पत्था । "द्वेर्दो"(६।५४) इत्यनेन द्विशब्दस्य दो इत्यादेशो विधीयते । दोहि । "त्रेस्ती" (६।५५) इत्यनेन त्रिशब्दस्य तीत्ययमादेशो विधीयते । तीहि । जश्शसोर्विशेषविधेर्वक्ष्यमाणत्वाद् दोहि तीहि इति तृतीयान्तत्वनिर्देशः । स्रग्धरावृत्तम् ॥

एवं वदतां गच्छतां कृष्णरामप्रधानानां तेषां विपत्रवृक्षवत्सगोषु समीपस्थेषु तान् दृष्ट्वा प्रवृत्तिमाह—

अम्हे वच्छे जामु ते तिण्णि तिण्णि
अम्हे जामो ते दुवे हुं दुवे वि ।
अम्हे अग्गे [1]जाम ते वेण्णि वेण्णि
अम्हे दो दो ते हु जुत्तम्ह दोहि ॥ ४३ ॥

---

* 'मज्झणो अह्म अह्माणमह्मे आमि' (chow-edn.)

¶ 'ममम्मि ङौ' (Chow-edn.), 'ममम्मि च' (Sarasvati-edn.)

---

१. 'जामु' ङ.

छाया—

वयं वृक्षान् यामस्तान् त्रयस्त्री-
नावां यावस्तौ द्वौ हु द्वावपि ।
आवामग्रे यावस्तौ द्वौ द्वा-
वावां द्वौ द्वौ तौ हु युक्तौ स्वो द्वाभ्याम् ॥

केचिदाहुः— वयं त्रयः तान् त्रीन् वृक्षान् यामः गच्छामः । अत्र साभिनयो निर्देशः । अन्यौ कौचिदाहतुः— आवां द्वौ तौ द्वावपि वृक्षौ यावः । हुमिति पृच्छायाम् । अन्येषामनुवादार्थमयं प्रश्नः । अपरावाहतुः— आवां द्वौ अग्रे प्रथमं तौ द्वौ यावः । पुनरन्यौ कौचिदभि-भिनयमाहतुः— आवां द्वौ द्वाभ्यां वृक्षाभ्यां युक्तौ तौ द्वौ वृक्षौ यावः । नात्र विशेषचिन्ता कार्या । यथायोगप्रासावविचारितं हन्तुं समर्थावावामित्यभिप्रायः । वर्तमानसामीप्ये भविष्यति लट् । अत्र वृक्ष-शब्दो वत्सगवामप्युपलक्षणम् ।

*"तिण्णि जश्शस्भ्यां" (६।५६) इत्यनेन जश्शस्भ्यां सह त्रिशब्दस्य तिण्णीत्ययमादेशो विधीयते । अम्हे तिण्णि, वच्छे तिण्णि । $"द्वेर्दुवे वेण्णि वा"(६।५७) इत्यनेन द्विशब्दस्य जश्शस्भ्यां सह दुवे वेण्णि इत्येतावादेशौ विधीयेते । वाशब्देन पूर्वोक्तो दो इत्ययमादेशश्च । दुवे अम्हे, दुवे वच्छे । वेण्णि अम्हे, वेण्णि वच्छे । दो अम्हे, दो वच्छे । शालिनी वृत्तम् ॥

* 'तिणि जश्शस्भ्यां' (Sarasvati-edn.)

$ 'द्वेर्दुवे दोणि' (Sarasvati-edn.), 'द्वेर्दुवे दोणि वा' (Chow-edn.)

१. 'हु इति निश्चये' घ.

चत्तारो ते जाह चत्तारि तुम्हे
चत्तारो ते जामु चत्तारि अम्हे ।
आसादन्तिन्दा जहा मत्तमत्ता
अण्णे रोसा अप्पसत्तू गइन्दे ॥ ४४ ॥

छाया—

चत्वारस्तान् यात चतुरो यूयं
चतुरस्तान्[1] यामश्चत्वारो वयम् ।
आशादन्तीन्द्रा यथा मत्तमत्ता
अन्यान् रोषादात्मशत्रून् गजेन्द्रान् ॥

केचित् कांश्चित् स्वीयान् प्रत्याहुः— चत्वारो यूयं चतुरः तानात्मशत्रून् यात गच्छत । पुनरपि त एवाहुः— चत्वारो वयं चतुरस्तानात्मशत्रून् यामः । एवमष्टौ सम्पद्येरन् । अत एव दिग्गजोपमा । आशादन्तीन्द्राः दिग्गजेन्द्रास्ते यथा मत्तमत्ताः अतिशयेन मत्ता आत्मशत्रून् गजेन्द्रान् यान्ति । असुरादिसैन्येष्वेवम्भूतानां गजेन्द्राणां सम्भवात् ।

"चतुरश्चत्तारो चत्तारि"(६।५८) इत्यनेन चतुश्शब्दस्य जश्शस्भ्यां सह चत्तारो चत्तारि इति द्वावप्यादेशौ विधीयेते । जश्शसोर्द्वयोर्द्वावप्यादेशौ प्रत्येकं भवतः । चत्तारो तुम्हे, चत्तारि अम्हे, चत्तारो जाह, चत्तारि जामु । शालिनीवृत्तम् ॥

दोण्ह तिण्ह व चउण्ह ओ अहं
ताण किं व णिहिळाण सासओ ।

---

1. 'स्तान् त इति वा' घ.

वच्चिमो जअसिरिं पहुम्मि णो
　　उज्जिएण णु रिवूदु किं भअं ॥ ४५ ॥

छाया—

द्वयोस्त्रयाणां वा चतुर्णां ओ[1] अहं
　　तेषां किं वा निखिलानां शासकः ।
व्रजामो जयश्रियं प्रभौ नः[2]
　　उद्यतेन नु रिपोः किं भयम् ॥

एक आह— अहं द्वयोस्त्रयाणां वा चतुर्णां वा शासकः । ओ वा-शब्दार्थे । किं वा तेषां निखिलानां रिपूणां शासकः । अहं द्वौ त्रीन् चतुरो वा सर्वान् वा रिपून् हन्तुं समर्थ इत्यर्थः । अतो जयश्रियं व्रजामः । अत्रापि कृष्णसामर्थ्यमेव हेतुरिति द्योतयन्नाह— नन्विति । ननु नः प्रभौ कृष्णे उद्यते रिपोः सकाशात् किं भयम् । किंशब्दः क्षेपे ।

"एषामामो ण्हः"(६।५९) इत्यनेन एषां द्वित्रिचतुरशब्दानाम् आमः षष्ठीबहुवचनस्य ण्ह इत्ययमादेशो भवति । दोण्ह, तिण्ह । ¶"शेषोऽदन्तवत्"(६।६०) इत्यनेन शेषो विध्युपयुक्तादन्यः सुब्विधिरदन्तवत् । यस्मात् सुब्विधिरपि अप्राप्तोऽनदन्तत्वात् तस्मादन्तवद्भावोऽनेन विधीयते । जअसिरिं । एवमन्यत्राप्यूह्यम् । $"ङसिङ्योर्नेदातौ"(६।६१) इत्यनेन शेषाणामदन्तवद्भावे सत्यपि ङसिङ्योः पञ्चमी-सप्तम्योः एकवचनयोरेकाराकारौ निषिध्येते । ङसौ रिवूदु, ङौ पहुम्मि । रथोद्धतावृत्तम् ॥

* 'एषामामो ण्हं' मुद्रितपाठः ।
¶ 'शेषाददन्तवत्' (Sarasvati-edn.,)
$ 'न ङिङस्योरेदातौ' मुद्रितपाठः ।

1. 'ओ विकल्पे' घ.　　　　2. 'अस्माकं' घ.

इत्थं गोपा एकमेक्कं बहूअ
वाणीसुन्तो तक्खणं दिट्ठगव्वा ।
जाआ वच्छे बाहिउं सेसजुत्ते
[1]इंते णाहे के सणाहा विगव्वा ॥ ४६ ॥

छाया —

इत्थं गोपा एकैकं बहवश्च वाणीभ्यस्तत्क्षणं दृष्टगर्वाः ।
याता वृक्षान्[2] बाधितुं शेषयुक्ते अयति नाथे[3] के सनाथा विगर्वाः ॥

गोपास्तत्क्षणं तदानीं वृक्षान् बाधितुं याताः । कथम् – एकैकं बहवश्च प्रत्येकं सम्भूय च । इत्थं वाणीभ्य उक्तप्रकाराभ्यो वाग्भ्यः दृष्टगर्वाः शृण्वद्भिरिति शेषः । दर्शनं ज्ञानम् । कदा – शेषयुक्ते बलभद्रयुक्ते नाथे कृष्णे बाधितुमयति गच्छति सति । कृष्णरामौ यदा वृक्षादिरूपानसुरान् बाधितुं तन्निकटं प्राप्तौ तदा गोपाश्च प्रत्येकं बहवश्च तान् प्रापुरित्यर्थः । पूर्वं भीतानां कथमिदानीं सगर्वं वृक्षाद्यभिगमनमित्याह – के सनाथाः विगर्वाः । कञ्चिन्नाथं समवलम्ब्य तद्बलेन सर्वेऽपि गर्वभङ्गी कुर्वते इत्यर्थः ।

"ए स्यसि" (६।६२) इत्यनेन शेषाणामदन्तवद्भावेन प्राप्तमेत्वं निषिध्यते । वाणीसुन्तो । शालिनीवृत्तम् ॥

ते रामकण्हा विसवच्छरूवं
हन्तूण तं काळअळिं सबन्धुं ।
छणेण तुट्ठा अभअं दिसन्ता
घोसस्स सग्गस्स व स[4]स्सिरीआ ॥ ४७ ॥

१. 'णाहे इंते' क. ख. २. 'वृक्षान् वत्सान् वा' घ. ङ.
३. 'नाथे अयति' क. ख.
४. 'सस्सिरीआ ॥ इअ गोइंदाहिसेए सिरिकण्हलीलासुअमुणिविरइए सिरिंधे णामकव्वविळासिक्षं णाम पंचमो सग्गो ।' ङपाठः ।

छाया—

तौ रामकृष्णौ विषवृक्षरूपं
हत्वा तं कालकलिं सबन्धुम् ।
क्षणेन तुष्टावभयं दिशन्तौ
घोषाय स्वर्गायेव सश्रीकौ ।

तौ रामकृष्णौ विषवृक्षरूपं तं कालकालिमसुरं सबन्धुं विषकण्टकि-लतारूपैर्भृत्यैर्गोवत्सरूपैर्भार्यापुत्रैश्च सहितं हत्वा क्षणेन तद्वधरूपेणो-त्सवेन तुष्टावभूतामिति शेषः । कथम्भूतौ– घोषाय अभयं दिशन्तौ । स्वर्गायेव । अत्रोपमानद्योतकेन इवशब्देन चशब्दार्थो द्योत्यते । 'वन्यैः पुलिन्दैरिव वानरै'रित्यादिवत् । यथैतद्वधेन घोषो निरुपद्रवो जातः तथा स्वर्गोऽपि निरुपद्रवोऽभूदित्यर्थः । तथा सश्रीकौ नवनवात्मिकया शोभया युक्तौ । 'क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः' इति न्यायाद् रमणीयतरावभूतामित्यर्थः ।

*"द्विवचने बहुवचनम्" (६।६३) इत्यनेन सर्वत्र द्विवचने बहु-वचनं भवति । ते, रामकण्हा, तुट्ठा, दिसन्ता । "चतुर्थ्याः षष्ठी" (६।६४) इत्यनेन सर्वत्र चतुर्थ्याः षष्ठी विधीयते । घोसस्स, सग्गस्स । उपजातिवृत्तम् ॥

नवर्क्षपद्ये रचितेऽत्र काव्ये
श्रीचिह्नके पञ्चमको निरुक्तः ।
शताद्रिकात्यायनसूत्रलक्ष्यः
सर्गः परिच्छेदकपञ्चमे सः ॥

॥ इति गोविन्दाभिषेके नामकार्यविलासितं नाम
पञ्चमः सर्गः समाप्तः ॥

---

* 'द्विवचनस्य बहुवचनम्' मुद्रितपाठः ।

## षष्ठः सर्गः ।

भगवत्कर्माणि द्रष्टुं सदा तत्समीपे गूढं वर्तमानानां तदानीमत्यन्तविस्मापकं कालकलिनिग्रहं दृष्टवतामत एव प्रत्यक्षीभूय तत्समीपं प्राप्तवतां तद्दर्शनानन्तरभाविनीं स्तुतिमाह— 'तओ' इत्यादिभिरासर्गान्तैः श्लोकैः

तओ¹ थुइं देवगणा हरिस्स
काउं पउत्ता अइविम्हआदो ।
दिट्ठे थुई वड्ढइ वड्ढए धी
णाहे हु³ सं होइ सुहं ळसेए² ॥ १ ॥

छाया—

ततः स्तुतिं देवगणा हरेः
कर्तुं प्रवृत्ता अतिविस्मयात् ।
दृष्टे स्तुतिर्वर्धते वर्धते धी-
र्नाथे हु शं भवति सुखं लसति ॥

ततः कालकलिवधानन्तरं देवगणा वस्वादयः प्रसिद्धाः अतिविस्मयाद्धरेः स्तुतिं कर्तुं प्रवृत्ताः । प्रवृत्ता इत्यनेन स्तोतॄणां तेषां स्तुतौ सावधानता प्रकाश्यते । उपपन्नं चैतदित्याह— दृष्ट इति । नाथे दृष्टे भगवति प्रत्यक्षीभूते स्तुतिर्वर्धते । भगवद्दर्शनमाहात्म्यादिति शेषः ।

---

१. 'उत्तो' ख. २. 'ळसेइ' ङ.
३. 'हु संभावनायां निश्चये वा, शं' ङ.

वर्धते धीः। सा हि स्तुतौ प्रधानकारणम्। शं सुखं भवति। अत एव सुखं लसति।

अस्मिन् सर्गे तिङन्तप्रक्रिया प्रदर्श्यते। "ततिपोरिदेतौ" (७।१) इत्यनेन ततिपोरात्मनेपदपरस्मैपदयोः प्रथमपुरुषैकवचनयोर्द्वयोरपि इत् एत् इत्येतावादेशौ प्रत्येकं विधीयेते। वड्ढइ, वड्ढए। तिपः होइ, ळसए। तत इति स्थिते द्वितीयतकारस्य प्रायोलोपे, अकारविसर्जनीययोः सवचना'दग्लोपविशेषा बहुलम्' इति बहुलग्रहणादोकारे तओ इति सिद्ध्यति। 'त्तो दो ङसेः' इति सूत्रवदकारलोपेन(?) ओ इति रूपसिद्धिः। स्तुति इति स्थिते 'स्तस्य थः' इति थत्वे तकारस्य प्रायोलोपे थुइ इति भवति। देवगणा इत्यस्य 'जश्शसोर्लोप' इति जसो लोपः। 'जस्ङस्यांसु दीर्घ' इति दीर्घः। हरिशब्दस्य 'शेषोऽदन्तवद्' इत्यदन्तवद्भावात् 'स्सो ङसः' इति स्सादेशे हरिस्स इति भवति। कर्तुमिति स्थिते "कृञः का भूतभविष्यतोश्च" (८।१७) इति कादेशे तकारस्य प्रायोलोपे काउमिति भवति। प्रवृत्ता इत्यस्य रलोपे 'ऋत उद्' इत्यृत उत्वे जसो लोपे दीर्घे पउत्ता इति भवति। अतिविस्मयादिति स्थिते तकारस्य प्रायोलोपे 'ष्मपक्ष्मविस्मयेषु म्हः' इति स्मशब्दस्य म्हादेशे 'ङसेरादोदुहयः' इति ङसेर्दो आदेशे 'जस्ङस्यांसु दीर्घः' इति दीर्घे अइविम्हआदो इति भवति। दृष्टशब्दस्य ऋष्यादित्वादत इत्वम्। 'ष्टस्य ठः' इति ठस्य द्वित्वे डेरेत्वे दिट्ठे इति भवति। स्तुतिशब्दस्य 'स्तस्य थः' इति थत्वे तकारस्य प्रायोलोपे 'सुभिस्सुप्सु दीर्घः' इति दीर्घे थुई इति भवति। 'वृधेर्ढः' (८।४४) इति ढत्वे ततिपोरिदेत्वे वड्ढइ, वड्ढए इति भवति। धी इत्यत्र सुलोप एव विशेषः। नाथशब्दस्य नस्य णत्वे थस्य हत्वे डेरेत्वे णाहे इति भवति। "हुंखु निश्चयवितर्कसंभावनासु" (९।६) इति हुंशब्दस्य साधुत्वम्। शमित्यस्य 'शषोः सः' इति सकारः। सं। "भुवो होहुवौ (८।१) इति

भुवो होभावे ततिपोरित्वे होइ इति भवति । लसेर्धातोः लस्य योगविभागात् ळत्वे ततिपोरेत्वे "लादेशे वा" (७।३४) इत्येत्वे ळसेए इति भवति । उपजातिवृत्तम् ॥

स्तुतिमेवाह—

तं होसि बम्हा चरसे हुमेत्थ
एहेसि बाळो इह बाहसे ह्निं ।
हं होमि बाळो रममित्ति होन्ति
थुई तिणा णो विसअम्मि कण्ह ! ॥ २ ॥

छाया—

त्वं भवसि ब्रह्म चरसि हुमेतस्मिन्
एधसे बाळ इह बाधसे भियम् ।
अहं भवामि बालो रमे इति भवन्ति
स्तुतयस्तेन नो विषये कृष्ण ! ॥

हे कृष्ण ! त्वम् अवाङ्मनसगोचरं निरुपाधिकं ब्रह्म भवसि । हुंशब्दः प्रश्नरूपेणानुवादे पर्यवस्यति । एवम्भूतः सन्नहं बालो भवामि, इह रमे इति कृत्वा बालः बालो भूत्वा एतस्मिन् वृन्दावने चरसि । एधसे बाल्यपोगण्डादिवयोऽङ्गीकृत्य वर्धसे । भियम् असुरोद्भूतां भीतिं बाधसे नाशयसि । तेन ब्रह्मत्वेनावाङ्मनसगोचरत्वात् स्तुतयः नोऽस्माकं विषये नो नैव भवन्ति । वयं त्वां स्तोतुं न शक्नुम इति भावः ।

---

१. 'हुं पृच्छायामेत' ङ.

*"सिप्थासोः सि से" (७।२) इत्यनेन सिप्थासोः सि से इत्येतावादेशौ विधीयेते। सिपि होसि चरसे। थासि एहेसि बाहसे। "इण्मिपोर्मिः" (७।३) इत्यनेन इटि मिपि च मिरित्ययमादेशो विधीयते। होमि, रममि। ¶"न्तिहथा मोमुमा बहुषु" (७।४) इत्यनेन त्रयाणां पुरुषाणां बहुवचनेषु प्रथमस्य न्ति, मध्यमस्य ह थ, उत्तमस्य मो मु म इति एकः द्वौ त्रयः आदेशाः क्रमेण विधीयन्ते। होन्ति। शेषाण्युत्तरश्लोके। 'युष्मदस्तंतुम सौ' इति त्वमित्यस्य तमित्यादेशः। भुवो होभावे सिपस्सित्वे होसीति भवति। ब्रह्मशब्दस्य 'स्नन्तप्रावृट्-शरदः पुंसी'ति पुंस्त्वे रलोपे छेत्यादिना म्हस्योर्ध्वस्थितौ 'सावत ओत्वे' बम्हो इति भवति। चरेर्धातोः सिपस्सेभावे चरसे इति भवति। 'हुं दानपृच्छे'त्यादिना हुमिति निपातः। एतच्छब्दस्य ङेस्सिम्मित्थादेशे 'त्तोत्थयोस्तलोप' इति तलोपे एत्थ इति भवति। एधतेर्धातोर्धस्य हत्वे थासस्सिभावे "लादेशे वा" (७।३४) इत्येत्वे एहेसीति भवति। लस्य ळत्वे सावोत्वे बाळो इति भवति। इदं-शब्दस्य 'ङेर्दा हः' इति हभावे इहेति भवति। बाधतेर्धातोर्ह-भावे थासस्सेभावे बाहसे इति भवति। धीशब्दस्य आमि ह्रस्वे हभावे हिमिति भवति। 'अस्मदो हमहंमहअ सौ' इत्यस्मच्छब्दस्य हंभावः। भवतेर्धातोर्होत्वे मिपो मिभावे होमीति भवति। लस्य ळत्वे सौ बाळो इति भवति। रमेर्धातोरिटो मिभावे रममीति भवति। 'सन्धावचामि'ति विशेषणेकारलोपे तकारद्वित्वे च रममित्तीति भवति। भुवो होभावे प्रथमपुरुषबहुवचनस्य न्तिभावे होन्तीति भवति। स्तुतिशब्दस्य स्तस्य थत्वे तकारलोपे सुप्सु दीर्घ इति दीर्घे थुई इति भवति। तच्छब्दस्य कियत्तद्भ्यष्टा इणा इतीणादेशे तिणा

---

* 'थास्सिपोः सि से' (chow edn.,)

¶ 'न्तिहेत्थामोमुमा बहुषु' मुद्रितपाठः।

इति भवति । 'णो अम्ह अम्हाण अम्हे आमि' इति णो आदेशे णो इति भवति । विषयशब्दस्य षस्य सत्वे डेर्म्मित्वे विसअम्मि इति भवति । कृष्णशब्दस्य ऋकारस्यात्वे ष्णशब्दस्य 'ष्णक्ष्णश्नां ण्हः' इति ण्हादेशे कण्ह इति भवति । इन्द्रवज्रोपेन्द्रवज्रा च वृत्तम् ॥

स्तोतुमशक्ता अपि वयं स्तुतेरुपरन्तुमपि न शक्नुम इति स्तुम एवेत्याहुः—

गाएह णाहं परिकीळथत्ति[1]
चित्ताइ मोअन्ति रसेण अम्हे ।
तं गाइमो केळिमु होम थोत्ते
किं होइ ऊणं णणु[2] होसि कम्मो ॥ ३ ॥

छाया—

गायथ नाथं परिक्रीडध्वमिति
चित्तानि मोदयन्ति रसेनास्मान् ।
तद्गायामः क्रीडामो भवामः स्तोत्रे
किं भवत्यूनं ननु भवसि कर्म ॥

रसेन भवद्दर्शनजनितेन भक्त्यतिशयेन चित्तानि अस्मदन्तःकरणानि अस्मान् एवं मोदयन्ति । कथम्— नाथं गायथ नाथस्य यशांसि गायथ । परिक्रीडध्वं क्रीडाविशेषरूपाणि वाद्यताडननृत्तादीनि कर्माणि कुरुध्वम् इति मोदयन्ति हर्षयन्ति । भवत्प्रवणान्यन्तःकरणानि अस्माभिरेवंविधानि कर्माणि कारयन्तीति यत् तत् तस्माद्

1. 'थेत्ति' ङ.    2. 'ण अ होसि' ङ.

वयं गायामः, क्रीडामः, स्तोत्रे स्तुतौ भवामः, स्तुतावुद्युक्ता भवामः। किं भवत्यूनं का भवति हानिः। ननु भवसि कर्म(स्थो?सो) पाधिकब्रह्मरूपेण स्तुतिविषयत्वमप्यस्ति अतो यथाशक्ति स्तुतिरुचितैवेत्यभिप्रायः।

मध्यमपुरुषे गाएह परिकीळथ, उत्तमपुरुषे गाइमो केळिम्ह होम। "अत ए से" (७।५) इत्यनेनाकारान्ताद् (अन्यत्र)ए से इत्येतौ निषिध्येते। होइ, होसि। गायतेर्धातोः "*स्थाध्यागानां ठाअझाअगाआः" (८।२५) इति गाआदेशे मध्यमपुरुषे बहुवचनस्य हादेशे 'लादेशे वा' इत्येत्वे गाएह इति सिध्यति। नाथशब्दस्य नस्य णत्वे थस्य हत्वेऽमि णाहमिति भवति। क्रीडतेर्धातोः परिपूर्वस्य मध्यमपुरुषबहुवचनस्य थत्वे रलोपे डस्य ळत्वे परिकीळथ इति भवति। इतिशब्दयोगे 'सन्धावचामि'ति विशेषणेकारलोपे तकारस्य द्वित्वे परिकीळथत्ति इति भवति। चित्तशब्दस्य 'इञ्जश्शसोर्दीर्घश्चे'ति दीर्घे इकारे च सति चित्ताइ इति भवति। मोदतेर्धातोः प्रथमपुरुषबहुवचनस्य न्तिभावे दकारस्य प्रायोलोपे मोअन्तीति। रसशब्दस्य 'टामोर्णः' इति णत्वे 'ए च सुपि' इत्येत्वे रसेणेति भवति। 'अम्हे जश्शसोः' इति शसि अम्हे इत्यादेशः। तच्छब्दस्य 'नपुंसके सोर्बिन्दुरि'ति बिन्दौ तमिति भवति। गायतेरुत्तमपुरुषबहुवचने मो इत्यादेशे गाआदेशे सति "इच्च बहुषु" (७।३१) इतीत्वे गाइमो इति भवति। तद्वत् क्रीडतेर्मभावे केळिम्ह इति। भवतेर्होभावे बहुवचनस्य मत्वे होम इति भवति। स्तोत्रशब्दस्य स्तस्य थत्वे रलोपे द्वित्वे डौ थोत्ते इति भवति। किंशब्दस्य अन्त्यहल्लोपे बिन्दौ किमिति भवति। भवतेर्होभावे तिप इत्त्वे होईति भवति। ऊनमित्यस्य नस्य णत्वे ऊण-

---

* 'ष्ठाध्या' (chow-edn.,)

मिति भवति । ननुशब्दस्य नद्वयस्य णत्वे णणु इति भवति । भवते-र्होभावे सिपस्सिभावे होसीति भवति । कर्मञ्छब्दस्य 'नसन्तप्रावृट्-छरदः पुंसि' इति पुंस्त्वे रलोपे 'अत ओ सौ' इति ओत्वे कम्मो इति भवति । इन्द्रवज्रा वृत्तम् ॥

स्वविभूत्यनित्यताद्यालोचननिमित्तवैराग्याद्युपेता मोक्षं तत्साधनं ज्ञानं च प्रार्थयन्त आहुः—

तुवं सि सोम्हित्ति मुणिन्दणाओ
सम्मोहिअ म्हो विसएहि अम्हे ।
भवेण [1]खिण्ण म्हु तुमं इअ म्ह
मुईअए जेण मुणज्जइत्ति ॥ ४ ॥

छाया —

त्वमसि सोऽस्मीति मुनीन्द्रज्ञातः
सम्मोहिताः स्मो विषयैर्वयम् ।
भवेन खिन्नाः स्मस्त्वामिता स्मो
मुच्यते येन ज्ञायत इति ॥

त्वं सोऽस्मीत्येकत्वेन मुनीन्द्रज्ञातोऽसि । त्यक्तैषणैर्ज्ञेयं निरुपा-धिकं ब्रह्म भवसि । वयं विषयैः स्रक्चन्दनवनितादिभिः सम्मोहिताः स्मो भवामः । आत्मतत्त्वज्ञानाभावात् तस्मिन्नविद्याध्यारोपितैर्विषयैः सम्यङ्मोहिता वैचित्र्यं प्रापिता भवामः । भवेन जननादिसंसारेण खिन्नाः स्मः भवाम इत्यतः त्वामिताः स्मः जननमरणाद्यात्मना दुःखेन

1. 'खिण्द ह्म' ख.

खिन्नाः खेदं प्रापिता यस्मात् तस्मात् तन्निवृत्त्यर्थं त्वामिनाः प्राप्ताः स्मो भवामः । येन भवदाश्रयणेन ज्ञायते आत्मतत्त्वमिति शेषः । इति यस्मादत एव मुच्यते सर्वोऽपि लोक इति शेषः । इतिशब्दो हेतौ । 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इति सिंहः ।

"अस्तेर्लोपः" (७।६) इत्यनेन सिपोऽनुवृत्तौ सिपि परतोऽस्तेर्लोपो विधीयते । तुवं सि । *"मिमोमुर्मादेशानामधो हश्च" (७।७) इत्यनेन उत्तमपुरुषबहुवचनानां चतुर्णामधो हकारो विधीयतेऽस्तेर्लुक् च भवति । सो म्हि, सम्मोहिअ म्हो, खिण्ण म्हु, इअ म्ह । †"यक ईअइज्जौ" (७।८) इत्यनेन यक्प्रत्ययस्य ईअ इज्ज इत्येतावदेशौ विधीयेते । मुईअए, मुणिज्जइ । उपजातिवृत्तम् ॥

सोऽस्मीति मुनीन्द्रज्ञात इत्युक्तत्वाज्जीवात्मैव परमात्मा तस्य चाहमिति सर्वदा स्फुरणात् तज्ज्ञानं न प्रयत्नसाध्यमित्याशङ्क्याहुः—

ण णज्जसे तं सअअं फुरन्तो
अगूहमाणो ळसईइ धीइ ।
माअं अभन्ति ळसमाणिमत्तो
चित्तं इमा होहिइ किं खु अण्णं ॥ ५ ॥

छाया—
न ज्ञायसे त्वं सततं स्फुरन्
[1]अगूहमानो लसन्त्यां धियाम् ।

---

* 'मिमोमुमानामधो हश्च' मुद्रितपाठः ।

† 'यक इअअज्जौ' (Sarasvati- edn.,)

---

१. 'अगूहन् लस' ङ.

मायामभान्तीं लसन्तीमास-
श्चित्रमस्माद्भविष्यति किं खु अन्यत् ॥

लसन्त्यां धियां भास्वररूपेऽन्तःकरणे अगूहमानः अन्तर्धान-मगच्छन् सततं सदा अहमहमिति स्फुरणविन्न ज्ञायसे । इदमनिदं-रूपेण अहमा विशिष्टत्वेन ज्ञातत्वेऽपि स्वरूपेण न ज्ञायसे इत्यर्थः । कुत इत्याह- मायामासः प्राप्तः । कीदृशीं मायाम् अभान्तीं स्वतः सत्तास्फूर्ति-रहिताम् । लसमानां(?) साक्षिचैतन्येनैव लब्धसत्तास्फुरणां सदस-दात्मकत्वाभावादनिर्वचनीयामित्यर्थः । एवम्भूतया मायया समावृत-स्वरूपत्वान्न ज्ञायस इत्यर्थः । सततं स्फुरन्नपि न ज्ञायसे इत्यस्मादन्यत् किं खु आश्चर्यम् । खु सम्भावनायाम् । इत्यस्मादन्यदाश्चर्यं न सम्भा-वितमित्यर्थः ।

"नान्त्यद्वित्वे" (७।९) इत्यनेन अन्त्यद्वित्वे सति यक ईअ इज्ज इत्येतौ निषिध्येते । णज्जसे । "न्तमाणौ शतृशानचोः" (७।१०) इत्य-नेन शतृशानचोरुभयोः प्रत्येकं न्त माण इत्युभावादेशौ विधीयेते । फुरन्तो, अगूहमाणो । "ई च स्त्रियाम्" (७।११) इत्यनेन स्त्रियां शतृशानचोरीकारादेशो विधीयते । चकारात् न्तमाणौ च । ळसई । अभन्ती । ळसमाणी । "धातोर्भविष्यति हिः" (७।१२) इत्यनेन भविष्यदर्थे लकारे धातोर्हि इत्ययमादेशो विधीयते । होहिइ । उपजातिवृत्तम् ॥

फलाभिसन्धिपूर्वकं काम्यकर्मनिरतानां नात्मसिद्धिरित्याह—

---

१. 'खु सम्भावनायां वितर्के वा निश्चये वा अन्यत्' ॥ ङ.

२. 'णज्जसे । ज्ञो णज्जणं वाविलन्त्यद्वित्वस्य । न्तमाणौ' ख. (?)

सग्गत्थिरा पत्तपसू थणिल्ला
होस्सामु[1] होहामु[2] अ होहिमो त्ति ।
[3]अण्णत्थसन्ता अणिसं हु जन्तू
तुमं अपत्तूण हि संसरन्ति ॥ ६ ॥

छाया—

स्वर्गस्थिराः प्राप्तपशवो धनवन्तो
भविष्यामो भविष्यामश्च भविष्याम इति ।
[4]अन्यस्थस्वान्ता अनिशं[5] हु जन्तव-
स्त्वामप्राप्य हि संसरन्ति ॥

अन्यस्थस्वान्ताः अन्यस्मिन्ननात्मनि स्वर्गादौ स्थितं स्वान्तं मनो येषां तेऽन्यस्थस्वान्ताः । एवम्भूता जन्तवः आत्मभूतं त्वामप्राप्य संसरन्ति न मुच्यन्ते । हु निश्चये । ज्ञानेनैव प्राप्तिः । तदभावादप्राप्तिः । अन्यस्थस्वान्तत्वमेव प्रदर्शयन्ति– अनिशं स्वर्गस्थिरा भविष्याम इति अग्निष्टोमादौ प्रवृत्ताः । प्राप्तपशवो भविष्याम इति चित्रायागादौ । धनं वक्ष्याम इति सांग्रहण्यादौ ।

"उत्तमे स्सा हा च" (७।१३) इत्यनेनोत्तमपुरुषे स्सा हा इत्येतौ भवतः । चकाराद् यथाप्राप्तं च । होस्सामु, होहामु, होहिमो । उपजातिवृत्तम् ॥

---

१. 'सहो' ख  २. 'हाम' ङ.  ३. 'अणत्थ' ख.

४. 'ताः' ङ.  ५. 'अन्यार्थस्वान्ता अन्यस्थस्वान्ता इति वा, अन्यत्र श्रान्ता इति वा, अन्यार्थश्रान्ता इति वा अनिशं' ङ.

६. 'शान्तिवाति जन्तवः' ङ.

इदानीं त्यक्तैषणस्यात्मप्रगल्भस्य आत्मतत्त्वज्ञानान्मोक्षप्राप्तिरस्त्ये-वेत्याहुः—

गस्सं मणिस्सामि अ झाइह्यामि
  बोहेहिमिच्चिअ तुम्ह तत्तं ।
जो संठिओ मोत्तरसो जईसो
  जाहिज्जए तेण हु मोक्खसोक्खं ॥ ७ ॥

छाया—

गास्यामि मंस्ये च ध्यायामि
  भोत्स्ये इति चिअ तव तत्त्वम् ।
यः संस्थितो मुक्तरसो यतीशो
  यास्यते तेन हु मोक्षसौख्यम् ॥

मोक्षात्मकमेव सौख्यं यास्यते प्राप्स्यते । हु निश्चये । केने-त्याह- यो मुक्तरसः त्यक्तानात्मरागो यतीशः तव तत्त्वं गास्यामि मंस्ये च ध्यायामि च भोत्स्ये च इत्यनेन प्रकारेण संस्थितः । चिअ अवधारणे । शब्दशक्तितात्पर्यावधारणस्वरूपे श्रवणे आचार्यलभ्ये स्वोच्चारणस्यापि सम्भवाद् गानशब्देनात्र श्रवणमुच्यते । मननं तु तदनन्तरं स्वयमेव युक्त्या मीमांसनम् । ध्यानं निदिध्यासनं, विजा-तीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहकरणं मनुष्यत्वा(दिव्या?द्या) वृत्ति (अवसान?वासना)रहितं मुहुर्मुहुः ब्रह्मत्वाचिन्तनम् । एवं श्रवणमनननिदिध्यासनान्यात्मतत्त्वसाक्षात्कारसाधनान्युक्तानि। बोधः तत्फलं साक्षात्कारः। तेन हि मुच्यते। अत्रैकवचनेन संसारिणो

---

१. 'झामि ह्यामि' ख. २. 'बोधिष्ये इति' ङ.

जन्तवः सुलभाः तादृशो मोक्षार्थी यतीशो दुर्लभ इति द्योतितम् ।

"मिना सह स्सं वा" (७।१४) इत्यनेन मिना सह स्सं इत्यादेशो विकल्पेन विधीयते । गस्सं, स्साहाहयश्च भवन्ति । भणिस्सामि झाइहामि । बोहेहिमि । इन्द्रवज्रावृत्तम् ॥

पण्डितम्मन्यानां संसारिणां मार्गद्वयमिलनान्मोक्षो न भवतीत्याहुः—

आणंदवाद्धिम्मि अ खुप्पिहिस्सा
संसारमग्गं चिअ सेविहित्था ।
इत्थं कदासा तुह सेवणे वि
जाहिन्ति ळोएस तिसंकुकक्खं[1] ॥ ८ ॥

छाया—

आनन्दवार्धौ च मज्जिष्यामः
संसारमार्गं चिअ सेविष्यामहे ।
इत्थं कृताशास्तव सेवनेऽपि
यास्यन्ति लोकेश त्रिशङ्कुकक्ष्याम् ॥

आनन्दवार्धौ परमानन्दसमुद्रे च मोक्षाख्ये मज्जिष्यामः । संसारमार्गं स्वर्गादिकमपि सेविष्यामहे । चिअ एव । इत्थं कृताशाः सञ्जाततृष्णा ये जन्तवः हे लोकेश ! ते त्रिशङ्कुकक्ष्यां यास्यन्ति । तेषामुभयभ्रंशो भवति । तव सेवने सत्यपि ते त्रिशङ्कुकक्ष्या(:) । तत्सदृशी समवस्था, अनधिकारितेत्यर्थः । सन्ततमैहिकसुखलम्प-

---

१. 'कक्खे' ख.

टत्वेन सेवने श्रद्धाभावात् तव सेवनमपि ते सादरं न कुर्वत इति भावः। श्रद्धा वैमुख्ये सति न फलंति इति भावः । तथा चोक्तम्- 'ध्रुवं (कर्तु-ग्रन्थाऽकर्तुः श्रद्धा विधुरमभिचाराय हि मखाः ।' इति ।

"सोस्सुमैर्हिस्सा हित्था" (७।१५) इत्यनेन धातोर्भविष्यदर्थे सोस्सुमैः सह हिस्सा हित्था इत्येतावादेशौ विकल्पेन भवतः । खुप्पि-हिस्सा, सेविहित्था । तदभावे तेषां सोस्सुमानामपि श्रवणं भवति । इन्द्रवज्रा वृत्तम् ॥

पस्सामो जेमिझामो सइ सुरमिहिमो णो हु वस्सामु गेहे
हाहामु च्चेअ णिच्चं हसिहिमु सअअं हंत भेस्साम णो सं ।
जाहाम च्चेअ सत्तू जिणिहिम अणिसं होमु इत्थं मुणिळ्ळा
अम्हे अम्हाणमेदं अहव अणुइअं णज्जए णो तहाहि ॥९॥

छाया—
पास्यामो जेमिष्यामस्सदा सुरंस्यामहे नो हु म्लास्यामो गेहे
हास्यामश्चेअ नित्यं हसिष्यामस्सततं हन्त भेष्यामो नो शम् ।
यास्यामश्चेअ शत्रून् जेष्यामोऽनिशं भवाम इत्थं मनस्विनो
वयमस्माकमेतदथवानुचितं ज्ञायते नो तथाहि ॥

वयमनिशमत्यर्थमित्थं मनस्विनो भवामः सदैवैवं मनोरथवन्तो भवामः वर्तामहे । कथम्- वयं पास्यामः आगामिनि काले सोमादि पास्यामः । जेमिष्यामः पशुपुरोडाशादि भक्षयिष्यामः । सदा सुरंस्या-महे अप्सरःप्रभृतिभिः सह नृत्तगीतादिजनितं रसमनुभविष्यामः । गेहे गृहे स्वर्गाख्ये नो म्लास्यामः कादाचित्कां म्लानिमपहाय हर्षमेव

१. 'वास्या' ख. घ. ङ.

प्राप्स्यामः । बेअ अवधारणे । भास्याम एव वयमधिकां शोभां गमिष्याम एव । वयं नित्यं हसिष्यामः हास्यरसमनुभविष्यामः । हन्तेति हर्षे । सर्वमनोरथानां सम्पत्तौ हि हास्यरसस्यावकाशः । सोऽस्माननुभविष्यते इत्येषां हर्षः । नो भेष्यामः असुरादिभ्य इति शेषः । शं सुखं यास्याम एव । सततं शत्रून् जेष्यामः । इत्थमेवंप्रकारं मनस्विनामस्माकं देहाद्यभिमानतश्चित्तव्यवहाराणाम् । अथवा एतदेवंविधमनोरथवत्त्वाद्यनुचितं हि अनुचितमेव । तथा न ज्ञायते अनुचितमिति नावधार्यते । तस्मादेतन्मूलमज्ञानमपोहितुं तत्त्वज्ञानमनुगृहाणेत्याशयः ।

हिस्साहित्थयोरभावे मोमुमादीनां श्रवणपक्षोदाहरणमिदम् । पस्सामो, जेम्हिामो, सुरासिहिमो । मो इत्येतेन स्साहादयः प्रदर्शिताः । वस्सामु, हाहामु, हसिहिमु इत्येतेन सह स्साहादयः प्रदर्शिताः । भेस्साम, जाहाम, जिणिहिम, म इत्येतेन सह स्साहादयः । स्रग्धरावृत्तम् ॥

काहं दाहं सोच्छं वोच्छं
गच्छं रोच्छं दच्छं भोच्छं ।
इत्थंबोहो वेहो णाहो
तं तं काळं णो मोच्छं ति ॥ १० ॥

छाया—

करिष्यामि दास्यामि श्रोष्यामि वक्ष्यामि
गमिष्यामि रोत्स्यामि द्रक्ष्यामि[1] भोक्ष्यामि ।

---

१. 'मि भोक्ष्ये भोक्ष्यामीति वा' ङ.

इत्थम्बोधो वेधा नाथ-
स्तं तं कालं नो मोक्ष्ये इति ॥

वेधा नाथः सदा इत्थम्बोधः । भवतीति शेषः । एवम्भूतोऽनात्मविषयो बोधो यस्य इत्थम्बोधः । कथमित्याह- करिष्यामि लोकान्, दास्यामि तपस्विभ्यो वरान्, श्रोष्यामि गीतादि, वक्ष्यामि वेदान्, गमिष्यामि हंसमधिरुह्य तं तं देशं, रोत्स्यामि रिपून्, द्रक्ष्यामि दर्शनीयान् पदार्थान्, भोक्ष्याम्यमृतं, नो मोक्ष्ये महता भाग्येन विधातृत्वं प्राप्य तदधिकृते साधारणे कर्मणि व्यापृतोऽहं कदाचिदेतानि कर्माणि न मुञ्चामीत्यर्थः । तं तं कालं सर्वस्मिन् कालेऽपि । "कालाध्वनो-" (पा० सू० २-३-५) इति द्वितीया । सततमित्थम्बोध इत्यर्थः ।

"कृदाश्रुवचिगमिरुधिदृशिरूपाणां काहं दाहं सोच्छं वोच्छं गच्छं रोच्छं दच्छं" (७।१६) इत्यनेन कृञादीनां यथासंख्यं भविष्यत्युत्तमपुरुषस्यैकवचने काहमित्यादय आदेशा भवन्ति । 'डु कृञ् करणे' इत्यस्य काहं । 'डु दाञ् दाने' इत्यस्य दाहं । 'श्रु श्रवणे' इत्यस्य सोच्छं । 'वच परिभाषणे' इत्यस्य वोच्छं । 'गम्लृ गतौ' इत्यस्य गच्छं । 'रुधिर् आवरणे' इत्यस्य रोच्छं । 'दृशिर् प्रेक्षणे' इत्यस्य दच्छं । रूपग्रहणाद् 'भुज परिपालनाभ्यवहारयोः' इत्यस्य भोच्छं । 'मुच्लृ मोचने' इत्यस्य मोच्छं । विद्युन्मालावृत्तम् ॥

इदानीं प्रत्यक्षभूतस्य सकलब्रह्मणः कृष्णस्य च लीलागृहीतविग्रहस्य स्वरादि वर्णयन्तः स्तुवन्ति—

**सोच्छेए सोच्छिइत्ति च्चिअ ण मुइहिए तो अ सोच्छंति णो णो**

**सोच्छेसे सोच्छिसित्ति च्चिअ तइ भणिओ हन्त सोच्छेह हुं किं ।**

---

१. 'सोच्छइ' छ.

णो सोच्छेर्थ[1]त्ति जो दे सरमह महिओ सोच्छिमिव्वत्ति णंदो
सोच्छामो सोच्छिमुव्व च्चिअ वअणिळआ जे अ किं
सोच्छिमत्ति ॥ ११ ॥

छाया—

श्रोष्यति श्रोष्यतीति [2]च्चिअ न मोदिष्यते ततश्च श्रोष्यन्ति नो नो
श्रोष्यसि श्रोष्यसीति [3]च्चिअ त्वया भणितो हन्त श्रोष्यथ हुं[4] किम् ।
न[5] श्रोष्यथेति [6]यस्ते स्वरमसौ महितः श्रोष्यामीवेति नन्दः
श्रोष्यामः श्रोष्याम इव च्चिअ व्रजनिलया ये च किं श्रोष्याम इति ॥

असौ नन्दः स्वयं श्रोष्यति श्रोष्यतीति तव स्वरं प्रति श्रोष्यामीत्येव न मोदिष्यते इव । च्चिअशब्द एवार्थे । स्वयंशब्दोऽध्याहार्यः प्रतिशब्दश्च । तद्योगे च द्वितीया । असौ नन्दः त्वया पितृत्वेनाङ्गीकृतः स्वयं श्रोष्यति । श्रोष्यतीत्यनेन प्रकारेणेति मत्वेति शेषः । इतिशब्दः प्रकारे । तव स्वरं कण्ठवेणुतन्त्रिजं त्वया प्रयुक्तं सर्वजनमनोहरं श्रोष्यत्येवेत्युक्तम् । श्रवणे सत्यपि न मोदिष्यते एव । प्रथमं प्रयुक्ते पुनः पुनः श्रवणेच्छया द्वितीयश्रवणेऽपि श्रवणजनितं सन्तोषेण प्रकाशयिष्यति । असकृदप्येवमेवेति भावः । कीदृशो नन्दः— यः स्वरप्रयोगोद्युक्तेन त्वया पूर्वमनेन सम्यङ् नाश्रावीति मत्वा 'हे पितः! त्वं नो श्रोष्यसि त्वं नो श्रोष्यसी'ति भणितः । प्रथमप्रयोगसमये श्रवणेऽनवधानता पुनः पुनः श्रवणेच्छया प्रकाशिता । बुद्ध्यापीषत्कलितकोपेनेव भवतैवमुक्तमित्यर्थः । अत एव महितः पूजितः । प्रसन्न-

---

1. 'थेत्ति' ङ. 2. 'च्चिअ अवधारणे न मो' ख.
3. 'च्चिअ अवधारणे त्वया' ख. 4. 'हुं पृच्छायां किं' ख.
5. 'नो' ख. 6. 'यस्तव' घ. ङ.

चेतसा भगवतैवमनुनीयमानत्वात् । ततस्ते व्रजनिलयाश्च श्रोष्याम एव श्रोष्याम एव किं श्रोष्याम इति न श्रोष्यन्तीव । व्रजनिलया नन्दव्यतिरिक्ता गोपाः श्रोष्याम एव । अन्यचित्तैरस्माभिः पूर्वं सम्यग् श्रुतत्वाद् भविष्यन्तं प्रयोगं श्रोष्याम एव । किं श्रोष्यामः । कीदृशांश्च सुस्वरेण जनयसीत्यर्थः । इति इत्युक्तापि न श्रोष्यन्तीवेति[1] । भवता स्वरे प्रयुक्ते इदानीमप्यस्माभिर्न सम्यक् श्रुतमितीव स्थास्यन्तीति भावः । अत्रापि स्वयं श्रोष्यन्ति श्रोष्यन्तीति पूर्वोक्त एव हेतुः । कीदृशा व्रजनिलयाः– ये श्रोष्यथ हुं किं नो श्रोष्यथ इति त्वया भणिताः इति विभक्तिविपरिणामेन योजना । हुंशब्दः पृच्छायाम् । अत्रापि प्रथमप्रयोगेऽनवधानतां बुद्ध्वा भगवता प्रश्नः क्रियते इत्यवसेयम् । हन्तेत्यनेन स्तुतौ देवानां हर्षातिशयो द्योत्यते । अत्र पूर्वस्मिन् वाक्ये एकवचनान्तानां नन्दकृष्णसंवादत्वेन योजना । ततश्चेत्यादौ द्वितीयवाक्ये बहुवचनान्तानामौचित्याद् गोपानां कृष्णस्य च संवादत्वेनेति विभागः ।

"श्वादीनां त्रिष्वनुस्वारवर्ज[2] वा हिलोपश्च" (७।१७) इत्यनेन 'श्रु श्रवणे' इत्येवमादीनां त्रिषु प्रथममध्यमोत्तमपुरुषेषु सोच्छादय आदेशा अनुस्वारवर्जमनुस्वारेण विना भवन्ति । आदेशे सति वा हिलोपश्च विधीयते । श्रुवः सोच्छादेशे हिलोपे च सत्ययं श्लोक उदाहरणम् । प्रथमपुरुषे सोच्छेए सोच्छिइ सोच्छन्ति । मध्यमपुरुषे सोच्छेसे सोच्छिसि सोच्छेह सोच्छेथ । उत्तमपुरुषे सोच्छिमि सोच्छामो सोच्छिमु सोच्छिम । स्रग्धरावृत्तम् ॥

जा दे सोच्छिहिए ण सोच्छिहिइ णो जा सोच्छिहिन्ति व्व ते
उत्ता सोच्छिहिसे ण सोच्छिहिसि णो भाअत्ति सोच्छेहिह ।

१. 'ति नदन्तोऽत्रापि योगः । भवता ' ख.

२. ' वर्जं हिलोपश्च वा ' मुद्रितपाठः ।

णो णो सोच्छिहि[1] थत्ति सोच्छिहिम हुं सोच्छेहिमो कण्ह किं
अण्णं सोच्छिहिमुत्ति[2] सोच्छिहिम णो इत्थं सरं ता परा ॥

छाया—

या ते श्रोष्यति न श्रोष्यति नो या श्रोष्यन्तीव त्वया
उक्ता श्रोष्यसि न श्रोष्यसि नो मातरिति श्रोष्यथ ।
नो नो श्रोष्यथेति श्रोष्यामि हुं[3] श्रोष्यामः कृष्ण किं
अन्यच्छ्रोष्यामः श्रोष्यामो नो इत्थं स्वरं ताः पराः ॥

सा यशोदा ते स्वरं श्रोष्यामीति नो न श्रोष्यति श्रोष्यत्येव । सा प्रसिद्धा यशोदा ते स्वरं वीणावेणुकण्ठनादं श्रोष्यामीत्युक्त्वा श्रोष्यत्येव । नो नेति निषेधद्वयं प्रकृतार्थसूचनम् । 'द्वौ नञौ प्रकृतमर्थं सूचयत' इति वचनात् । नो न श्रोष्यति श्रोष्यत्येवेत्यर्थः अशृण्वानेव स्थितापि शृणोत्येवेति यावत् । अत्र पूर्ववत् पुनः पुनः श्रवणेच्छा हेतुः । या त्वया हे मातः त्वं नो श्रोष्यसि नो श्रोष्यसीत्युक्ता अभिहिता इत्येकवचनानां योजना । पराः अन्या यशोदाव्यतिरिक्तास्ता व्रजस्त्रियोऽपि हे कृष्ण! वयं स्वरं श्रोष्यामः, किमन्यच्छ्रोष्यामः । अस्माद् रमणीयतरस्याभावादित्थं नो श्रोष्यामः । इत्थं तावकमिमं स्वरमिव कदाचिदपि स्वरान्तरं न श्रोष्यामः इत्युक्त्वा श्रोष्यन्तीव । अत्र इवशब्दः एवार्थे । श्रोष्यन्त्येवेत्यर्थः । अत्यन्तास्वादनीयत्वात् तव स्वरामृतं कर्णपुटैः पुनः पुनः पास्यन्त्येवेत्यभिप्रायः । यास्त्वया यूयं मे स्वरं नो श्रोष्यथ नो श्रोष्यथ हुं इत्यभिहिता उक्ताः । हुमिति पृच्छायाम् । इति बहुवचनानां सम्बन्धः । अस्यापि श्लोकस्य पूर्ववदेव प्रयोजना ।

---

१. 'थेत्ति' ङ. २. 'सोत्ति' क. ३. 'हुं पृच्छायां श्रो' घ.

अत्र श्लोकेऽपि लोपाभाव एव विशेषः । प्रथमपुरुषे सोच्छिहिए सोच्छिहिइ सोच्छिहिन्ति । मध्यमपुरुषे सोच्छिहिसे सोच्छिहिसि सोच्छिहिह सोच्छिहिथ । उत्तमपुरुषे सोच्छिहिमि सोच्छिहिमो सोच्छिहिमु सोच्छिहिम । शार्दूलविक्रीडितं वृत्तम् ॥

वोच्छेए वोच्छिइत्ति च्चिअ ण मुइहिए तो अ वोच्छन्ति णो णो
वोच्छेसे वोच्छिसित्ति च्चिअ तइ भणिओ हन्त वोच्छेह हुं किं ।
णो वोच्छेथ[1]त्ति जो दे कहमह महिओ वोच्छिमिव्वत्ति णंदो
वोच्छामो वोच्छिमुव्व च्चिअ वअणिळआ जे अ किं वोच्छिम[2]त्ति ॥

छाया—

वक्ष्यति वक्ष्यतीति च्चिअ न मोदिष्यते ततश्च वक्ष्यन्ति नो नो
वक्ष्यसि वक्ष्यसीति च्चिअ[3] त्वया भणितो हन्त वक्ष्यथ हुं[4] किम् ।
नो वक्ष्यथेति वस्ते कथामसौ महितो वक्ष्यामीवेति नन्दो
वक्ष्यामो वक्ष्याम इव च्चिअ[5] व्रजनिलया ये च किं वक्ष्याम इति ॥

अत्र श्लोके भगवता बालभावानुकारिणा कथाकथने नियुक्तानां नन्दादीनां वक्तृत्वं कृष्णस्य श्रोतृत्वं चाङ्गीकृत्य स्तुतिः । वक्ष्यति वक्ष्यति अयं कृष्णः स्वयमपि यत्किञ्चिदत्यन्तमधुरया गिरा कथयिष्यति पुनः पुनरिति तेषां कथाकथनवाञ्छा वक्ष्याम्येवेत्युक्त्वा कथां कथयित्वापीत्यादिप्रकारेणार्थो द्रष्टव्यः । अथ नन्दस्य भगवत्प्रयुक्त पूर्वकथाविषये मोदाप्रकाशनमित्यवसेयम् । ते इत्यस्य तुभ्यमित्यर्थः । 'सोच्छेए' इत्यादिवद् योजना । किं वक्ष्यामः कथान्तरमिति शेषः ।

---

१. 'थेत्ति' ङ.
२. 'मेत्ति' ङ.
३. 'च्चिअ प्राग्वत् त्व' घ.
४. 'हुं प्राग्वत् किं' घ.
५. 'च्चिअ प्राग्वत् व्रज' घ.

वक्ष्यन्त्येव । इव एवार्थे ।

अत्र वचेः वोच्छादेश हिलोपपक्षो दर्शितः । स्रग्धरावृत्तम् ॥

जा दे वोच्छिहिए ण वोच्छिहिइ णो जा वोच्छिहिन्ति व्व ते
उत्ता वोच्छिहिसे ण वोच्छिहिसि णो मातत्ति वोच्छेहिह ।
णो णो वोच्छिहिथत्ति वोच्छिहिमि हुं वोच्छेहिमो कण्ह किं
अण्णं वोच्छिहिमुत्ति वोच्छिहिम णो इत्थं कहं ता परा ॥

छाया—

या ते वक्ष्यति न वक्ष्यति नो या वक्ष्यन्तीव त्वया
उक्ता वक्ष्यसि न वक्ष्यसि नो मातरिति वक्ष्यथ ।
नो नो वक्ष्यथेति वक्ष्यामि हुं वक्ष्यामः कृष्ण किं
अन्यद् वक्ष्यामेति वक्ष्यामो नो इत्थं कथां ताः पराः ॥

सा यशोदापि तुभ्यं कथां वक्ष्यामीत्युक्त्वा वक्ष्यति नो न वक्ष्यति वक्ष्यत्येवेति भावः । या त्वया हे मातः त्वं न वक्ष्यसि नो वक्ष्यसीत्युक्ता । परा यशोदाव्यतिरिक्तास्ता व्रजस्त्रियोऽपि तुभ्यं कथां वक्ष्यामः । कृष्ण ! किमन्यद् वक्ष्यामः इदानीं त्वद्विषयां कथां वर्जयित्वा किमन्यद् वक्ष्यामः । इत्थं नो वक्ष्यामः । यथा त्वं कथामतिमधुरां वदसि तथा वक्तुं वयं न शक्ष्याम इत्यर्थः । इत्युक्त्वा वक्ष्यन्त्येव । याः पूर्वं त्वया यूयं मे मह्यं कथां नो वक्ष्यथ नो वक्ष्यथ हुं इत्युक्ताः । तच्छब्दवाक्यद्वयस्य यच्छब्दवाक्यद्वयस्य च सम्भवादित्थं चतुर्भङ्गोऽन्वयः ।

अत्र वचेर्वोच्छादेशे हिलोपाभावपक्षः प्रदर्शितः । शार्दूलविक्रीडितं वृत्तम् ॥

अथ निकटवर्तिनीं यमुनानदीं गन्तुमुद्युक्तानां नन्दादीनां कृष्णस्य च वचनप्रकार उच्यते—

गच्छेए गच्छिइत्ति च्चिअ ण मुइहिए तो अ गच्छंति णो णो
गच्छेसे गच्छिसित्ति च्चिअ तइ भणिओ हंत गच्छेह हुं किं ।
णो गच्छेथत्ति जो दे णइमह महिओ गच्छिमिव्वत्ति णंदो
गच्छामो गच्छिमुव्व च्चिअ वअणिळआ जे अ किं
गच्छिमंत्ति ॥ १५ ॥

छाया—

गमिष्यति गमिष्यतीति च्चिअ न मोदिष्यते ततश्च गमिष्यन्ति नो नो
गमिष्यसि गमिष्यसीति च्चिअ त्वया भणितो हन्त गमिष्यथ हुं किम् ।
नो गमिष्यथेति नदीमसौ महितो गमिष्यामीवेति नन्दो
गमिष्यामो गमिष्याम इव च्चिअ व्रजनिलया ये च किं गमिष्याम इति ॥

अयं कृष्णोऽप्यात्मना सह गमिष्यत्येव गमिष्यत्येवेति मत्वा नन्दः स्वयमप्यहं न गमिष्याम्येव नदीमित्युक्त्वा मोदिष्यत्येव । इवशब्द एवार्थे । बालस्य कृष्णस्य नदीगमने भयशङ्कया नन्दः स्वस्य नदीगमनमपि न प्रकाशयतीति यावत् । यस्त्वया नो नो गमिष्यसि गमिष्यस्येवेति भणितः । अत्र पित्रादयः केचिद् बालानां कुमाराणामुक्तिप्रत्युक्तिचातुर्यं श्रोतुमेवं व्यवहरन्तो दृश्यन्ते । ततस्ते व्रजनिलयाश्च वयं गमिष्यामो वयं गमिष्याम एव । एषामेतद्वचनं नन्दसमीपाद् व्याजेन कृष्णं स्वसमीपमानेतुम् । गमिष्यामः किम् । अत्र

१. 'गच्छइ' ङ. २. 'गच्छसि' ङ.
३. 'मित्ति' ङ. ४. 'च्चिअ प्राग्वत् न' ब.
५. 'हुं प्राग्वत् किं' घ. ६. 'नतिमसौ' ब.

किंशब्दः प्रश्ने । हे कृष्ण तव नदीगमनं प्रति निर्बन्धोऽस्ति वा न वेति प्रश्नः इत्युक्त्वापि न गमिष्यन्त्येव । अत्र तत इत्यस्य तच्छब्द-प्रकृतित्वं द्रष्टव्यम् । ये गमिष्यथ हुं यूयं नो गमिष्यथ किम् इति त्वया भणिताः ।

अत्र गमेर्गच्छादेशे हिलोपपक्षः प्रदर्शितः । स्रग्धरा वृत्तम् ॥

जा दे गच्छिहिए ण गच्छिहिइ णो जा गच्छिहिन्तिव्व ते
उत्ता गच्छिहिसे ण गच्छिहिसि णो माअत्ति[1] गच्छेहिह ।
णो णो गच्छिहिथेत्ति[2] गच्छिहिमि हुं गच्छेहिमो कण्ह किं
अण्णं गच्छिहिमुत्ति[3] गच्छिहिम णो इत्थं णइं ता परा ॥१६॥

छाया—

या ते गमिष्यति न गमिष्यति नो या गमिष्यन्तीव त्वया
उक्ता गमिष्यसि न गमिष्यसि नो मातरिति गमिष्यथ ।
नो नो गमिष्यथेति गमिष्यामि हुं गमिष्यायः कृष्ण किम्
अन्यद् गमिष्याम इति गमिष्यामो नो इत्थं नदीं ताः पराः ॥

ते सा माता नदीं गमिष्यामीत्युक्त्वा गमिष्यति गमन-माचरन्ती भविष्यति । नो न गमिष्यति गमनमाचरन्ती भविष्य-तीत्यर्थः । कृष्णानिर्बन्धं भङ्क्तुमशक्नुवाना गमनमेवाचरिष्यतीति यावत् । या त्वया हे मातः! त्वं नो गमिष्यसि त्वं नो गमिष्यसी-त्युक्ता । तथा ताः परा अपि वयं नदीं गमिष्यामः हे कृष्ण! किम-

---

१. 'माएत्ति' ख. २. 'थेत्ति' ङ.
३. 'मोत्ति' ङ.

न्यद्र वस्तु गमिष्यामः। इत्थं नो गमिष्यामः यथा त्वमनवसरे गन्तुमभिलषसि तथा न। पश्चादवसरे गमिष्याम इत्यर्थः। इत्युक्त्वा पुनर्गमिष्यन्त्येव। यास्त्वया यूयं नो गमिष्यथ हुम् इत्युक्ता इति चतुर्भङ्गता अन्वयस्य।

अत्र हिलोपाभावपक्षो दर्शितः। शार्दूलविक्रीडितं वृत्तम्॥

रोच्छेए रोच्छिइत्तिच्चिअ ण मुइहिए तोअ रोच्छन्ति णो णो
रोच्छेसे रोच्छिसित्तिच्चिअ तइ भणिओ हन्त रोच्छेह हुं किं।
णो रोच्छे[1]थत्ति जो दे गइमइ महिओ रोच्छिमिव्वत्ति णंदो
रोच्छामो रोच्छिमुव्वच्चिअ वअणिळआ जेअ किं रोच्छि[2]मंत्ति॥

छाया—

रोत्स्यति रोत्स्यतीति च्चिअ न मोदिष्यते ततश्च रोत्स्यन्ति नो नो
रोत्स्यसि रोत्स्यसीति च्चि[3]अ त्वया भणितो हन्त रोत्स्यथ [4]हुं किम्।
नो रोत्स्यथेति यस्ते गतिमसौ महितो रोत्स्यामीवेति नन्दो
रोत्स्यामो रोत्स्याम इति च्चिअ व्रजनिलया ये च किं रोत्स्याम इति॥

बहुव्यालादिसङ्कुले वने तत इतो गमनशीलस्य ते गतिमसौ नन्दो रोत्स्यामीत्युक्त्वा रोत्स्यति रोत्स्यतीत्येव न पुनर्मोदिष्यते रोद्धुमशक्यत्वात्। यस्त्वया नो रोत्स्यसि इति भणित एव। ततस्ते व्रजनिलयाश्च रोत्स्यामो रोत्स्यामः किं रोत्स्याम इत्युक्त्वापि नो रोत्स्यन्ति। अत्राप्यशक्तिरेव हेतुः। ये च त्वया रोत्स्यथ हुं नो रोत्स्यथ किमिति भणिताः।

---

१. 'थेत्ति' ङ. २. 'मोत्ति' ङ.
३. 'च्चिअ प्राग्वत् त्वया' घ. ४. 'हुं प्राग्वत् किं' घ.

अत्र रुधे रोच्छादेशे हिलोपपक्षः प्रदर्शितः। स्रग्धरा वृत्तम् ॥

जा दे रोच्छिहिए न रोच्छिहिइ णो जा रोच्छिहिन्तिव्व ते
उत्ता रोच्छिहिसे ण रोच्छिहिसि णो [1]माअत्ति रोच्छेहिह ।
णो णो रोच्छिहि[2]थेत्ति रोच्छि[3]हिमि हुं रोच्छेहिमो कण्ह किं
अण्णं रोच्छिहिमुत्ति रोच्छिहिम णो इत्थं गइं ता परा ॥१८॥

छाया—

या ते रोत्स्यति न रोत्स्यति नो या रोत्स्यन्तीव ते
उक्ता रोत्स्यसि न रोत्स्यसि नो मातरिति रोत्स्यथ ।
नो नो रोत्स्यथेति रोत्स्यामि हुं रोत्स्यामः कृष्ण किम्
अन्यद्रोत्स्याम इति रोत्स्यामो नो इत्थं गतिं ताः पराः ॥

सा यशोदा तव गतिं रोत्स्यामीत्युक्त्वा रोत्स्यति न नो रोत्स्यति स्नेहपारवश्याद् रोधनक्रियामात्रं करोत्येव। या त्वया हे मातस्त्वं नो रोत्स्यसि नो रोत्स्यसीत्युक्ता। परा यशोदाव्यतिरिक्तास्ता व्रजास्त्रियोऽपि तव गतिं रोत्स्यामः कृष्ण! किमन्यद् रोत्स्यामः। वयं रोद्धुमेव प्रवृत्ताः। इत्थं रोत्स्याम इत्युक्त्वापि न रोत्स्यन्त्येव। रोद्धुमशक्ता भविष्यन्तीत्यर्थः। यास्त्वया यूयं मे गतिं नो रोत्स्यथ नो रोत्स्यथ हुमित्युक्ताः।

अत्र रुधे रोच्छादेशे हिलोपाभावपक्षो दर्शितः। शार्दूलविक्रीडितं वृत्तम् ॥

---

१. 'माएत्ति' ख.　　२. 'थेत्ति' ङ.
३. 'हिम हुं' ङ.

दच्छेए दच्छिइत्ति च्चिअ ण मुइहिए तो अ दच्छन्ति णो णो
दच्छेसे दच्छिसित्ति च्चिअ तइ भाणिओ हन्त दच्छेह हुं किं ।
णो दच्छेथत्ति जो दे गअमइ महिओ दच्छिमिव्वत्ति णंदो
दच्छामो दच्छिमुव्व च्चिअ वअणिळआ जे अ किं
दच्छिमत्ति ॥ १९ ॥

छाया—

द्रक्ष्यति द्रक्ष्यतीति च्चिअ न मोदिष्यते ततश्च द्रक्ष्यन्ति नो नो
द्रक्ष्यसि द्रक्ष्यसीति च्चिअ त्वया भणितो हन्त द्रक्ष्यथ हुं किम् ।
नो द्रक्ष्यथेति यस्ते गतमसौ महितो द्रक्ष्यामीवेति नन्दो
द्रक्ष्यामो द्रक्ष्याम इव च्चिअ व्रजनिलया ये च किं द्रक्ष्याम इति ॥

असौ नन्दस्तव गतं सविलासगमनं स्वयं द्रक्ष्यति द्रक्ष्यतीति मत्वा दृष्ट्वापि न मोदिष्यते इव । द्रक्ष्यामीत्युक्त्वा । अत्रापि दर्शन-पौनःपुन्यवाञ्छा हेतुः । न मोदिष्यते इव दर्शनजनितां तृप्तिं न प्रकाशयतीव । च्चिअशब्दोऽवधारणे । कीदृशो नन्दः— यस्त्वया हे पितः! त्वं नो द्रक्ष्यसि द्रक्ष्यसीति भणितः । महितः पूजितः । ततस्ते व्रजनिलयाश्च द्रक्ष्याम एव द्रक्ष्याम एव किं कीदृशं गमनवैचित्र्यं द्रक्ष्याम इत्युक्त्वापि न द्रक्ष्यन्तीव । अत्रापि द्रक्ष्यति द्रक्ष्यतीत्युक्तौ पुनःपुनर्दर्शनवाञ्छैव हेतुः । कीदृशा व्रजनिलयाः— ये द्रक्ष्यथ किं नो द्रक्ष्यथेति त्वया भणिताः । हुमिति पृच्छायाम् । हन्तेत्यनेन हर्षातिशयो द्योत्यते ।

---

१. 'थेत्ति' ङ. २. 'मोत्ति' ङ.
३. 'च्चिअ प्राग्वत् त्वया' घ. ४. 'हुं प्राग्वत् किं' घ.
५. 'गजमथ' घ. ङ. ६. 'च्चिअ प्राग्वत् व्रज' घ.

अत्र दृशेर्दच्छादेशे हिलोपपक्षो दर्शितः। स्रग्धरावृत्तम् ॥

जा दे दच्छिहिए ण दच्छिहिइ णो जा दच्छिहिन्ति[1] व्व दे
उत्ता दच्छिहिसे ण दच्छिहिसि[2] णो माअत्ति दच्छेहिह ।
णो णो दच्छिहिथत्ति दच्छिहिमि हुं दच्छेहिमो कण्ह किं
अण्णं दच्छिहिमोत्ति दच्छिहिम णो इत्थं गअं ता परा ॥२०॥

छाया—

या ते द्रक्ष्यति न द्रक्ष्यति नो या द्रक्ष्यन्तीव त्वया
उक्ता द्रक्ष्यसि न द्रक्ष्यसि नो मातरिति द्रक्ष्यथ ।
नो नो द्रक्ष्यथेति द्रक्ष्यामि हुं[3] द्रक्ष्यामः कृष्ण किम्
अन्यद् द्रक्ष्याम इति द्रक्ष्यामो नो इत्थं गतं ताः पराः ॥

सा यशोदा ते गतिं द्रक्ष्यामीति द्रक्ष्यति न नो द्रक्ष्यति द्रक्ष्यत्येवेत्यर्थः। कीदृशी यशोदा— या त्वया हे मातः! त्वं नो द्रक्ष्यसि नो द्रक्ष्यसीत्युक्ता अभिहिता । परा यशोदाव्यतिरिक्तास्ता व्रजस्त्रियोऽपि तव गतं गमनं द्रक्ष्यामः कृष्ण किमन्यद् द्रक्ष्यामः ईदृग्विधस्य गमनस्य कुत्र प्यभावात् । इत्थं नो द्रक्ष्यामः अत्यद्भुतं तावकमिदं मनमिव । कदाचिदपीदृग्विधं रमणीयं गतान्तरं न द्रक्ष्याम इत्युक्त्वा द्रक्ष्यन्त्येव । इवशब्द एवार्थे । अत्यन्तदर्शनीयत्वात् तव सविलासगमनं नयनपात्रैः पुनःपुनः सतृष्णं पास्यन्त्येवेति भावः। कीदृशास्ताः— यास्त्वया यूयं मे गतं द्रक्ष्यथ नो द्रक्ष्यथ हुमित्युक्ताः। हुंशब्दः प्रश्ने ।

---

१. 'दट्ठिहिन्ति' ङ  २. 'दड्ढिहिसि' ङ.
३. 'हुं प्राग्वद् द्र.' घ. ङ.

अत्र इशेर्दच्छादेशे हिलोपाभावपक्षः प्रदर्शितः। दच्छिहिए, दच्छिहिइ, दच्छिहिन्ति, दच्छिहिसे, दच्छेहिह, दच्छिहिमि, दच्छेहिमो, दच्छिहिम । शार्दूलविक्रीडितं वृत्तम् ॥

उत्तेण किं व बहुणा तइ [1]होउ चित्तं
[2]तुं झासु तम्मि वसिमुत्ति [3]दळन्तु भीई ।
ते णंदह[4]त्ति कहिआ सइ णंदिमो अ
किं भत्तवच्छळ! ण संभवए तइत्तो ॥ २१ ॥

छाया—
उक्तेन किं वा बहुना त्वयि भवतु चित्तं
त्वं ध्याय[5] तस्मिन् वसामीति द[6]लन्तु भीतयः ।
त्वया नन्दतेति कथि[7]ताः सदा नन्दाम[8] च
किं भक्तवत्सल! न सम्भवति त्वत् ॥

स्तुतिशेषत्वेनेदानीं विवक्षितं प्रकाशयन्ति— बहुनोक्तेन किं वा । भवद्गुणगणानामानन्त्यादल्पायुषो वयं बहु स्तोतुं न पारयाम इति भावः। त्वयि सकळे निष्कळे वा भवतु चित्तम् । वयं त्वदुपासनपरा भवाम इति भावः। त्वं तस्मिन्नस्मच्चित्ते वसामीति ध्याय अस्मच्चित्ते तात्त्विकरूपप्रकाशनेनास्मान् अनुगृहाणेति भावः। अत एवास्मद्भीतयः संसारभयादिह दलन्तु नश्यन्तु । त्वया नन्दत आनन्दं प्राप्नुतेति कथिता वयं नन्दाम नित्यनिरतिशयसुखं प्राप्नवाम । अत्र

१. 'होइ' ख. २. 'तं सासु' ख.
३. 'दळन्ति' ङ. ४. 'हेत्ति' ङ.
५. 'यत तास्मिन्' ख ङ. ६. 'दळत' ङ.
७. 'ता हृष्याम शश्वत्' ङ. ८. 'मश्च' ख. घ. ङ.

त्वयि भवतु चित्तमित्यनेन साधनप्रार्थनं, तस्मिन् वसानीति ध्याय इत्यनेन अद्वैतज्ञानप्रार्थनं, दलन्तु भीतय इत्यादिना तत्फलप्रार्थनं च कृतमिति विभागः ।

"उसुमु विध्यादिष्वेकस्मिन्" (७।१८) इत्यनेन विध्यादिष्वर्थेषु एकस्मिन्नेकवचने उ सु मु इत्यादेशाः क्रमेण प्रथममध्यमोत्तमानामेकवचने भवन्ति । प्रथमपुरुषैकवचने होउ । मध्यमपुरुषैकवचने झासु । उत्तमपुरुषैकवचने वसिमु । "न्तुहमो बहुषु"(७।१९) इत्यनेन बहुषु प्रथममध्यमोत्तमानां बहुवचनेषु यथाक्रमं न्तु ह मो इत्येते आदेशा भवन्ति । दळन्तु । णंदह । णंदिमो । वसन्ततिलकं वृत्तम् ॥

जं होज्ज होज्जा ण [1]व होज्ज होज्जा
धी होज्ज तं तं ति गिरा ळसिज्जा ।
[2]जिणा पमोएइ मुएहिए अ
सो होउ कम्मो अ वपुस्स अम्हे ॥ २२ ॥

छाया—

यद् भवति भवति न वा भविता भविता
धीर्भवतु[3] त्वं त्वमिति गीर्लसतु ।
येन प्रमोदते मोक्ता च
[4]तद् भवतु कर्म च वपुषोऽस्माकम् ॥

---

१. 'वा' ख. २. 'जिणणा' ख.
३. 'तु भवेद् भूयाद् वा एवमन्यत्रापि द्रष्टव्यं त्वं' घ.
४. 'तत् स वा भूयात् कर्म कर्मो वा च' घ. ङ.

यद्वस्तु भवति न भवति वा इदानीं यद् विद्यते यन्न वा विद्यते यद्वस्तु भविता भविष्यत्कालभावी यन्न वा भविता त्वं तदिति धीर्भवत्वस्माकम् । वर्तमानभविष्यतोर्निर्देशे तत्साहचर्याद् भूतमप्युक्तप्रायमेव । तस्माद् भूतभविष्यद्वर्तमानात्मकं यद्वस्तु विद्यते त्वं तदिति धीर्भवत्वस्माकम् । भावाभावात्मकमिदं विश्वं सर्वदा चिदानन्दघनात् त्वद्व्यतिरेकेण नास्तीत्यस्माकं बुद्धिर्भवेदित्यर्थः । अस्माकं गीश्च तथा लसेत् । सर्वं त्वमित्यस्माकं वपुषः शरीरस्य कर्म च कायिकव्यापारश्च तद्भवतु तथा भवतु । येन कर्मणा प्रमोदते हर्षं प्राप्नोति पुरुषः मोक्ता च उत्तरकालहर्षहेतुश्च । पुरुषस्य यत् कर्म । मनसा वाचा कर्मणा भवत्तत्त्वनिष्ठा भवाम इत्युक्तं भवति ।

"वर्तमानभविष्यदनद्यतनयोश्च ज्ज ज्जा वा*" (७।२०) इत्यनेन वर्तमानकाले भविष्यत्यनद्यतनकाले चकाराद्विध्यादौ चोत्पन्नलकारस्य वा ज्ज ज्जा इत्येतावादेशौ भवतः । वर्तमाने होज्ज, होज्जा । तदभावे पमोएइ । भविष्यदनद्यतने होज्जा । तदभावे मुएहिए । विध्यादौ होज्ज, होज्जा । तदभावे होउ । उपजातिवृत्तम् ।।

एण्ही होज्जइ णो मणेसु मअणो होज्जाइ ळोहो वि हा
काहे होज्जइ सो त्रिवेअविहवो होज्जाइ काहे समो ।
ओ सो होज्जउ ते पसाअपहवा होज्जाउ णिच्चं च सो
भत्ती किंव हुवेहिए हुवहिए सव्वं ति वड्ढेउ सा ॥ २३ ॥

---

* 'नयोर्ज्ज' (chow. edn.)

---

१. 'विहवा' ख. २. 'व' ङ.
३. 'हुवेइए' ङ. ४. 'वड्ढेहि' ख, 'वड्ढेइ' ङ.

छाया—

इदानीं [1]भवति नो मनस्सु मदनो भवति लोभोऽपि हा
कदा भविता स विवेकविभवो भविता भविता कदा शमः ।
[2]ओ स[3] भवतु ते प्रसादप्रभवाद् भवतु नित्यं च सः
भक्तिः किं वा भवति चेद् भविता सर्वमिति वर्धतां सा ॥

[4]ते मोक्षविरोधिभूतकामलोभादिनाशाय मोक्षोपायभूतविवेकशमादीनामुदयाय च हेतुभूतां भक्तिं प्रार्थयन्ते— इदानीं भवत्सान्निध्ये सत्यपि नोऽस्माकं मनस्सु मदनः कामो भवति लोभश्च भवति । हा इति— हा विषादे । 'हा विषादशुगार्तिषु' इति सिंहः । कामलोभपदं क्रोधादीनामप्युपलक्षणम् । स प्रसिद्धः विवेकविभवः विवेकसम्पत् कदा भविता । नित्यानित्यवस्तुविवेको हि विवेकोऽभिप्रेतः । शमश्च कदा भविता । 'शमो मन्निष्ठता बुद्धेर्दम इन्द्रियसंयमः ।' इति हि तल्लक्षणम् । साधनचतुष्टयसम्पत्तिः कदा भवितेत्यभिप्रायः । नित्यानित्यविवेकः, इहामुत्रार्थभोगविरागः, शमदमादिसाधनसम्पद्, मुमुक्षुत्वं च साधनचतुष्टयम् । तदत्र प्रार्थ्यते । ओ इति पश्चात्तापे । एतत् सम्पादनीयमिति जानतामप्यस्माकमिदं न सम्पन्नमासीदिति पश्चात्तापः । स उक्तो विवेकविभवः ते प्रसादप्रभवाद्भवतु प्रसादप्रादुर्भावाद्भवतु । स शमश्च नित्यं भवतु । भवत्प्रसादाद्धि सर्वं सम्पद्यते । किं वेति पक्षान्तरपरिग्रहे । त्वयि भक्तिर्भवति चेत् सर्वं भविता इत्यस्माद्धेतोः सा भक्तिर्वर्धताम् । त्वयि भक्तौ सम्पन्नायां कामादिविनाशो विवेकादिसम्पत्तिश्च सर्वं स्वयमेव सम्पद्यते । अतस्तामेवानुगृहाण । तां भक्तिमेवास्माकमनुग्रहायादिशति भावः ।

---

१. 'भवत्वस्माकं मनस्सु' घ. ङ. २. 'ओ विकल्पे स' घ. ङ.
३. 'सम्भवेत् तव प्रसा' घ. ङ. ४. 'सा मोक्ष' ख.

"मध्ये च" (७।२१) इत्यनेन वर्तमाने भविष्यत्यनद्यतने विध्यादौ च मध्ये धातुप्रत्यययोर्मध्ये ज्ज ज्जा इत्येतौ विकल्पेन भवतः। वर्तमाने होज्जइ, होइ। भविष्यत्यनद्यतने काहे होज्जइ। विध्यादौ होज्जाइ, होज्जउ। एतयोरभावे यथाप्राप्तं च भवति। "नानेकाचः" (७।२२) इत्यनेनानेकाचो धातोः ज्जादयो निषिध्यन्ते। वर्तमाने हुवेइ। भविष्यत्यनद्यतने हुवहिए। विध्यादौ वड्ढेउ। शार्दूलविक्रीडितं वृत्तम् ॥

हुवीअ जत्तो भुवणं समत्थं
होहीअ जत्तो हु जआण ताओ।
वेओ वि सासो विअ आसि जत्तो
तारेसु णो सोत्ति कहन्तु जीहा ॥ २४ ॥

छाया—

अभूद् यतो भुवनं समस्तं
बभूव यतो हु[1] जगतां तातः।
वेदोऽपि श्वास इवासीद् यतः
तारय[2] नस्स इति कथयन्तु[3] जिह्वाः ॥

यतो यस्मात् समस्तं भुवनं सर्वमेतज्जगदासीत्। कथमेवमुक्तम्-हिरण्यगर्भाद्धि जगदुत्पत्तिरित्याह यत इति। यतो यस्मात् कृष्णाद् बभूव जगतां तातो हिरण्यगर्भः। एवं सति जगतां मूलकारणत्वाद्भगवत एव भुवनोत्पत्तिरित्युक्तम्। शब्दप्रपञ्चकारणत्वमप्य-

---

१. 'हु निश्चये जग' घ. ङ. २. 'यास्मान् स' घ. ङ.
३. 'यन्तां' ङ.

स्तीत्याहुः— वेदोऽपीति । वेदस्य पौरुषेयत्वनिरासार्थं श्वासोपमा। श्वासस्य पुरुषे स्वतन्त्रप्रवृत्तत्वान्न बुद्धिपूर्वनिर्मितिः। कारणत्वं तु पुरुषे सुप्रसिद्धम्। एवमीश्वरवेदयोः कार्यकारणभावे निर्विरोध एव प्रतिपादितः। स त्वं नोऽस्मान् तारय भवसागरादिति शेषः। इति कथयन्त्वस्माज्जिह्वाः। न पुनरसारान् पुरुषार्थान् प्रार्थयन्त्विति भावः।

"ईअ भूते" (७।२३) इत्यनेन भूतार्थलकारेषु ईअ आदेशो विधीयते। हुवीअ। "एकाचो हीअ" (७।२४) इत्यनेन एकाचो धातोर्भूतार्थलकारेषु हीअ भवति। होहीअ। "*अस्तेरासिः" (७।२५) इत्यनेन अस्तेर्भूतकाले आसिरिति निपात्यते। सर्वं एते ईआदेशाः प्रथमपुरुषैकवचने द्रष्टव्याः। "†णिच एदादेरात्" (७।२६) इत्यनेन णिजन्तस्य धातोरादेरत आकारादेशः णिचश्च एकारादेशो भवति। तारेसु। सिंहावलोकितन्यायेन वाशब्दसान्निध्यात् क्वचिन्न भवति। कहन्तु। उपजातिवृत्तम्॥

भवो तरावेइ ण ए भवादो
विभाविए णो णिअसत्तिआए।
किणा तराविज्जइ राअबद्धो
भिच्चेण ठाविज्जइ से पए किं॥ २५॥

छाया—

भवांस्तारयति न चेद् भवाद्
विभावितान्नो[1] निजशक्तिकया।

---

* 'आसिरस्तेः' (Saras-edn.)

† 'णिच एदादेरत आत्' (chow-edn.)

---

१. 'तानस्मान् निज' घ. ङ.

केन तार्यते राजबद्धो
  भृत्येन स्थाप्यते स्वे पदे किम् ॥

निजशक्तिकया मायया विभावितान् प्रकाशितान् देहाख्यं बन्धनागारं स्फुटं नीतान् नः अस्मान् भवान् भवात् संसारसागरान्न तारयति चेद् तर्हि केन तार्यते । न केनापीति शेषः । राजबद्धो राज्ञा बद्धो यः कश्चित् पुरुषः केनचिद् भृत्येन बन्धमपनीय स्वे पदे स्थाप्यते किम् – नैवेत्यर्थः । एवं त्वया बन्धं नीतानामस्माकमपि त्वमेव बन्धान्मोचयित्वा स्वपदप्रापकस्त्वच्छक्त्येति भावः ।

"*आवे च" (७।२७) इत्यनेन णिचः आवे इत्ययमादेशो भवति । चकारात् पूर्ववदेत्वमात्वं च । तरावेइ । "आविः ¶क्तभावकर्मसु वा" (७।२८) इत्यनेन क्तप्रत्यये परतः भावकर्मणोश्च णिचः स्थाने आविरादेशो विधीयते । क्तप्रत्यये विभाविए । भावे तराविज्जइ । कर्मणि ठाविज्जइ । उपजातिवृत्तम् ॥

संळासिओ [1]दे णिळेओ [2]वओ [3]इंदो
  चोरीअए भी णवणीअराइणा ।
मारिज्जए एत्थ सुरारिसंकडं
  अवामि देवे इह ठाअमित्ति अ ॥ २६ ॥

* 'आवे वा' (Saras-edn.)

¶ 'क्तकर्मभावेषु वा' (chow-edn.)

१. 'ते' ङ.   २. 'ळआ' ङ.

३. 'इमो' ङ.

छाया—

संलासितस्तव निलयो व्रजोऽयं
चोर्यंते भीर्नवनीतरागिणा ।
मार्यंत एतस्मिन् सुरारिसङ्कटम्
अवामि देवानिह तिष्ठामीति च ॥

तव निलयोऽयं व्रजः संलासितः सम्यग्लासितः शोभितः । एतस्मिन् व्रजे नवनीतरागिणा त्वया भीश्चोर्यते । न केवलं नवनीतमेव त्वया चोर्यते सतां भीरपीत्यर्थः । देवान् अवामि इह व्रजे तिष्ठामि चेति मत्वा सुरारिसङ्कटं सुरारिभ्यः सङ्कटं सुरारिभ्यः कृच्छ्रं मार्यते अभावं नीयते । अनेन व्रजस्य लासितत्वम् उपपादितम् ।

"णैदावे" (७।२९) इत्यनेन पूर्वोक्तस्य आविप्रत्ययस्य विकल्पेनाभावपक्षे एत्वात्वावप्रत्ययेषु एत्वभावप्रत्ययं च निषिध्य आकार एव परिगृह्यते । क्ते संळासिओ । भावे चोरीअ । कर्मणि मारिज्जए । "अत आ मिपि वा" (७।३०) इत्यनेन अकारान्तस्य धातोः मिपि परतः आत्वं वा विधीयते । अवामि । अभावे ठाआमि । इन्द्रवंशावंशस्थाभ्यामुपजातिवृत्तम् ॥

ते सत्थं रमिमो [1]विवड्ढिसु घरे [2]संकेळिमच्चेअ ऊ
वच्चामो णिवसाम[3] गोपॅतणओ राआम संपाळिआ ।
पेच्छेऊण अ सेविऊण अ तुमं मोएउमाणच्चिउं
झाएअव्वसुगाइअव्वचरिअं ते [4]वच्छदा दुल्लहा ॥

---

१. 'वानि' ङ. २. संकीळि' ङ.
३. 'मु' ङ. ४. 'व' ङ.

छाया—

त्वया सार्धं रमामहे विवर्धामहे संक्रीडाम[1]श्चेअ[2] ऊ
व्रजामो निवसामो गोपतनवो राजाम[3]ः सम्पालिताः ।
दृष्ट्वा च सेवित्वा च त्वां मोदितुमानर्तितुं
ध्यातव्यसुगातव्यचरितं तव वत्सता दुर्लभा ॥

गोपतनवो वयं त्वया सार्धं रमामहे विवर्धामहे संक्रीडामो विहरामः । ऊ चेअ आश्चर्यमेव । व्रजामो गच्छामः । निवसाम उपविशामः । राजामः शोभां गच्छामः । सम्पालिताः तांस्तानुपद्रवानपनीय सम्यक् पालिताः । किमर्थमेवं क्रियत इति चेत् त्वां दृष्ट्वा सेवित्वा मोदितुं हर्षं प्राप्तुमत एवानर्तितुं च । आनर्तनेन हर्षातिशयो द्योत्यते । कथम्भूतम्— ध्यातव्यसुगातव्यचरितं मनोवाग्भ्यां सेवनीयचरितम् । किमर्थमिदानीमतिसाहसेनेदं सर्वं क्रियत इत्याह— ते वत्सता दुर्लभा । सर्वजगतां पितुस्ते वत्सता अस्माकमुक्तप्रकारेण सुखसेवार्थमेव लब्धा । इतः पूर्वं कदाचित् केनचित् क्वचिदपि न लब्धा । लोके हि दुर्लभे वस्तुनि सुखलब्धे कदाचिदप्यलम्भावो न जायते ।

"इञ्च बहुषु" (७।३१) इत्यनेन बहुवचनेष्विञ्वं विधीयते चकारादात्वं च पूर्वसूत्रेण । उत्तमपुरुषप्रसङ्गादुत्तमपुरुषस्यैवैतत् । रमिमो, विवड्ढिमु, संकीळिम । आत्वपक्षे वच्चामो, णिवसामु, राआम । "क्ते" (७।३२) इत्यनेन क्ते परतोऽपीत्त्वं विधीयते । संपालिआ । "ए च क्त्वातुमुंस्तव्यभविष्यत्सु" (७।३३) इत्यनेन क्त्वा तुमुन् तव्य इत्येतेषु भविष्यति च काले एत्वं विधीयते चकारादित्त्वं

---

१. 'डामहे संक्रीडाम इति वा' घ. ङ. २. 'चेअ अवधारणे ऊ विस्मये' घ. ङ. ३. 'महे' ङ.

च । क्त्वापरतः एत्वे पेच्छेऊण । इत्त्वे सेविऊण । तुमुन्येत्वे मोएउं, इत्त्वे आणच्चिउं । तव्ये एत्वे झाएअव्व । इत्त्वे सुणाइअव्व । शार्दूलविक्रीडितं वृत्तम् ॥

अत्यन्तस्पृहणीयांगव्यापारत्वाद् भगवत्यतृप्ताः सन्तः कालान्तरभाविनीमपि सेवां देवाः प्रार्थयन्ते—

केळेहिमो एरिसमेव्व सस्स
ओआरमण्णं वि अ दे[1] गएण ।
चित्तं सआ गाइहिमो चरित्तं
ते पेच्छिरा[2] वेरुळिआहमंगं ॥ २८ ॥

छाया—

क्रीडिष्याम ईदृशमेव शश्व-
दवतारमन्यमपि च त्वया गतेन ।
चित्रं सदा गास्यामश्चरित्रं
तव द्रष्टारो वैडूर्याभमङ्गम् ॥

ईदृशमन्यमप्यवतारं गतेन भवता सह वयं शश्वत् क्रीडिष्यामः । प्रार्थनागर्भमिदं वाक्यम् । वैडूर्याभं त्वदीयमङ्गं द्रष्टारस्तव चित्रं चरित्रं गास्यामः । इदमपि प्रार्थनागर्भम् ।

पूर्वसूत्रेणैव भविष्यति लकारे एत्वं चकारादित्त्वं च विधीयेते । एत्वे केळेहिमो । इत्त्वे गाइहिमो । इन्द्रवज्रावृत्तम् ॥

---

१. 'ते' ग ङ. २. 'आ' ङ.

एवं तावत् स्तुत्वा स्वाभिलषितं च प्रार्थ्य पुनरिदानीं नमस्कुर्वन्ति—

होउ सव्वह णमो सिरीस दे
संफुरंतसुहबोहमुत्तिणो[1] ।
जस्स णूण ळसए इमो वपू
वज्जणेहि जउणाइ णीळिओ[2] ॥ २९ ॥

छाया—

भवतु[3] सर्वथा नमः श्रीश ते[4]
संस्फुरत्सुखबोधमूर्तये ।
यस्य नूनं लसतीदं वपु-
र्मज्जनैर्यमुनायां नीलितम् ॥

हे श्रीश ! यत् त्वमस्मासु क्षमं मन्यसे तत् कुरु । सर्वप्रकारेणापि ते तुभ्यं नमो भवतु । अथवा सर्वथा वाङ्मनःकायैस्त्रिभिरपि प्रकारैर्नमो भवतु । संस्फुरत्सुखबोधमूर्तये सकळनिष्कळस्वरूपाय । यस्य ते तवेदं वपुर्यमुनायां मज्जनैरिव नीलितं लसति । इवशब्दलोपोऽत्र द्रष्टव्यः ।

"लादेशे वा" (७।३४) इत्यनेन सर्वत्र लादेशे एत्वे विकल्पेन

---

१. 'सत्थुरेन्तसुह' ङ.

२. 'ओ ॥ इअ गोइन्दाहिसेए पाअडकव्वे सिरिकण्हलीळासुअमुणिविरइए सिरिन्धे अक्खाणकज्जविळसिअं णाम छट्ठो सग्गो' ङ.

३. 'भूयात् स' ङ.    ४. 'तुभ्यं' घ. ङ.

विहिते एत्वाभावपक्षोऽत्र दिङ्मात्रेण दर्शितः। ळसए। पक्षे ळसेए इत्याद्यपि भवति। रथोद्धतावृत्तम् ॥

सदश्विपद्यै रचितोऽत्र काव्ये
श्रीचिह्नसंज्ञे विवृतोऽत्र षष्ठः।
ह्रिदन्तकात्यायनसूत्रलक्ष्यः
षष्ठे परिच्छेदवरे स सर्गः ॥

इति गोविन्दाभिषेके आख्याविलसितं नाम
षष्ठः सर्गः समाप्तो विवृतश्च ॥

## सप्तमः सर्गः ।

अथ अतीतसर्गप्रतिपादितां स्तुतिमनूद्य प्रलम्बवधादिकं कथयिष्यन् तावद्देवानां स्वर्गं प्रति गमनमाह -

इअ होउमप्परिवुणिग्गहेण तो
ण भुवीअ णो कअथुई सुरव्वओ ।
अह भूअभव्वपहवेण चोइओ
गमणुब्भवे तुवरिओ पहोळिरो ॥ १ ॥

छाया—

इति भवितुमात्मरिपुनिग्रहेण ततो
नाभून्नो कृतस्तुतिः सुरव्रजः ।
अथ भूतभव्यप्रभवेन चोदितो
गमनोद्भवे त्वरितः प्रघूर्णितः ॥

अथ आत्मरिपुनिग्रहेण भवितुमिति कृतस्तुतिः सुरव्रजो भूतभव्यप्रभवेन गमनोद्भवे चोदितस्त्वरितो न नो प्रघूर्णितो बभूव इति योजना। इतिशब्दः स्तुतिप्रकारं परामृशति । किमर्थं कृतस्तुतिः— आत्मरिपुनिग्रहेण भवितुम् । अत्राभ्यन्तराः कामक्रोधादयो रिपुशब्देनोक्ताः । अत्र स्तुतौ मोक्षतदुपाययोरेव प्रार्थितत्वात् । बाह्यशत्रून्क्षेष्याम इति मनोरथे हेयत्वनिरूपणात् । भूतभव्यप्रभवो विष्णुः गमनोद्भवे चोदितः गम्यतां सुराः सम्पादयिष्ये युष्माकमभिप्रायमिति नियुक्तः। ततः तस्मात् प्रदेशाद् भगवन्नियोगे बहुमानात् त्वरितः।

घूर्णनं चलनम्। त्वरितं ततो गत एव बभूवेत्यर्थः।

*"भुवो होभुवौ" (८।१) इत्यनेन भवतेर्धातोः हो भुव इत्येतावादेशौ विधीयेते। होउं, भुवीअ। ‡"क्ते भूः" (८।२) इत्यनेन क्तप्रत्यये परतः भू इति भवति। भूअ। "प्रादेर्भवः" (८।३) इत्यनेन प्रादेरुत्तरस्य भवतेर्धातोर्भव इति भवति। पहवेण, गअणुब्भवे। ¶"त्वरतेस्तुवरः" (८।४) इत्यनेन त्वरतेर्धातोस्तुवर इति भवति। तुवरिओ। §"घूर्णेर्घोळः" (८।६) इत्यनेन घूर्णधातोर्घोळ इति भवति। पहोळिरो। 'इतेस्त' इत्यकारादेशे तलोपे इअ इति भवति। भवतेर्धातोर्होभावे तुमुनि तकारस्य प्रायोलोपे होउमिति भवति। आत्मभूच्छब्दस्य 'आत्मनि प' इति पत्वे योगविभागाद्ध्रस्वे पस्य द्वित्वे ततो रिपुशब्दपकारस्य वत्वे नस्य णत्वे ग्र इत्यस्य रलोपे तृतीयैकवचने णत्वे 'ए च सुपि' इत्येत्वे अप्परिवुणिग्गहेण इति भवति। 'तद ओऽत्वा' इत्यचा सह पञ्चम्येकवचनस्य ओभावो तो इति भवति। नस्य णत्वे ण इति भवति। भवतेर्भुवभावे ईयादाशे च सति भुवीए इति भवति। नो इत्यस्य निपातस्य 'नो णः' इति णत्वे णो इति भवति। कृञ ऋकारस्य 'ऋदोऽत्' इत्यत्वम्। निष्ठातकारस्य प्रायोलोपे स्तस्य थत्वे पुनस्तितकारस्य प्रायोलोपे 'सुभिस्सुप्सु दीर्घ' इति दीर्घे कअथुई इति भवति। सुरव्रजशब्दस्य रलोपे द्वित्वे जस्य प्रायोलोपे अत ओत्वे सुरव्वओ इति भवति। 'खघथधभां हः' इति थस्य हत्वे अह इति भवति। भवतेः क्ते भूभावे तकारस्य प्रायोलोपे भूअ इति भवति।

---

* 'भुवो होहुवौ' इति मुद्रितपाठः।

‡ 'क्ते हुः' (chow-edn.), 'क्ते हू' (Saras-edn.)

¶ 'त्वरस्तुवरः' इति मुद्रितपाठः।

§ 'घुणो घोलः' (chow-edn.) 'घुर्णो घोलघुम्मौ' (Sars-edn.), अत्र 'क्ते तुरः' (८।५) इति सूत्रं नोदाहृतम्।

भव्यशब्दस्य यकारलोपे द्वित्वे च भव्व इति भवति । उपसर्गादुत्तरस्य भवतेर्भवादेशे भस्य हत्वे तृतीयैकवचने पहवेणेति भवति । भूअभव्व-पहवेण । चोदयतेर्धातोर्निष्ठायां 'क्ते' इतीत्वे सौ चोइओ इति भवति । गमनशब्दस्य णत्वे उद्भवशब्देन सन्धावुत्वे उपरिलोपः । 'कगचज-तदपयवां' इति तलोपे ङौ गमणुब्भवे इति भवति । त्वरतेस्तुवरादेशे निष्ठायामित्वे सौ तुवरिओ इति भवति । घूर्णेर्घोळादेशे र्णस्य रलोपे घस्य हत्वे तृन इरादेशे सौ पहोळिरो इति भवति । मञ्जुभाषिणी वृत्तम् ॥

णोळ्ळीअच्चिअ दूमिओ अह णिअं कंसो रिवुप्फाळओ
पुप्फाणं वरिसेण पत्तहरिसं सग्गा हरिं बाहिउं ।
संपुण्णामरिसो रिवूण हरणं कीळं कुणन्तं च तं
भण्डीरम्मि करीअ जीअरहिअं ताहे पळंबं बळो ॥ २ ॥

छाया—

नुनोदैव दूनोऽथ निजं कंसो रिपूत्पाटकः
पुष्पाणां वर्षेण प्राप्तहर्षं स्वर्गाद्धरिं बाधितुम् ।
सम्पूर्णामर्षो रिपूणां हरणं क्रीडां कुर्वाणं च तं
भाण्डीरेऽकरोज्जीवरहितं तदा प्रलम्बं बलः ॥

कंसो निजमात्मीयं प्रलम्बाख्यमसुरं नुनोदैव । अनेनैवैतत् कार्यं साध्यमिति प्रेषितवान् । दूनः पूर्वप्रेषितैर्निजजनैर्बहुमान्यैरपि कार्यस्यासाध्यत्वात् परितप्तः । रिपूत्पाटकः रिपूणामुच्छेत्ता । इतः पूर्वमित्यर्थात् सिध्यति । अत एव वीरम्मन्यत्वात् पुनः पुनः प्रेषणम् । किमर्थं प्रेषितवान्— हरिं कृष्णं बाधितुम् । कीदृशं हरिं— स्वर्गात् पुष्पाणां वर्षेण प्राप्तहर्षम् । यदा यदा सुरहितार्थं भगवता

दुष्टनिग्रहः क्रियते तदा तदा भगवदुत्साहवर्धनाय देवैः स्वभक्तिव्यञ्जिका पुष्पवृष्टिः क्रियते। तथा ग्रासहर्षम्। रिपूणां हरणं हर्तारम्। "कृत्यल्युटो बहुलम्" (पा० सू० ३-३-११३) इति कर्तरि ल्युट्। तदा बलो बलभद्रो भाण्डीरे भाण्डीराख्यवृक्षे तस्य समीपे तं प्रलम्बं जीवरहितमकरोत्। शिरसि मुष्टया निक्षिप्य हतवान्। सम्पूर्णामर्षः अस्य व्यापारं दृष्ट्वा प्रवृद्धकोपः। कीदृशं प्रलम्बं–मायया भगवद्वधसौकर्याय गोपवेषं गृहीत्वागत्य भगवत उक्त्या वाह्यवाहकलक्षणायां क्रीडायां प्रवृत्तायां कृष्णं वोढुमशक्त्या बलभद्रस्य वहनक्रीडां कुर्वाणम्।

*"नुदेर्णोळ्ळः" (८।७) इत्यनेन नुदेर्धातोः णोळ्ळ आदेशो भवति। णोळ्ळीअ। "दूङो दूमः" (८।८) इत्यनेन दूङो धातोः दूम इत्यादेशो भवति। दूमिओ। ‡"वृषादीनामृतोऽरिः" (८।११) इत्यनेन वृषादीनां धातूनामरीत्ययमादेशो विधीयते। वरिसेण, पत्तहरिसं, अमरिसो। †"अन्त्यस्यारः" (८।१२) इत्यनेन धातोरन्त्यस्य ऋकारस्यार इत्यादेशो भवति। हरणं। §"कृञः कुणः" (८।१३) इत्यनेन करोतेर्धातोः कुणादेशो भवति। कुणन्तं। पक्षेऽरादेशोऽपि भवति। करीअ। नुदेर्णोळ्ळादेशे भूत ईयादेशे णोळ्ळीअ इति भवति। 'चिअ चेअ अवधारणे' इति चिआदेशः। दुनोतेर्दूमादेशे निष्ठायामित्वे सौ दूमिओ इति भवति। अथशब्दस्य 'स्वघे'त्यादिना हत्वे अहेति भवति। निजशब्दस्य णत्वे जस्य प्रायोलोपेऽभि णिअ-

---

* 'णुदो णोल्लः' (chow-edn.), 'नुदो णोल्लः' (Saras-edn.)

‡ 'वृषकृषमृषहृषामृतोऽरिः' (chow-edn.) अत्र 'पटेः फलः' (८।९) 'पदेः पालः' (८।१०) इति सूत्रद्वयं नोदाहृतम्।

† 'ऋतोऽरः' (chow-edn.) 'अन्ते अरः' (Saras-edn.)

§ 'कृञः कुणो वा' (chow-edn.) 'कृञः कुण च (Saras-edn.)

मिति भवति । कंसशब्दः प्राकृतसंस्कृतयोः समान एव । साधोत्वे कंसो । रिपुशब्दस्यपकारस्य 'पो व' इति वकार एव विशेषः । अत्रोद् उत्तरस्य पाटयतेः *"पाटेः फाळः" इति फाळादेशे स्वार्थे के साधोत्वे रिवुप्फाळओ इति भवति । 'ष्पस्य फ' इति फत्वे आमि पुप्फाणं इति भवति । वृषादित्वादरादेशे वरिसेणेति भवति । रलोपे ह्रस्वे पलोपे तकारस्य द्वित्वे-हृषेरर्यादेशेऽपि पत्तहरिसं इति भवति । स्वर्गशब्दस्य वलोपे रलोपे ङस आत्वे सग्गा इति भवति । हरिशब्दः समानः । बाधितुमित्यस्य धस्य हत्वे तकारस्य प्रायोलोपे बाहिउमिति भवति । सम्पूर्णामर्ष इति स्थिते ऊकारस्य ह्रस्वे रलोपे णस्य द्वित्वे मृषेरर्यादेशे सौ संपुण्णामरिसो इति भवति । पस्य वत्वे आमि दीर्घे रिवूण इति भवति । हरणशब्दः समानः । क्रीडाशब्दे डस्य ळत्वेऽपि ह्रस्वे कीळयिति भवति । कृञः कुणादेशे शत्रादेशेऽपि कुणन्तमिति भवति । तमिति पदं संस्कृतप्राकृतयोः समानरूपम् । भाण्डीरशब्दस्य ह्रस्वे ङौ म्म्यादेशे भण्डीरम्मि इति भवति । कृञः कुणादेशाभावे भृतलकारे ईयादेशे करीअ इति भवति । वतयोः प्रायोलोपेऽपि जीअरहिअमिति भवति । तदो ङौ 'आहे इआ काले' इत्याहे आदेशे ताहे इति भवति । रलोपे लस्य ळत्वेऽपि पळम्बमिति भवति । बलशब्दे लस्य ळत्वे सौ बळो । शार्दूलविक्रीडितं वृत्तम् ॥

जम्भाअन्तदळं पगेण्हिअफळं घेत्तूण साहासअं
घेत्तुं रण्णमहिद्धिअं हरिसअं घेत्तव्वपाअं वडं ।
तो काहीअ पअक्खिणं मुणिजुअं पुण्णं इमं काहिमो
काऊणच्चिअ काउमण्णमुइअं काअव्वमज्जत्ति तं ॥३॥

---

* अस्य सूत्रस्य स्थाने ' पटेः फलः ' [८।९] ' पदेः पालः ' [८।१०] इति सूत्रद्वयं दृश्यते [chow-edn.,]

छाया—

जृम्भमाणदलं प्रगृहीतफलं गृहीत्वा शाखाशतं
ग्रहीतुमरण्यमहीस्थितं हरिशतं[1] गृहीतव्यपादं वटम् ।
ततश्चक्रे प्रदक्षिणं मुनियुगं पुण्यमिमं करिष्यावहे[2]
कृत्वैव कर्तुमन्यदुचितं कर्तव्यमद्येति तम् ॥

मुनियुगं वामदेवभरद्वाजाख्यं गङ्गां गन्तुं प्रवर्तमानं मार्गवशात् तत्र प्राप्तं कर्तृ भाण्डीराख्यं वटं प्रदक्षिणं चक्रे। 'भाण्डीरे सुखमासीनं विहरन्तं जनार्दनम् । वामदेवभरद्वाजौ तौ च प्राप्तौ यदृच्छया ॥' इति हरिवंशे। कीदृशं वटम्– जृम्भमाणदलं वर्धमानबहुपत्रं सुच्छायमिति यावत् । प्रगृहीतफलम्– अनेन प्राण्युपजीवित्वम् उक्तम् । शाखाशतं गृहीत्वा अरण्यमहीस्थितं हरिशतं ग्रहीतुमिवेति इवशब्दलोपोऽत्र द्रष्टव्यः। गृहीतव्यपादं सेवनीयपादम् । तेन प्रदक्षिणार्हत्वमुक्तम् । 'मृदं गां दैवतं विप्रं घृतं मधु चतुष्पथम् । प्रदक्षिणानि कुर्वीत प्रज्ञातं च वनस्पतिम् ॥' इति वचनात् । गङ्गां गन्तुं प्रवर्तमानं मुनियुगं किमर्थं वटप्रदक्षिणं कृतवदित्याह– आवामिदं पुण्यं वटप्रदक्षिणात्मकं करिष्यावहे। इदं कृत्वैवान्यत् कर्तव्यं कर्तुमुचितमिति, यद्वा आवां कर्तुमुचितमिदं पुण्यं कृत्वैव अन्यत् कर्तव्यं करिष्यावहे इति ।

*"जृम्भेर्जम्भा" (८।९४) इत्यनेन जृम्भतेर्धातोर्जम्भा आदेशो विधीयते । जम्भाअन्त । "ग्रहेर्गेण्हः" (८।९५) इत्यनेन ग्रहेर्गेण्ह आदेशो विधीयते। परोण्हिअफळं। $"घेत् क्त्वातुमुंस्तव्येषु" (८।९६)

1. 'हरिः स्वयं' क.  2. 'वहे, महे इति वा' क.

* 'जृभो जम्भाअः' [chow-edn.], 'जृम्भेर्जम्भा' [Saras-edn.]

$ 'घेत्त क्त्वातुमुनृतव्येषु' [Saras - edn.]

इत्यनेन तस्यैव धातोः क्त्वातुमुंस्तव्येषु परतो घेदित्ययमादेशो विधीयते। घेत्तूण। तुमुनि घेत्तुं। तव्ये घेत्तव्वपाअं। "कृञः का भूतभविष्यतोश्च" (८।१७) इत्यनेन करोतेर्धातोर्भूते भविष्यति च, चकारात् क्त्वातुमुंस्तव्येषु परतः कादेशो विधीयते। भूते काहीअ, भविष्यति काहिमो। क्त्वातुमुंस्तव्येषु काऊण, काउं, काअव्वं। जृम्भेर्जम्भा आदेशे शतरि जम्भाअन्तेति। दळपदं समानरूपम्। गृह्णातेर्गेण्हादेशे प्रोपसृष्टे रलोपे निष्ठायामित्त्वे लस्य ळत्वेऽमि पगेण्हिअफळं इति भवति। तस्य घेत्त्वे क्त्वस्तूणादेशे घेत्तूण इति भवति। शाखाशतशब्दस्य शद्वयस्य सत्वे खस्य हत्वे तकारस्य प्रायोलोपेऽमि साहासअमिति भवति। तुमुनि घेत्तुमिति। अरण्यशब्दस्य 'लोपोऽरण्ये' इत्यलोपे णस्य द्वित्वे दीर्घस्य ह्रस्वे तिष्ठतेष्ठादेशे निष्ठायामभि रण्णमहिट्ठिअमिति भवति। तव्ये ग्रहेर्घेत्त्वे दकारस्य प्रायोलोपेऽमि घेत्तव्वपाअमिति भवति। वटशब्दस्य टस्य डत्वेऽमि वडमिति। 'तद ओ वा' इत्योत्वे तो इति। कृञः कादेशे एकाच्त्वाद् हीअ आदेशे काहीअ इति भवति। प्रदक्षिणशब्दस्य रलोपे दलोपे क्षस्य खत्वे पअक्खिणमिति भवति। नस्य णत्वे यस्य जत्वे गस्य प्रायोलोपे नपुंसके सोरमि णुणिजुअळमिति भवति। पुण्यशब्दस्य यलोपे णस्य द्वित्वेऽमि पुण्णमिति भवति। इदम इमादेशे इममिति भवति। भविष्यति कृञः कादेशे हौ काहिमो इति भवति। क्त्वस्तूणादेशे तकारस्य प्रायोलोपे काऊण। च्चिएति निपातः। तुमुनि काउमिति। अन्यशब्दस्य यलोपे नस्य णत्वे द्वित्वे अण्णमिति। उचितशब्दस्य चितयोः प्रायोलोपे उइअमिति भवति। कादेशे तव्ये तयलोपे वस्य शेषत्वाद् द्वित्वे काअव्वं इति भवति। अद्येत्यस्य 'त्यथ्यद्यानां चछजाः' इति जादेशे द्वित्वे अज्ज इति भवति। इतिशब्देन योगे सन्धावज्जत्ति इति भवति। तमिति समानरूपम्। शार्दूलविक्रीडितं वृत्तम्॥

वेओ जं सुमरेइ जं च भरए तं भाइ बन्धादु जं
  जत्तो बीभइ सो ण वाइ ण रुसा जस्सिं ण धी वाअए ।
जं थिप्पेइ समेण जाणइ दमं सब्वं मुणन्तं च जं
  जं जंपेइ ण किंपि ठाअइ हरिं झाएइ गाएइ अ ॥ ४ ॥

छाया—

वेदो यत् स्मरति यच्च स्मरति तं बिभेति बन्धाद् यद्
  यतो बिभेति सो न म्लायति न रुड्यस्मिन्न धीर्म्लायति ।
यत् तृप्यति शमेन जानीते दमं सर्वं जानानं च यत्
  यज्जल्पति न किमपि तिष्ठति हरिं ध्यायति गायति च ॥

बटप्रदक्षिणानन्तरं हरिं दृष्ट्वा समाधिचक्षुषास्य परब्रह्मस्वरूपत्वं विज्ञाय स्थितस्य मुनियुगस्य स्तुतिमाह । उत्तरश्लोकेनास्य सम्बन्धः । तत्र तावज्जीवपरयोरैक्यमङ्गीकृत्याह— वेदो यत् परब्रह्मस्वरूपं स्मरति बोधयति । यच्च जीवरूपं भूत्वा तं वेदं स्मरति विचारयति । स्वस्वरूपस्य परस्य ब्रह्मणो ज्ञानाय यज्जीवरूपं बन्धाद् बिभेति । अत एव हि तन्निवर्तके ज्ञाने प्रवर्तते । यतो यस्माद् ब्रह्मस्वरूपाद् बिभेति इति सम्बन्धः । यस्य यस्य हि ब्रह्मज्ञानं तस्मात् तस्माद् बन्धो दूरमपसरतीति भावः । यस्माद् ब्रह्मज्ञानाधिकारिणि जीवे रुट् न न म्लायति म्लायत्येव । रुड् रोषः । तेन कामादयः षडप्यरयो विवक्ष्यन्ते । यस्मिन् ब्रह्मरूपे धीः धीप्रतिष्ठितं तज्ज्ञानं न म्लायति न बाध्यते । परमार्थवस्तुविषयत्वात् । शुक्तावेव हि रजतज्ञानमपरमार्थवस्तुविषयत्वाद् बाध्यते न तथा सत्यरजते । यज्जीवरूपं जीवत्वमपहाय तृप्यति निरातिशयसुखं ज्ञानफलं लभते । यच्छमेन जानीते दमम् । यज्जीवरूपं शमेन सह दममपि जानीते । ज्ञानसाधनत्वेन शमदमादीन्

जानीते इति भावः । यत् परब्रह्मरूपं सर्वं जानानं च सर्वज्ञमित्यर्थः । यज्जीवरूपं किमप्यनात्मवस्तु न जल्पति । यत् तिष्ठति ब्रह्मण्येवेति शेषः । यद्धरिं ध्यायति आत्मभूतं विष्णुं ध्यायति गायति स्तौति च । अन्यत्र ज्ञानप्रवृत्तानामेव जीवानां ब्रह्मैकत्वात् सफलमिति तेषामैक्य-मुक्तमिति द्रष्टव्यम् । अत्र जीवशब्देन देहेवोच्यते ।

*"स्मरतेस्सुमरभरौ" (८।१८) इत्यनेन स्मरतेर्धातोः सुमर भर इत्येतावादेशौ विधीयेते । सुमरेइ । भरए । ₰"भियो भाबीभौ" (८।१९) इत्यनेन बिभेतेर्धातोः भा बीभ इत्येतावादेशौ विधीयेते । भाइ, बीभइ । §"म्लायो वावाऔ" (८।२१) इत्यनेन म्लायतेर्धातोः वा वाअ इत्ये-तावादेशौ विधीयेते । वाइ, वाअए । ‡"तृपेस्थिप्पः" (८।२२) इत्यनेन तृप्यतेर्धातोः थिप्पादेशो विधीयते । थिप्पेइ । "ज्ञो जाणमुणौ" (८।२३) इत्यनेन जानातेर्धातोः जाण मुण इत्येतावादेशौ विधीयेते । जाणइ, मुणन्तं । "जल्पेर्लो मः" (८।२४) इत्यनेन जल्पतेर्धातोः लकारस्य मकारादेशो विधीयते । जंपइ । "स्थाध्यागानां ठाअझाअ-गाआः" (८।२५) इत्यनेन तिष्ठतेर्धातोः ध्यायतेः गायतेश्च ठाअ झाअ गाअ इत्येते आदेशा विधीयन्ते । ठाअइ, झाएइ, गाएइ । शार्दूल-विक्रीडितं वृत्तम् ॥

---

* 'स्मरतेर्भरसुमरौ' मुद्रितपाठः ।

₰ 'भियो भावीहौ' मुद्रितपाठः ।

§ 'म्लै वावाऔ' (chow-edn.), 'म्लो वा(?)वाअ' (Saras-edn.) अत्र 'जिघ्रतेः पापाऔ' (८।२०) इति सूत्रं नोदाहृतम् ।

‡ 'तृपास्थिपः' (chow-edn.)

ठाहिइ झाहिइ गाहिइ भू जं
ठाहिसि झाहिसि गाहिसि जो तं।
ठाहिमि झाहिमि गाहिमि जं सो
होसि हरित्ति भणीअ अ एक्को ॥ ५ ॥

छाया—

स्थास्यति ध्यास्यति गास्यति भूर्यं
स्थास्यसि ध्यास्यसि गास्यसि यस्ताम्।
स्थास्यामि ध्यास्यामि गास्यामि यं स
भवसि हरिरित्यभाणीच्चैकः ॥

भूर्भूमिदेवी भगवत्पत्नीत्वे प्रसिद्धा यं स्थास्यति उपस्थास्यति। उपसर्गस्यातन्त्रत्वादेवमुक्तिः अयुङ्क्तेत्यादिवत्। तथा यं भगवन्तं ध्यास्यति गास्यति च। गानेन स्तवनमुच्यते। स्तोष्यतीत्यर्थः। यश्च त्वं स्वपत्नीं तामुपस्थास्यसि ध्यास्यसि गास्यसि च। अत्रापि पूर्ववदेवार्थः। अहमप्येवंभूतस्त्वां स्थास्यामि ध्यास्यामि गास्यामि च, कायमनोवाग्भिः सेवां करिष्यामीति भावः। यत् पूर्वश्लोकप्रतिपादितं स्वरूपं यश्च पुनरनेन श्लोकेन प्रतिपादितः त्वं स हरिर्भवसि, न केवलमानुष इत्यभाणीत् स्तुतिमकरोदेकः। वामदेव इत्यर्थात्।

"ठाझागाश्च भविष्यद्वर्तमानविध्याद्येकवचने" (८।२६) इत्यनेन भविष्यति काले वर्तमाने विध्यादौ च यान्येकवचनानि तेषु स्था ध्या गा इत्येतेषां ठा झा गा इत्येते आदेशाः क्रमेण भवन्ति। ठाहिइ, झाहिइ, गाहिइ, ठाहिसि, झाहिसि, गाहिसि, ठाहिमि, झाहिमि, गाहिमि इति। चकारानुकृष्टाः ठाआदय उत्तरश्लोके द्रष्टव्याः।

दोधकवृत्तम्- 'दोधकवृत्तमिदं भभभाद्गौ' इति हि वृत्तरत्नाकरे ॥

ठाअहिइ झाअहिइ गाअहिइ भू जं
ठाअहिसि झाअहिसि गाअहिसि जो तं ।
ठाअहिमि झाअहिमि गाअहिमि जं सो
होसि पसुपाळतणअत्ति अ हु[1] अण्णो ॥ ६ ॥

छाया—

स्थास्यति ध्यास्यति गास्यति भूयं
स्थास्यसि ध्यास्यसि गास्यसि यस्ताम् ।
स्थास्यामि ध्यास्यामि गास्यामि यं स
भवसि पशुपालतनय इति च हु अन्यः ॥

भरद्वाजस्य स्तुतिमाह आतृतीयपादान्तम् । पूर्वश्लोकोक्त एवार्थः । वक्तृभेदात् प्रक्रियाभेदात् स्तुतिरूपाच्च न पौनःपुन्यम् । अतो न पौनरुक्त्यदोषः । पशुपालतनयस्तद्रूपेण वर्तमानस्त्वं स हरिरेव भवसि । हुशब्दो निश्चये । एवशब्दार्थ इति यावत् । अन्यो भरद्वाज इति चाभाणीदिति शेषः ।

'ठाझागाश्चे'ति चशब्देनानुकृष्टाः ठाअझाअगाआः अत्र प्रदर्शिताः । इन्दुवदना वृत्तम् । 'इन्दुवदना भजसनैः सगुरुयुग्मैः' इति वृत्तरत्नाकरे ॥

पूर्वं वामदेवस्तुतेरनुवाद एव कृतः । इदानीं विशेषं दर्शयितु-

1. 'हु निश्चये अण्णो' ख.

कामः पुनरपि स्तौति भरद्वाजः—

ठाइ झाइ गाइ भू हु
ठासि झासि गासि तं च ।
ठामि झामि गामि हं ति
संसिअं पुणो वि तेण ॥ ७ ॥

छाया —

तिष्ठति ध्यायति गायति भूर्हु
तिष्ठसि ध्यायसि गायसि त्वं च ।
तिष्ठामि ध्यायामि गायाम्यहमिति
शंसितं पुनरपि तेन ॥

पुनरपि तेन भरद्वाजेन इति शंसितम् । अत्रोपस्थानादेर्वर्तमानतैव पूर्वस्माद् विशेषः । तमित्यस्य त्रिधा छाया कल्पनीया– तामिति त्वमिति त्वामिति च । भूविशेषणे तामिति, मध्यमपुरुषे त्वमिति, अहं ध्यायामीत्यादौ त्वामिति कर्मत्वेन ।

अत्र वर्तमानविषये ठाझागाप्रयोगो दर्शितः । समानिका वृत्तम् । 'जौ समानिका गलौ च' इति वृत्तरत्नाकरे ॥

ठाअइ झाअइ गाअइ जं भू
ठाअसि झाअसि गाअसि जो तं ।
ठाअमि झाअमि गाअमि जं सो
होसि विहुत्ति पुणो इअरेण ॥ ८ ॥

छाया—

तिष्ठति ध्यायति गायति यं भू-
स्तिष्ठसि ध्यायसि गायसि यस्त्वाम् ।
तिष्ठामि ध्यायामि गायामि यं स
भवसि विभुरिति पुनरितरेण ॥

पुनरितरेण वामदेवेन इति शंसितमिति शेषः । अत्र वर्तमाने ठाआदयः । दोधकवृत्तम् ॥

पुनरपि विशेषख्यापनाय विधिवैशिष्ट्यं दर्शयंस्तौति वामदेवः—

ठाउ झाउ गाउ भू हु
ठासु झासु गासु तं च ।
ठामु झामु गामु हं ति
संसिअं पुणो वि तेण ॥ ९ ॥

छाया—

तिष्ठतु ध्यायतु गायतु भूर्हु
तिष्ठ ध्याय गाय तां च ।
तिष्ठानि ध्यायानि गायान्यहमिति
शंसितं पुनरपि तेन ॥

अत्र विधौ ठाआदयः । त्रिधौ त्रैविध्यमुक्तमभियुक्तैः । 'विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्या विधीयते ॥' इति । अत्र प्रवृत्तप्रेरणात्मकेन विधिना नियमो विवक्ष्यते– एवमेव भवतु नान्यथेति । अत्र च पूर्ववत् तमित्यत्र त्रिधा

छाया। योजना च पूर्ववत्। इति अनेन प्रकारेण शंसितं स्तुतं पुनरपि वामदेवेन।

अत्र विध्यादौ ठाझागाः प्रदर्शिताः। समानिका वृत्तम्॥

पुनरपि भरद्वाजः स्तौति—

ठाअउ झाअउ गाअउ भू जं
ठाअसु झाअसु गाअसु तं च।
ठाअमु झाअमु गाअमु हं सो
होसि विहुत्ति पुणो इअरेण॥ १०॥

छाया—

तिष्ठतु ध्यायतु गायतु भूयं
तिष्ठ ध्याय गाय तां च।
तिष्ठानि ध्यायानि गायान्यहं स
भवसि विभुरिति पुनरितरेण॥

पुनरपीतरेण भरद्वाजेनेति शंसितम्।

अत्र विधौ ठाअझाअगाआः प्रदर्शिताः। दोधकवृत्तम्॥

खाहिइ फळमिह अ धाहिइ बळग्गो
खाहिसि तुवं हु जइ धाहिसि अ किं ण।
खाहिमि अहं इह हु धाहिमि अ इत्थं
गोवसिसुणा वि भणिओ किण वि एक्को॥ ११॥

छाया—

खादिष्यति फलमिह च धाविष्यति बलाग्र्यो

खादिष्यसि त्वं हु यदि धाविष्यसि च किं न ।

खादिष्याम्यहमिह हु[1] धाविष्यामि चेत्थं

गोपशिशुनापि[2] भणितः केनाप्येकः ॥

केनापि गोपशिशुना कोऽपि गोपशिशुर्भणित उक्तः । न केवलमृषिभ्यां भगवान् भणित इत्यपिशब्दार्थः । कथम्— बलो बलभद्र अग्र्यो ज्येष्ठो यस्य स बलाग्र्यः कृष्णः । ऋष्योः स्तुत्यनन्तरं बालचेष्टयापि तयोः प्रीतिं कर्तुं फलभक्षणोन्मुखं भगवन्तं कृष्णं दृष्ट्वा गोपशिशोः कस्यापि खसखं प्रत्युक्तिरियम् । कृष्णः खादिष्यति फलम् । धाविष्यति च । धावनमत्र शुद्धिः मुख्यस्यैवौचित्यात् सि[3]ध्यति । वनमिदं सम्भावितमेतद्यदि खादनाद्याचरिष्यति मुन्योः सन्निधावपि कृष्णः । हे सखे तस्मात् त्वमपि खादिष्यसि च किं नेति[4] ।

"खादिधाव्योः *खाधौ" (८।२७) इत्यनेन खादिधाव्योर्धात्वोर्भविष्यद्वर्तमानविध्याद्येकवचनेषु खा धा इत्येतावादेशौ विधीयेते । भविष्यति खाहिइ, धाहिइ इत्यादि । इन्दुवदना वृत्तम् ॥

अथ भगवति फलभक्षणं कुर्वति सति पूर्वोक्तो गोपशिशुः सचमत्कारं प्रत्याह—

---

* 'खाधा' (Saras–edn.)

---

१. 'खलु' ङ.  २. 'नापीति वैपरीत्ये भणि' ङ.

३. 'ध्यति । यदि असन्दिग्धे सन्दिग्धा । घन' खपाठः ।

४. 'ति । योनेन ण्यन्तयो खादिधाव्यो' खपाठः ।

खाइ धाइ जं इमो हु
खासि धासि तुं च वच्छ ।
खामि धामि तं अहं ति
तेण सो वि संसिओ अ ॥ १२ ॥

छाया—

खादति धावति यदयं हु
खादसि धावसि त्वं च वत्स ।
खादामि धावामि तदहमिति
तेन सोऽपि शंसितश्च ॥

अयं कृष्ण इदानीं भक्षणधावने आचरति यद् यस्मात् तस्मात् त्वमपि तथा करोषि । हु सम्भावनायाम् । तत् तस्मादत एवाहमपि तथा करोमीति च शंसितम् ।

अत्र वर्तमाने खाइ धाइ इत्यादि । समानिका वृत्तम् ॥

पुनरन्यस्य गोपकुमारस्य शंसनप्रकारमाह—

खाउ धाउ ता इमो हु खासु धासु तुं च वच्छ ।
खामु धामु हं च तो त्ति संसिअं अहो परेण ॥ १३ ॥

छाया—

खादतु धावतु तावदयं हु[2] खाद धाव त्वं च वत्स ।
खादानि धावान्यहं च तत इति शंसितमथो परेण ॥

१. 'ह्विति निश्चये खादसि' क.   २. 'ह्विति प्राग्वत् खाद' क.

अयं च कृष्णः खादनादि करोतु । त्वं च तथा कुरु वत्स! । अहमपि तथा करवाणि । कृष्णप्रवृत्त्यनुसारेणैवास्माकं प्रवृत्तयः सन्त्विति भावः । इति परेणान्येन शंसितम् । अहो आश्चर्यं । ऋषि-गौरवेण भगवति तूष्णीं स्थिते सर्वैरपि तूष्णीं स्थितम् । बालस्वभाव-मनुसृत्य भगवति कृष्णे खादनादौ प्रवृत्ते सर्वेऽपि तथा चक्रुरित्या-श्चर्यहेतुः ।

अत्र विध्येकवचने खाउ धाउ इत्यादि । समानिका वृत्तम् ॥

बोराइं खसिरो पसू अ चिणिरो भद्दं किणन्तो फळं
  विक्केन्तो विअ विक्किणेइरजणे वेणुद्धुमाणे रओ ।
गाणं सद्दहिरो सरेसि सरसं ओवाहमाणो तओ
  ओवासे अइओ मुणिस्सुइसुहं णिम्माणिउं उज्जओ ॥१४॥

छाया—

बदराणि ग्रसिता पशूंश्च चेता भद्रं क्रीणानः फलं
  विक्रीणानोऽपि च विक्रेतृजने वेणुध्माने रतः ।
गानं श्रद्धाता सरांसि सरसमवगाहमानस्ततः
  अवकाशेऽजितो मुनिश्रुतिसुखं निर्मातुमुद्यतः ॥

ततो भक्षणशुद्धिभ्यामनन्तरम् । ऋषिमनसि बालस्वभावदिदृक्षा वर्तत इति फलभक्षणादि कृतमित्यवसेयम् । अवकाशेऽवसरे प्राप्तेऽजितः कृष्णो मुनिश्रुतिसुखं निर्मातुं मधुराभिर्वाग्भिः सुखयितुमुद्यतः प्रवृत्तः । अनुदिनं वने वर्तमानस्य क्रीडाविशेषैस्तमेव विशिनष्टि— बदराणि बदरफलानि ग्रसिता भक्षयिता । पशूंश्च चेता शाद्वलेषु प्रदेशेषु यूथी-करणशीलः । भद्रं फलं क्रीणानः न्यूनस्य फलस्य प्रदानेन विशिष्टस्य

फलस्यादाता। विक्रेतृजने विक्रीणानः। क्रयविक्रयकुशल इत्यर्थः। वेणुध्माने रतः वेणुवादनरतः। गानं श्रद्धाता तस्मिन् स्पृहां वहन्निति यावत्। सरांसि सरसमवगाहमानः। एते श्रीभागवतादौ प्रसिद्धा बालस्वभावा दिङ्मात्रं प्रदर्शिताः।

*"ग्रसेः खसः" (८।२८) इत्यनेन ग्रसेर्धातोः खसादेशो विधीयते। खसिरो। "चिञश्चिणः" (८।२९) इत्यनेन चिनोतोश्चिणादेशो विधीयते। चिणिरो। "क्रीञः किणः" (८।३०) इत्यनेन क्रीणातेः किणादेशो विधीयते। किणन्तो। ¶"वेः के च" (८।३१) इत्यनेन वेरुत्तरस्य क्रीणातेः के इत्ययमादेशो विधीयते। चकारात् किणश्च। विक्केन्तो। विक्किणेइरजणे। $"उद्ध्म उद्धुमः" (८।३२) इत्यनेन उत उत्तरस्य ध्माधातोः उद्धुमादेशो विधीयते, वेणुद्धुमाणे। +"श्रद्धो दहः" (८।३३) इत्यनेन श्रत्पूर्वस्य दधातेः दहादेशो विधीयते सद्दहिरो। "अवाद् गाहेर्वाहः" (८।३४) इत्यनेन अवादुत्तरस्य गाहधातोः वाहादेशो विधीयते। ओवाहमाणो। "काशेर्वासः" (८।३५) इत्यनेन काशेधातोः वासादेशो विधीयते। ओवासे अइओ। 'ओदवापयोः' इत्यवशब्दस्य ओकारादेशः। ‡"निरो मो माणः" (८।३६) इत्यनेन निरित्युपसर्गादुत्तरस्य माधातोः माणादेशो विधीयते। निम्माणिउं। शार्दूलविक्रीडितं वृत्तम्॥

---

* 'ग्रसेर्विसः' मुद्रितपाठः

¶ 'वेः क्के च' (chow-edn.)

$ 'उध्मो धुमा' (Saras-edn.) 'उद्ध्म उद्धुमा' (chow-edn.)

+ 'श्रदो धो दहः' मुद्रितपाठः।

‡ 'निरो माङो माणः' (chow-edn.) 'निरो माङो माणमवौ' (Saras-edn.)

संझिज्जेइ भवो मओ ण मअणो भिन्देइ छिन्देइ धी
  रोसो णो कढए ण वेढइ सुआ लोहो ण उव्वेळए ।
धी संवेळ्ळइ णो अहं ण रुवणं उव्वेवणादो वळे
  वड्ढेए सिविणे वि जेस्सिमणिसं तेसिं णमो वो मुणी ॥१५॥

छाया—

संक्षीयते भवो मदो न मदनो [1]भिनत्ति छिनत्ति धियं
  रोषो न कथते न वेष्टते शुग् लोभो नोद्वेष्टते ।
धीः संवेष्टते नो अघं न रोदनमुद्वेजनाद् वेले
  वर्धते स्वप्नेऽपि ययोरनिशं ताभ्यां नमो युवाभ्यां मुनी ॥

वले इति सम्भाषणे[2] हेशब्दार्थे पर्यवस्यति । हे मुनी! वामदेव-भरद्वाजौ! ताभ्यां युवाभ्याम् अनिशं सदा नमः । अस्त्विति शेषः । ययोर्युवयोर्भवः संसारः संक्षीयते। पुनर्ययोर्धियं मदो न भिनत्ति मदनो न छिनत्ति । ययोर्धियं रोषः क्रोधादिरपि न कथते न पीडयतीति यावत् । ययोर्धियं शुक् शोकोऽपि न वेष्टते न व्याप्नोति । ययोर्धियं लोभो नोद्वेष्टते । ययोर्धियं भीः नो संवेष्टते । ययोरघं न वर्धयते । फलप्रदानसामर्थ्यं वर्धनं विवक्षितम् । कीदृशमघम्— स्वप्नेऽप्युद्वेजनाद्रोदनम् । उद्वेजनादिति ल्यब्लोपे पञ्चमी । उद्वेजनमनिष्टवस्तु विधाय । रोदनं रोदयितृ ।

"क्षियो झिज्जः" (८।३७) इत्यनेन क्षियो धातोः झिज्जादेशो विधीयते । संझिज्जेइ । "भिदिच्छिदोरन्त्यस्य न्दः" (८।३८) इत्यनेन

---

1, 'भिन्ते' ङ.    २. 'वले इति सम्भावने' ङ.

भिदिच्छिदोर्धात्वोरन्त्यस्य न्द इत्ययमादेशो विधीयते। भिन्देइ, छिन्देइ। "क्वथेर्ढः" (८।३९) इत्यनेन 'कथ निष्पाके' इत्यस्य धातोरन्त्यस्य ढकारादेशो विधीयते। कढए। 'सर्वत्र लवराणा'मिति वकारलोपः। *"वेष्टतेश्च" (८।४०) वेष्टतेरप्यन्त्यस्य ढकारादेशो विधीयते। वेढइ। +"उत्समोर्ळः" (८।४१) इत्यनेन उत्सम्भ्यामुत्तरस्य वेष्टतेरन्त्यस्य ळकारादेशो विधीयते। उव्वेळए, संवेळ्ळइ। ¶"रुदो वः" (८।४२) इत्यनेन रुदिधातोरन्त्यस्य वकारो विधीयते। रुवणं। †"उदो विजः" (८।४३) इत्यनेन उद उत्तरस्य विजेर्धातोः वकारो विधीयते। उव्वेवणादो। §"वृधेर्ढः" (८।४४) इत्यनेन 'वृधु वर्धने' इत्यस्य धातोरन्त्यस्य ढकारो विधीयते। वड्ढेए। शार्दूलविक्रीडितं वृत्तम् ॥

तो संसिअं तोहिं रिवू हु हम्मसे
ण रूससे तूससि सूसणं ण अ।
संवच्चसे णच्चसि जुञ्झबुञ्झणा
रुन्धेसि सो सिं अणुरुम्भसे अ णो ॥ १६ ॥

छाया—

ततः शंसितं ताभ्यां रिपून् हु[1] हंसि
न रुष्यसि तुष्यसि शोषणं न च।

---

* 'वेष्टेश्च' मुद्रितपाठः।

\+ 'उत्समोर्ल्लः' [Saras-edn.]

¶ 'रुदेर्वः' (Chow-edn.)

† 'उद्दो विजः' (Chow-edn.)

§ 'वृधेर्ड्ढः' (Sars-edn.)

---

१. 'ह्निति प्राग्वत्। हंसि।' ङ-

संव्रजसि नृत्यसि युद्धबोधनाद्
रुणत्सि स भियमनुरुणत्सि च आवाम् ॥

ततो भगवद्वचनानन्तरं शंसितमुक्तं ताभ्यां मुनिभ्याम् । शंसनप्रकारमाह– त्वं रिपून् हंसि । हु निश्चये । पुनर्युद्धबोधनान्न रुष्यसि रोषाभिभूतो न भवसि । प्रत्युत तुष्यसि च । तत्र लिङ्गमाह– नृत्यसीति । एवम्भूतस्त्वं शोषणं न व्रजसीति किमुच्यते । स तादृशस्त्वम् आवाम् अनुरुणत्सि च आवाम् अनुवर्तसे च । अत एव भियं रुणत्सि । आवयोरित्यर्थात् ।

"हन्तेम्र्मः" (८।४५) इत्यनेन हन्तेर्धातोरन्त्यस्य म्मकारादेशो विधीयते । हम्मसे । "रुषादीनां *दीर्घत्वम्" (८।४६) इत्यनेन रुषादीनां धातूनामचः स्थाने दीर्घत्वं विधीयते । रूससे, तूससि, सूसणं । "चो व्रजनृत्योः" (८।४७) इत्यनेन व्रजनृत्योर्धात्वोरन्त्यस्य चकारादेशो विधीयते । संवच्चसे, णच्चसि । $"युधबुधयोर्ज्झः" (८।४८) इत्यनेन युधेर्धातोर्बुधेश्च अन्त्यस्य ज्झकारादेशो, विधीयते । जुज्झबुज्झणा । "रुधेर्न्धम्भौ" (८।४९) इत्यनेन रुधेर्धातोरन्त्यस्य न्ध, म्भ, इत्येतावादेशौ विधीयेते । रुन्धेसि, अणुरुम्भसे । इन्द्रवंशावंशस्थाभ्यामुपजातिवृत्तम् ॥

दुट्ठे दे मळिरस्स जामु सेडिरं चक्कं पडेउं महे
सक्कन्तं [3]वि सएइरस्स वहिउं फुट्टन्तवुट्टन्तभि ।

---

* 'दीर्घता' (Chow-edn.), दीर्घः' (Saras-edn.)

$ 'युधिबुध्योर्ज्झः' (Chow-edn) 'युधिबुधिगृधिसिधिक्रुधां, ज्झः' (Saras-edn)

---

१. 'रुन्से' ङ. २. 'सढिरं' ङ. ३. 'पि' ङ.

बाहुं अप्फडिरस्स अप्फउडिरच्छाअं अपम्मिळिरं
उम्मिळ्ळन्तरसा पमीळिअसुआ उम्मीळिअच्छा पअं ॥१७॥

छाया—

दुष्टान्मर्दितुर्विच्छादितृ चक्रं पतितुं मृधे
शक्नुवदपि शक्तुर्वोढुं स्फुटत्त्रुटद्भि ।
बाहुमास्फोटितुरवत्रोटितृच्छायमप्रमीलितृ
उन्मीलद्रसौ प्रमीलितशुचावुन्मीलिताक्षौ पदम् ॥

आवां ते पदं स्वरूपं यावत् । कीदृशौ– उन्मीलद्रसौ उन्मिषदानन्दौ प्रमीलितशुचौ नष्टशोकौ उन्मीलिताक्षौ आवां हि मुग्धत्वादप्रबुद्धेन्द्रियौ। कीदृशं पदं– स्फुटत्त्रुटद्भि स्फुटन्ती विदीर्यमाणा त्रुटन्ती छिद्यमाना भीर्यस्मिन् पदे तत् तथा । अप्रमीलितृ अविनश्वरम् । कीदृशस्य– दुष्टान् मर्दितुः। मृधे युद्धे पतितुं शक्नुवत्, शदितृ शातनशीलं चक्रं सुदर्शनं वोढुं शक्तुः शकनशीलस्य । अवत्रोटितृच्छायं बाहुम् आस्फोटितुः अविच्छिन्नशोभं बाहुमास्फोटितुः– उद्धर्षणार्थं युद्धे बाह्वोरास्फोटनं प्रसिद्धं, तच्छीलस्य ।

"मृदो *ळः" (८।५०) इत्यनेन 'मृद् सञ्चूर्णने' इत्यस्य धातोर्ळकारादेशः । मळिरस्स । "शदिपत्योर्डः" (८।५१) इत्यनेन 'शद शातने' 'पत गतौ' इत्यनयोर्धात्वोः डकारः । सडिरं, पडेउं । †"शकादीनां द्वित्वं वा" (८।५२) इत्यनेन 'शक्ऌ शक्तौ'वित्येव-

* 'ळः' मुद्रितपाठः ।
† 'शकादीनां द्वित्वम्' मुद्रितपाठः,

१. 'अप्फळिरस्स' ख. २. 'वर्तितुं' ख.
३. 'वर्धितुं' ख.

मादीनां धातूनां विकल्पेन द्वित्वं भवति । सक्कन्तं, सएइरस्स । "*स्फुटिचलोश्च" (८।५३) इत्यनेन स्फुटतेश्चलतेश्च विकल्पेन द्वित्वम् । फुट्टन्ततुट्टन्तम्मि, अप्फुडिरस्स, अप्फुडिरच्छाअं । "¶टो डः" इत्यनेन टकारस्य डकारः । चलतिरत्र नोदाहृतः । तदनुदाहरणादिदं सूत्रं न कवेरभिमतमिति गम्यते । मध्ये तु क्षेपाच्च येषां मते पुनरिदं सूत्रं नोपपद्यते तेषां पक्षे शकादित्वादेव द्वित्वम् । "प्रादेर्मीलः" (८।५४) इत्यनेन प्रादेरुत्तरस्य मीलतेर्धातोः वा द्वित्वं भवति । अपम्मिळ्ळिरं, उम्मिळ्ळन्त, पमीळिअसुआ, उम्मीळिअच्छा । शार्दूलविक्रीडितं वृत्तम् ॥

भोत्तूण च्चिअ जाअ भोत्तुमुइअं भोत्तव्वसप्पी हवी
मोत्तूण च्चिअ [1]किं ण मोत्तुमुइअं मोत्तव्वबंधा इणं ।
इत्थं हासिहरीरिआ अह मुणी जाआ हु भत्ता दरं
रोत्तूण च्चिअ किं ण रोत्तुमुइअं रोत्तव्ववेळाअमे ॥ १८ ॥

छाया --
भुक्त्वा च्चिअ यात भोक्तुमुचितं भोक्तव्यसर्पिर्हवि-
मुक्त्वा च्चिअ [2]किं न मोक्तुमुचितं मोक्तव्यबन्धाविदम् ।
इत्थं हासिहरीरितावथ मुनी यातौ हु भक्तौ दरं
रुदित्वा [3]च्चिअ किं न रोदितुमुचितं रोदितव्यवेलागमे ॥

अथ अनन्तरं वामदेवभरद्वाजयोर्वचनानन्तरम् । इत्थम् अनेन

---

* 'स्फुटिचल्योर्वा' (Chow-edn.) 'स्फुटिचलोर्वा' (Saras-edn.)
¶ सूत्रमिदं मुद्रिते नास्ति ।

---

१. 'णो ण' ङ.        २. 'नो न' ङ.
३. 'च्चिअ प्राग्वत् किं' ङ.

प्रकारेण हासिहरीरितौ सामान्यबालवत् क्रीडानुबन्धहासयुक्तेन हरिणा ईरितौ उक्तौ मुनी वामदेवभरद्वाजौ दरम् ईषद् रुदित्वा एव गतौ। गङ्गास्नानायेति शेषः। हुर्निश्चये। भक्तावेवेत्यर्थः। किमर्थं रोदनमित्याह- किं न रोदितुमुचितं रोदितव्यवेलागमे। भक्तानां हि भगवद्विरहकाले रोदनमवश्यं भवत्येवेति कवेर्भावः। कथं पुनर्हरिणा तावीरितावित्याह- हे मोक्तव्यबन्धौ मुमुक्षू! मोक्तव्यो बन्धः संसाररूपो ययोस्तौ। ते पदं याव इति यद् युवाभ्यां मोक्षप्रार्थनं कृतं तत् तथा करिष्यामीत्यनेन सूचितम्। युवां भोक्तुम् उचितं भोक्तव्यसर्पिः भोक्तव्यं सर्पिराज्यं यस्य तद्धविः भुक्त्वैव यातम्, नो मुक्त्वा। इदं हविर्मोक्तुं नोचितमिति।

"भुजादीनां क्त्वातुमुंस्तव्येषु लोपः" (८।५५) इत्यनेन भुजादीनां धातूनां क्त्वातुमुंस्तव्येषु अन्त्यस्य लोपो भवति। भोत्तूण, मोत्तुं, भोत्तव्व, मोत्तूण, मोत्तुं, मोत्तव्व, रोत्तूण, रोत्तुं, रोत्तव्व। शार्दूलविक्रीडितं वृत्तम्॥

सुणन्तो गोणादं हुणिरजणदेवो अजिणिओ
ळुणन्तो पुप्फाइं अह अ जउणाडं पडि गओ।
कळंबं आरूढो कळकळजुअं काळिअदम-
च्छळादो कीळाए धुणमि हअमेदं ति हिअआ॥ १९॥

छाया—

श्रृण्वन् गोनादं होतृजनदेवोऽजितो
लुनानः पुष्पाण्यथ च यमुनातटं प्रति गतः।
कदम्बमारूढः कळकळयुतं काळियदम-
च्छलात् क्रीडया धुनोमि हृदमेतमिति हृदयात्॥

अथ मुनिगमनानन्तरमाजितः कृष्णो यमुनातटं प्रति गतश्च । किं कुर्वन्– गोनादं शृण्वन् । पुनः किं कुर्वन्– पुष्पाणि लुनानः । होतृजनदेवः यज्ञपुरुषः । पुनः किं कृतवान्– कदम्बमारूढोऽभूत् । कळकळयुतं बहळतरकुसुमपटलपरिमळसङ्गतभृङ्गसमूहासेवितत्वादनन्याश्रयाणां पक्षिणामावासभूतत्वाच्च कळकळध्वनियुक्तम् । अहं काळियमदच्छलमाश्रित्य क्रीडया ह्रदमेतं धुनोमि कम्पयामीति हृदयाद् इत्यभिप्रायात् कदम्बमारूढ इति सम्बन्धः ।

*"श्रुहुजिलूञ्धूञां णोऽन्त्यस्य ह्रस्वश्च" (८।५६) इत्यनेन श्वादीनां पञ्चानां धातूनां णकारादेशः । अन्त्यस्य लूञ्धूञोर्ह्रस्वश्च विधीयते । श्रुवः– सुणन्तो । हुवः– हुणिर । जयतेः– अजिणिओ । लुवः– ळुणन्तो । धुवः– धुणामि । शिखरिणीवृत्तम् । "रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी" इति वृत्तरत्नाकरे ॥

सुव्वइ हुव्वइ जिव्वइ अस्सिं
ळुव्वइ धुव्वइ जेण सुगाणे ।
जण्णदिणे समरे मअराणं
संळुणणे धुणणे अ जळाणं ॥ २० ॥

छाया —

श्रूयते हूयते जीयतेऽस्मिन्
लूयते धूयते येन सुगाने ।
यज्ञदिने समरे मकराणां
संलवने धूनने च जलानाम् ॥

---

* 'श्रुहुजिलूधुवां णोऽन्त्ये ह्रस्वः' (Chow-edn.), 'श्रुहुजिलूधूनां णोऽन्ते ह्रस्वश्च' (Saras-edn.)

तेनाजितेनेत्थं विचिन्तितमासीदित्युत्तरश्लोकेन सम्बन्धः । येनास्मिन् भुवने सुगाने श्रूयते श्रोतृस्वरूपेण तस्य फलदातृत्वात् । सुगानम् ऐश्वरं गानम् । येन यज्ञादिने हूयते यजमानत्वात् । येन समरे जीयते । भगवतः सर्वत्र जेतृत्वं सुप्रसिद्धम् । येन मकराणां संलवने लूयते । तेषामपि संहर्तृत्वात् । येन जलानां धूनने धूयते अत्र यमुनाजलधूननेऽपि कर्तृत्वात् ।

अत्र श्वादयो भावे द्रष्टव्याः । "भावकर्मणोर्व्वश्च" (८।५७) इत्यनेन भावप्रत्ययान्तत्वात् सुव्वइ, हुव्वइ, जिव्वइ, लुव्वइ, धुव्वइ । दोधकवृत्तम् ॥

सुव्वउ तेण सणो मम कोहे
हुव्वउ धी ण अ जिव्वउ भीई ।
लुव्वउ धुव्वउ माणसमच्छी
इत्थमएण विइन्तिअमासि ॥ २१ ॥

छाया—

श्रूयतां तेन स्वनो मम क्रोधे
हूयतां धीर्न च जीयतां भीतिः ।
लूयतां धूयतां मानसमाक्षि
इत्थमजेन विचिन्तितमासीत् ॥

कदम्बमारूढेनाजितेन कृष्णेनेत्थं विचिन्तितमासीत् । कथमित्याह— तेन कालियेन मम स्वनः पतनोत्थो जलस्वनः श्रूयताम् । क्रोधे हूयताम् । दीयतां धीः । अत्र हवनं दानं विवक्षितम् । भीतिश्च न च जीयताम् । भीतिरेव भवतु । भीतिवशात् तेन कालियेन मानस-

मात्मीयं मनः मनोगतं लूयताम् अस्मिन् हृदे वालधीः प्रायः अपनीयताम् । धूयताम् अक्षि- अक्षि इति जात्येकवचनम्, अक्षिणी इत्यर्थः ।

अत्र कर्मणि श्र्वादयो द्रष्टव्याः । सुव्वउ, हुव्वउ, जिव्वउ, लुव्वउ, धुव्वउ । दोधकवृत्तमिदम् ॥

गीए सुणीअइ हुणीअइ जुज्झजाए
तस्सिं जिणीअइ लुणीअइ भत्ततासे ।
रण्णे धुणीअइ अ केळिरसेण जेण
सोतोहए णिपडिओ अ महद्धिसेज्जो ॥ २२ ॥

छाया—

गीते श्रूयते हूयते युद्धयागे
तस्मिन् जीयते लूयते भक्तत्रासे ।
अरण्ये धूयते च केळिरसेन येन
स्रोतोह्रदे निपतितश्च महाब्धिशय्यः ॥

न केवलं विचिन्तितमासीत् । विचिन्तनानन्तरं यमुनातटकदम्बात् स्रोतोह्रदे स्रोतस्विनि जले ह्रदे निपतितः पतनं च कृतवान् । 'तेजसां हि न वयः समीक्ष्यते' इति च । महाब्धिशय्यः क्षीराब्धिशायी पुरुषः । येन गीते सामगानादौ श्रूयते श्रोतृत्वेन । हूयते येन युद्धयागे । हूयते शत्रुपशूनां होतृत्वेन । जीयते येन तस्मिन् युद्धयागे जेतृत्वेन । लूयते येन भक्तत्रासे भक्तानां त्रासविषये । धूयते येन चारण्ये वनप्रदेशे केळिरसेन क्रीडारसेन । धूयते इतस्ततो गम्यते ।

'वश्चे'ति चकारेणानुकृष्टयोः ईयइज्जयोः ईयप्रत्ययोऽत्र भावे

द्रष्टव्यः। सुणीअइ, हुणीअइ, जिणीअइ, लुणीअइ, धुणीअइ। वसन्ततिलकं वृत्तम् ॥

किं किं सुणिज्जइ हुणिज्जइ केण जीओ
काळे जिणिज्जइ लुणिज्जइ जो मए हु।
एसो धुणिज्जइ हओ हु तिण त्ति कण्हं
तं काळिओ उवगआमरिसो सरीअ ॥ २३ ॥

छाया—

किं किं श्रूयते हूयते केन जीवः
काले जीयते लूयते यो मया हुं[1]।
एष धूयते ह्रदो हु[2] तेनेति कृष्णं
तं काळिय उपगतामर्षः ससार ॥

काळियः इति स्मृत्वा उपगतामर्षः प्राप्तक्रोधः तं कृष्णं ससार उपसृतवान्। तस्य चिन्तनप्रकारमाह– किं किं श्रूयते। केन जीवो हूयते प्राणो भस्मीक्रियते। अस्मत्प्रतिकूलाचरणादिति शेषः। यो मया जीयते, अधुनैवेत्यर्थः। यो मया काले दर्शनसमय एव लूयते छिद्यते। तेन हु तेनैव एष ह्रदो धूयते, स मयैवं क्रियत इति।

अत्र च चकारात् कर्मण्यर्थे इज्जादेश उदाहृत इति द्रष्टव्यम्। सुणिज्जइ, हुणिज्जइ, जिणिज्जइ, लुणिज्जइ, धुणिज्जइ। वसन्ततिलकावृत्तम् ॥

काळियं प्रति कृष्ण आह—

---

१. 'हुं' ङ. २. 'हु वितर्के निश्चये वा तेनेति' ङ.

गम्मइ दे ण गमिज्जइ कत्तो
रम्मइ दे ण रमीअइ मे हु ।
फुट्टइ[1] दे ण फुडीअइ[2] मे भी
हम्मइ[3] दे ण हमिज्जइ[4] मे रे ! ॥ २४ ॥

छाया—

गम्यते त्वया न गम्यते कस्माद्
रम्यते त्वया न रम्यते मया हु ।
स्फुट्यते त्वया न स्फुट्यते मया भी-
र्हन्यते[5] त्वया न हन्यते[6] मया रे ! ॥

रे इति सम्भाषणे, रे काळिय । त्वया गम्यते । अस्माद्ध्रदादिति शेषः । कस्मान्न गम्यते त्वया उपद्रवशीलेन त्वया कस्मात् कारणाद् बलाद् ह्रदान्न गम्यते । 'भूतलोको लभेत शम्' इति न्यायात् । न रम्यते त्वया इतः परं त्वयात्र ह्रदे पुत्रमित्रकळत्रादिभिः सह न रम्यते । मया तु रम्यते त्वद्विषाद् रक्षितैरस्मदीयैः सहात्र विहारः क्रियते । हु निश्चये । स्फुट्यये विशीर्यते त्वया । मया तु न स्फुट्यते । तव विषाग्निनेति शेषः । मया भीः त्वन्निमित्ता जङ्गमस्थावराणां भीतिः हन्यते हिंस्यते । न त्वया भीर्हन्यते मन्निमित्तेति शेषः । भूतद्रोहित्वात् । दोधकवृत्तम् ।

"गमादीनां द्वित्वं वा" (८।५८) इत्यनेन गमादीनाम।कृतिगणानां धातूनां भावकर्मणोर्वा द्वित्वं विधीयते । द्वित्वाभावे ईय इज्ज

---

१. 'पुट्ट' ङ.    २. 'पुडी' ङ.
३. 'गम्म' ङ.    ४. 'गमि' ङ.
५. 'गंम्यते' ङ.    ६. 'गम्यते' ङ.

इत्येतौ। द्वित्वपक्षे तु 'नान्त्यद्वित्वे' इति तयोः प्रतिषेधः। गम्मइ, गमिज्जइ। रम्मइ, रमीअइ। फुट्टइ, फुडीअइ। हम्मइ, हणिज्जइ॥

दुब्भउ लिब्भउ वब्भउ ते मे
पाअजुएण फणे विसछीरं[1]।
दुब्भइ लिब्भइ वब्भइ जीओ
सव्वजणस्स जिणा अणकाहे[2]!॥ २५॥

छाया—

दुह्यतां लिह्यतामुह्यतां ते मे
पादयुगेन फणे विषक्षीरम्।
दुह्यते लिह्यते उह्यते जीवः
सर्वजनस्य येनाणकाहे!॥

हे अणकाहे! हे कुत्सिताहे!। "पापाणके कुत्सितैः" (पा० सू० २-१-५४) इति समासः। येन त्वया सर्वजनस्य जीवः प्राणो दुह्यते। शरीरादिति शेषः। लिह्यते च नाश्यते च। उह्यते च प्राप्यते च। यमसदनमिति शेषः। येन त्वया सर्वजनस्य जीवः विशेषेण देहान्निर्गमय्य अदर्शनं नीत्वा यमसदनं प्राप्यत इत्यर्थः। तस्य ते फणे फणायां वर्तमानं विषक्षीरं मे पादयुगेन दुह्यताम्। मम पादयुगं तव विषक्षीरस्य दोग्धृ भूयात्। लिह्यतां च लेहनकर्तृ च भूयात् तस्य विषक्षीरस्य। उह्यतां च वहनक्रिया च भवतु। अन्यैर्जन्तुभिर्विषस्य दुर्वहत्वादेयमुक्तिः। अत्र क्षीरशब्देन विषस्य निर्विषत्वं ध्वन्यते।

---

१. 'रे' ङ. २. 'रे' ङ.

*"दुहलिहवहां दुब्भलिब्भवब्भाः" (८।५९) इत्यनेन दुहादीनां धातूनां भावे कर्मणि च दुब्भादय आदेशा भवन्ति । भावे- दुब्भउ, लिब्भउ, वब्भउ । कर्मणि- दुब्भइ, लिब्भइ, वब्भइ । दोधकवृत्तम् ॥

हीरइ मे हरणिज्जदसाए
कीरइ मे करणिज्जदसाए ।
हीरसि तेण तुवं वि अ एण्हिं
कीरमि हं च सुही भुवणं च ॥ २६ ॥

छाया—

ह्रियते मया हरणीयदशायां
क्रियते मया करणीयदशायाम् ।
ह्रियसे तेन त्वमपि चेदानीं
क्रियेऽहं च सुखी भुवनं च ॥

मया हरणीयदशायां संहारावस्थायां ह्रियते हर्त्रा भूयते । करणीयदशायां सृष्टिकाले क्रियते कर्त्रा भूयते । भुवनं प्रतीत्यर्थः । तेन मयेदानीं दुष्टानां दमनकाले त्वमपि च ह्रियसे हृदादपनीयसे । अहं च सुखी लोकरक्षणेन कृतकृत्य इत्यर्थः । क्रिये स्वनैवेति शेषः । भुवनं च सुखीक्रियत इति शेषः ।

¶"हृञ्कृञोर्हीरकीरौ" (८।६०) इत्यनेन हृञ्कृञोर्धात्वोः भावकर्मविषये हीर कीर इत्येतावादेशौ भवतः । भावे- हीरइ, कीरइ । कर्मणि- हीरसि, कीरमि । दोधकवृत्तम् ॥

---

* 'लिहेर्लिज्झ' (Chow-edn.), 'दुहिलिहिवहां दुज्झलिज्झबुज्झाः' (Saras-edn.)   ¶ 'हृकोर्हीरकीरौ' (Chow-edn.)

णज्जेए विसए मएण ण तए णप्पेइ जाणीअए
  मीणेहिं विसए मुणिज्जइ तए णो किं पि दुट्ठाहिणा ।
णज्जेए हु इमो जणो तिहुवणे णो ऊ तुमे णप्पए
  जाणीअन्ति कहं सुहा कुमइणा किं णो मुणिज्जामु दे ॥

छाया—
ज्ञायते विषये मृगेण न त्वया ज्ञायते ज्ञायते
  मीनैर्विषये ज्ञायते त्वया नो किमपि दुष्टाहिना ।
ज्ञायते हु अयं जनस्त्रिभुवने नो ऊं त्वया ज्ञायते
  ज्ञायन्ते कथं शुभाः कुमतिना किं नो ज्ञायामहे त्वया ॥

मृगेणापि विषये स्वगोचरे ज्ञायते । न त्वया ज्ञायते– ज्ञाने त्वं मृगैरपि न तुल्यो भवसि । मीनैः जलचरैरपि विषये ज्ञायते । त्रिभुवने त्रैलोक्ये अयं जनः अहमित्यर्थः । 'सेदंशब्द जनपदमस्मदर्थे प्रयुज्यते' इत्युक्तेः । त्रिभुवने ज्ञायते लोकैरिति शेषः । दुष्टाहिना त्वया किमपि न ज्ञायते । हु निश्चये । त्वया त्वयैव न ज्ञायते । ऊ आश्चर्यम् । एवम्भूतेन त्वया कुमतिना त्वया शुभाः साधुवृत्ताः कथं ज्ञायन्ते । तस्मान्निरूप्यमाणेऽत्र नाश्चर्यम् । किं नो ज्ञायामहे कुमतिं त्वां विनान्यैः सर्वैरपि जनैर्वयं किं नो ज्ञायामहे । त्वमेव मामज्ञात्वा दर्पमुद्वहसीति भावः ।

*"ज्ञो णज्जणप्पौ" इत्यनेन भावकर्मणोर्जानातेर्धातोः णज्ज णप्प इत्येतावादेशौ विधीयेते । सिंहावलोकितन्यायेन वाशब्दानुवृत्त्या

---

* सूत्रमिदं मुद्रिते नास्ति ।

---

१. 'ऊ विसये त्वया' ङ.

जाणमुणावपि भवतः । भावे-णज्जेए, णप्पेइ । जाणीअए, मुणिज्जइ । कर्मणि णज्जेए । इमो जणो णप्पए । जाणीअन्ति कहं सुहा । मुणिज्जासु । शार्दूलविक्रीडितं वृत्तम् ॥

घेप्पेइ गण्हिज्जइ णो ण सत्तुणा
उत्ते वि कज्जे सहिए बुहेहि हु[1] ।
घेप्पेउ गण्हिज्जउ णो ण मे पए
तुवं पडेसु त्ति हिअं[2] वओ तए ॥ २८ ॥

छाया—

गृह्यते गृह्यते नो न शत्रुणा
उक्तेऽपि कार्ये स्वहिते बुधैर्हु ।
गृह्यतां गृह्यतां नो न मे पदे
त्वं पतेति हितं वचस्त्वया ॥

स्वहिते कार्ये शत्रुणोक्तेऽपि बुधैर्गृह्यते नो न गृह्यते गृह्यत एवेत्यर्थः । लोके खल्वेवं न्यायः । हु निश्चये । तस्मात् त्वया मे पादयोस्त्वं पतेति हितं वचो गृह्यतां नो न गृह्यताम् । अत्रापि पूर्ववदर्थः । अग्रहणे प्रत्यक्षदोषापत्तेः ।

§"ग्रहेर्वा घेप्पः" (८।६१) इत्यनेन गृह्णातेर्धातोः भावकर्मणोर्विकल्पेन घप्पादेशो विधीयते । भावे- घेप्पेइ, गण्हिज्जइ । कर्मणि- घेप्पेउ, गण्हिज्जउ । उपजातिवृत्तम् ॥

---

§ 'ग्रहेर्दीर्घो वा' (Chow-edn.) 'ग्रहेर्घेप्पः' (Saras-edn.)

---

१. 'उ' ङ.		२. 'हिओ' ङ.

इअ दिण्णवओ पकोहरग्गो
हरिणा ढंक्कणिआहरो महाही ।
णिअसिद्धविसेण रुण्णदड्ढं
तणिउं रंपिअकेढवं पउत्तो । २९ ॥

छाया—
इति दत्तवचाः प्रक्रोधरक्तो
हरिणा दष्टनिजाधरो महाहिः ।
निजकथितविषेण रुदितदग्धं
तनितुं तष्टकैटभं प्रवृत्तः ॥

अनेन प्रकारेण हरिणा कृष्णेन क्रोधोद्दीपनार्थं दत्तवचा महाहिः कालियः प्रकोधरक्तः अत एव क्रोधावेशवशाद् दष्टनिजाधरः स निजेन कथितेन अत्युष्णेन विषेण तष्टकैटभं निगृहीतकैटभासुरं भगवन्तम् अत एव अशक्यधर्षणमपि रुदितदग्धं तनितुं रुदितदग्धं च कर्तुं प्रवृत्तः ।

"क्तेन दिण्णादयः" (८।६२) इत्यनेन क्तप्रत्ययुक्तानां ददात्यादीनामाकृतिगणानां दिण्णादय आदेशा विधीयन्ते । ददातेर्दिण्णं, रजे रग्गः, दंशेर्ढक्कः, कथेस्सिद्धः, रुदे रुण्ण, दहेर्दड्ढं । *"तक्षे रंपः" इत्यनेन तक्षेर्धातोः रंप इत्ययमादेशो विधीयते । रंपिअ । औपच्छन्दसिकं वृत्तम् ॥

* सूत्रमिदं नास्ति (Chow-edn.), 'तक्षे रंपवच्छौ' (Saras-edn.)

१. 'डक्क' ङ. २. 'विएण' ङ.

कण्हो [1]सो अखिज्जमाणणअणो अज्जो अ जूरेइउं
वब्भन्तं परिखुज्जमाणरसणं सक्की लुहन्तं अहिं ।
सेए उप्फुसिरं फणासु चळणे काऊण णट्टं गओ
[2]उव्वुड्ढइरखुप्पिरं पअणिहिं काहीअ [3]जाअं तह ॥ ३० ॥

छाया —

कृष्णः [4]सोऽखिद्यमाननयन आर्यश्च क्रोद्धुं
चर्वन्तं परित्रसद्रसनं सृक्की मार्जयन्तमहिम् ।
स्वेदानुन्मार्ष्टारं फणासु चरणौ कृत्वा नृत्तं गतः
उन्मङ्क्तृनिमङ्क्तारं पयोनिधिमकार्षीद् यातं तथा ॥

ततः काळियस्य प्रवृत्तिदर्शनानन्तरं कृष्णः फणासु काळियस्य फणासु चरणौ कृत्वा दुह्यतामित्यादिना प्रतिज्ञातं नृत्तं गतः सन् अहिं पयोनिधिं समुद्रं रमणकाख्यं द्वीपं यातं प्राप्तम् अकार्षीत् । भगव त्पादप्रहारमसहमाने मोहं गतवति काळिये तत्पत्नीभिः प्रथमं पश्चा ल्लब्धसंज्ञेन तेन च स्तुतः प्रसन्नो भगवान् काळियं समुद्रद्वीपं सज्ञात्य- पत्यकळत्रं यापयामास । अखिद्यमाननयनः काळियमहाहिविषसम्प- र्केऽपि नयनविकारशून्यः । आर्यश्च भक्तानुग्रहशीलश्च । पूर्वश्लोकोक्तां

१. 'तो' ङ.
२. 'उव्वुड्ढेइक्खु' ङ.
३. 'जाइं' ङ.
४. 'ततः खिन्नयनो ज्ञश्च क्रो' ङ.

तस्य प्रवृत्तिमुपपादयन् कालियं विशिनष्टि– क्रोद्धुं चर्वन्तं दन्तैर्दन्तान् पीडयन्तमित्यर्थः। परिञ्चसद्रसनं, क्रोधप्रधानानां सर्पाणाम् अयं स्वभावः। ञसनमत्र चलनम्। सृक्की आस्यपार्श्वप्रदेशौ। मार्जयन् जिह्वयेत्यर्थात्। स्वेदान् स्वेदजलानि उन्मार्ष्टीरम्। अत्रापि जिह्वयेति सिद्ध्यति। तथा उन्मङ्क्तृनिमङ्क्तारं भगवन्नृत्तसमये उन्मज्जन-निमज्जनशीलम्। तत्र ह्रदे यस्यां फणायां नृत्यति तस्या निमज्जनम्। यां विसृजति तस्या उन्मज्जनमित्यवसेयम्।

"खिदेर्विसूरः" (८।६३) इत्यनेन खिदेर्धातोर्विसूरादेशो विधीयते। अविसूरमाण। "क्रुधेर्जूरः" (८।६४) इत्यनेन क्रुधेर्जूरादेशो विधीयते। जूरेइडं। *"चर्वेर्वम्भः" (८।६५) इत्यनेन चर्वेर्धातोर्वम्भादेशो विधीयते। वम्भन्तं। †"ञसेर्वुज्जः" (८।६६) इत्यनेन ञसेर्धातोर्वुज्जादेशो विधीयते। परिवुज्जमाण। $"मृजेर्लुभफुसौ" (८।६७) इत्यनेन मृजेर्धातोः लुभ फुस इत्येतावादेशौ विधीयेते। लुहन्तं, उप्फुसिरं। "वुड्डखुप्पौ मज्जेः" (८।६८) इत्यनेन मज्जेर्धातोः वुड्ड खुप्प इत्येतावादेशौ विधीयेते। उव्वुड्डेइरखुप्पिरं। शार्दूलविक्रीडितं वृत्तम्॥

दुर्निमित्तभयाद् विषादात् तीरं प्राप्तानां नन्दादीनां ह्रदादुत्तीर्णं स्वस्थं भगवन्तं दृष्टवतां सादरां प्रवृत्तिमाह—

---

* 'चर्वेर्श्चंदः' (Chow-edn.) 'चर्वेश्चरः' (Saras-edn.)

† 'ञसेर्वज्जः' मुद्रितपाठः।

$ 'मृजेर्लुभसुपौ' (Chow-edn.), 'मृजेर्लुभपुंसौ' (Saras-edn.)

तत्तो तं पउळीअ सस्स णिइरो णंदो णिअच्छीअ ही
माआ पंच्छिअपुव्वअं वि[1] मुसळी पेच्छीअ इत्थंवओ[2] ।
को अण्णो तरए तुवं हु चअसे काउं इणं तीरसे
सव्वं को ळसए तुमं व अवए रक्खन्ति देवा तए ॥२१॥

छाया—

ततस्तं प्रादर्शच्छश्वद् द्रष्टा नन्दोऽद्राक्षीर्द्धा
माता दृष्टपूर्वमपि मुसली ददर्श इत्थंवचाः ।
कोऽन्यः शक्नोति त्वं हु[3] शक्नोषि कर्तुमिदं शक्नोषि
सर्वं को लसति त्वमिवावति रक्षन्ति देवास्त्वया ॥

ततोऽनन्तरं तं तीरं प्राप्तं कृष्णं शश्वत् सदा द्रष्टा दर्शनशीलोऽपि नन्दः प्रादर्शत् प्रकर्षेण दृष्टवान् । माता यशोदापि दृष्टपूर्वमपि तमदृष्टपूर्वमिव अद्राक्षीत् । कालियविषाद् विमुक्तं तमतिप्रीत्या दृष्टवतीत्यर्थः । हीत्याश्चर्ये । जगदीश्वरेऽपि कृष्णे तयोः पुत्रबुद्ध्या दयादर्शित्वं जातम् । तदत्याश्चर्यमित्यर्थः । मुसली तत्प्रभावज्ञो बलभद्रोऽपि इत्थंवचा इत्थमिति वक्ष्यमाणं वचो यस्य सः । ददर्श दृष्टवान् । तद्वचनप्रकारमाह– कोऽन्यः शक्नोति शक्तो भवति । त्वत्त इति शेषः । न कोऽपीत्यर्थः । त्वं शक्नोषि शक्तो भवसि । हु निश्चये । त्वमिदं जगत् सर्वं कर्तुं स्रष्टुं शक्नोषि । किमुत कालियमर्दनाद्यपदानं कर्तुमिति भावः । त्वमिव कोऽन्यो लसति अवति च । देवाः प्रपञ्चस्य

1. 'पच्चि' ङ.  2. 'पि' ङ.
3. 'हु निश्चये शक्नो' ङ.

रक्षितारोऽपि त्वया त्वत्सामर्थ्येन रक्षन्ति । इति ।

*"दृशेः पुळणिअणिअच्छपच्छपेच्छाः" (८।६९) इत्यनेन दृशेर्धातोः पुळ णिअ णिअच्छ पच्छ पेच्छ इत्येते आदेशा विधीयन्ते । पउळीअ, णिइरो, णिअच्छीअ, पच्छिअ, पेच्छीअ । "शकेस्तर$चअतीराः" (८।७०) इत्यनेन शकेर्धातोः तर चअ तीर इत्येते आदेशा विधीयन्ते । तरए, चअसे, तीरसे । "शेषाणामदन्तता" (८।७१) इत्यनेन लुप्तानुबन्धानां केषाञ्चिद्धातूनामनकारान्तत्वेऽपि अदन्तता विधीयते । लसए, अवए, रक्खन्ति । शार्दूलविक्रीडितं वृत्तम् ॥

कालियमर्दनानन्तरं धेनुकवधमाह—

धोवन्तो तो सिरीसो धुविरबळजुओ धावमाणासुरड्ढं
रण्णं ताळाण णिद्धं असुविअसुफळं वाणवाअव्वगन्धं
ओवाहेऊण खाउं फळमणुगमिओ दाणवोवाहणीअं
गोजुत्तो धेणुए सो बळबळदळिए तम्मि दीहं चरीअ[1] ॥

* 'दृशेः पुळअणिअक्कअवक्कळाः' (Chow-edn.) 'दृशेः पुळअणिअच्छअवक्कळसच्चवाः' (Saras-edn.)

$ 'वअतीराः' मुद्रितपाठः

¶ इतः परं ङपाठे 'इअ गोइंदाहिसेए पाअडकव्वे सिरिन्धे धाउकज्जविळसिअं णाम सत्तमो सग्गो' ॥ इति दृश्यते ।

१. 'बळं' ङ.

छाया—

धावंस्ततः श्रीशो धावितृबलयुतो[1] धावमानासुराढ्य-
मरण्यं तालानां [2]नित्यमसुप्तसुफलं घ्राणघ्रातव्यगन्धम् ।
अवगाह्य खादितुं फलमनुगतो दानवावगाहनीयं
गोयुक्तो धेनुके स बलबलदळिते तस्मिन् दीर्घमचारीत्[3] ॥

ततोऽनन्तरं श्रीशः तालानामरण्यं तालवनमनुगतः प्राप्तः । धावन् बालत्वाच्छीघ्रगमनयुक्तः । तथैव धावितृबलयुतः धावनशीलेन बलभद्रेण युक्तः । अरण्यं विशिनष्टि— धावमानासुराढ्यं धावमानेनासुराढ्येन खररूपेण बलवता धेनुकाख्येन युक्तम् । तथैवास्य असुप्तसुफलं प्रकटफलम् । तथा घ्राणघ्रातव्यगन्धम्— अनेन गन्धलोभितचेतसां श्रीदामादीनां गोपालानां प्रार्थनया तदभिलाषपूरणोपदेशेन तत्रागमनमिति ध्वन्यते । किमर्थं वनमनुगत इत्याह— अवगाह्य फलं खादितुम् । इदमपि तन्मतानुसारेणोक्तम् । दानवावगाहनीयम्— मनुष्यैर्धेनुकभयादप्रविष्टमित्यर्थः । धेनुके फलपतनशब्दमसहमाने आगते बलबलदळिते बलस्य बलभद्रस्य बलेन अपरपादेन गृहीत्वा भ्रामणरूपेण दळिते विनाशिते सति स कृष्णः गोयुक्तस्तत्र वने दीर्घं चिरकालम् अचारीद् विचचार । विजहारेत्यभिप्रायः ।

*"अडादेशा बहुळम्" इत्यनेन अट्प्रत्याहाररूपाः पूर्वोक्ता

---

* सूत्रमिदं नास्ति । (Chow-edn.)

---

१. 'युक्तो' ङ.   २. 'नित्यं नित्यसुफकं' ङ.
३. 'चालीत्' ङ.

आदेशा विधीयन्ते। धोवन्तो, धुविर, धावमाण। अत्र धावतेर्धातोरा-कारस्य ओकारः, उकारः, आकारश्च प्रयुक्तः। क्वचिद् विहितादन्यत्रापि भवन्त्यादेशाः। वाअव्व, खाउं, ओवाहणीअं। अत्र पूर्वोक्तस्य गाहतेर्वाहादेशः। स्रग्धरा वृत्तम्॥

द्विषष्टिपद्यै रचितेऽत्र काव्ये
श्रीचिह्नके सप्तमको निरुक्तः।
चन्द्रादिकात्यायनसूत्रलक्ष्यः
सर्गः परिच्छेदकसप्तमोऽयम्॥

इति श्रीगोविन्दाभिषेके धातुकार्यविलसितं नाम
सप्तमः सर्गः समाप्तो विवृतश्च॥

# अष्टमः सर्गः ।

धेनुकवधानन्तरं कृष्णस्य विचेष्टितमाह—

वअं गओ तो अहिवो वअन्तो
हुं देमि ताळाण फळंति कण्णआ ।
हुं संगळं वोत्ति अ हुं ममस्सि
मा मा इमा वो उवआरण त्ति अ ॥ १ ॥

छाया—
व्रजं गतस्ततोऽधिपो वदन्
हुं ददामि तालानां फलमिति कन्यकाः ।
हुं मङ्गळं व इति च हुं मयि
मा मा इयं व उपचारणेति च ॥

ततः धेनुकवधतालवनविहारयोरनन्तरम् । अधिपः पालयिता कृष्णः अर्थाद् गृहीततालफलो व्रजघोषं गत इति सम्बन्धः । किं कुर्वन्- वः तालानां फलं हुं ददामीति वदन् । तस्य स्पष्टीकरणार्थका गोपकन्यकाः स्वस्य घोषप्रवेशस्य समये कृष्णस्य हस्ते तालफलानि दृष्ट्वा तदपेक्षया समीपमागता इत्यर्थः । वः युष्माकं मङ्गळं हुं । अत्र हुमिति प्रश्ने एव । क्रीडानुबन्धवचनं वदतः कपटमानुषवेषस्य कृष्णस्य तदा दानप्रत्युपकारार्थं सत्कारं कर्तुं प्रवृत्तास्ताः । कन्यकाः वः युष्माकं मयि आरब्धा इयमुपचारणा हुं मा मा इति च वदन् । अत्र हुमिति निवारणे । भवतीनां क्लेशावहा इयमुपचारणा मास्त्वित्यर्थः ।

"हुं दानपृच्छानिवारणेषु" (९।२) इत्यनेन यथाक्रमं त्रिष्वप्यर्थेषु अत्र हुंशब्दः प्रयुक्तः। व्रजशब्दस्य रलोपे जकारस्य प्रायोलोपे वअं इति भवति। गतशब्दस्य तलोपे गओ। "तद ओऽचा" इत्यचा सह ओकारे ङसि तो इति। अधिपशब्दस्य धस्य हत्वे पस्य वत्वे सौ अहिवो इति। वदेर्धातोः शतरि न्तादेशे, दस्य प्रायोलोपे वअन्तो इति। हुं इति निपातः। ददातेर्मिपो मिभावे "लादेशे वा" इत्येत्वे देमि इति। आमि णादेशे लस्य ळत्वे ताळाण इति। लस्य ळत्वे फळं। तस्य सन्धाविकारलोपे फळंति इति। कन्यकाशब्दस्य यलोपे नस्य णत्वे छित्वे कस्य प्रायोलोपे कण्णआ इति। हुमिति पूर्ववत्। लस्य ळत्वे मङ्गळमिति। *"वो तुज्झाणतुम्हाणमामि", इति वो इत्यस्य इतिशब्देन योगे सन्धौ वोत्ति इति भवति। हुमिति पूर्ववत्। "ममस्सि ममम्मि ङौ" इति ममस्सि इति। मा मा इति प्राकृते संस्कृते च समानं रूपम्। वो इति पूर्ववत्। उपचारणाशब्दस्य पस्य वत्वे चस्य प्रायोलोपे उवआरणा। इति शब्दे सन्धौ पूर्ववत्॥

संपत्तमत्तो च्चिअ तो णिईअ तं
सो क्वेअ इंदस्स छणं जएसरो।
ओ एस वुत्तो इह ओ ण ओ ठिओ
वारेमि ओ ओ ण इमंति चिंतिओ॥ २॥

छाया—

सम्प्राप्तमात्रश्चिअ ततो ददर्श तं
स क्वेअ इन्द्रस्य क्षणं जगदीश्वरः।

---

* 'वो से तुज्झाणं तुम्हाणामामि' (६।३७) (Chow-edn.), 'वो ते तुज्झाणं तुम्हाणमामि' (५।८४) (Saras-edn.)

ओ एष वृत्त इह ओ नाहं स्थितो
वारयाम्यो ओ नेममिति चिन्तितः ॥

मात्रत्वा व्रजं प्राप्तस्य व्यापारान्तरव्यावृत्तिः । चिएत्यनेन अवधारणार्थेन कालान्तरसम्बन्धस्य व्यावृत्तिः । च्चेअ इत्यनेनाप्यवधारणार्थेन ददर्शेत्यस्योपरि योजितेन श्रवणव्यावृत्तिः । ततः स जगदीश्वरः श्रीकृष्णः सम्प्राप्तमात्र एव तं नन्दादिभिः कर्तुमारब्धमिन्द्रस्य क्षणम् उत्सव ददर्श एव । न तु श्रवणानन्तरं दर्शनमित्यर्थः । 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः' इति सिंहः । पुनः किं कृतवानित्याह- ओ एष वृत्तः । ओ इति सूचनार्थे । एष उत्सवो वृत्तः आरब्धः । ओ अहो कष्टम् । अत्र पश्चात्तापे ओशब्दः । इह व्रजे पूर्वमहं न स्थितः । तेन खल्वयमारब्धः । इतः परम् अहमिममुत्सवं वारयामि । ओ उत । अत्र ह्योशब्दद्वयं विकल्पार्थम् । इति चिन्तितः, कर्तरि निष्ठा, इति चिन्तयामासेत्यर्थः ।

अत्र *"चिअ च्चेअ अवधारणे" (९।३) इत्यनेन चिअच्चेअशब्दौ अवधारणार्थे प्रयुक्तौ । "ओ सूचनापश्चात्तापविकल्पेषु" (९।४) इत्यनेन हि ओशब्दः क्रमेण सूचनायां पश्चात्तापे विकल्पे च प्रयुक्तः । (सं)प्राप्तमात्र इति स्थिते रलोपे ह्रस्वे रलोपे द्वित्वे सम्पत्तमत्त इति भवति । चिएत्यवधारणे । तदो दस्य ओत्वे तो इति भवति । दृशेर्णीआदेशे भूत ईआदेशे णिईअ इति भवति । तमित्यस्य समानं रूपम् । तच्छब्दस्य, "तदेतयोः स सावनपुंसके" इति सत्वेऽत ओत्वे च सति सो इति ।

---

* 'चिअ चेअ अवधारणे' (Chow- edn.), 'चिअ च्चेअ अवधारणे' (Saras- edn.)

खेएति निपातः । रलोपे छसि इन्दस्स इति भवति । "क्ष्मावृक्षक्षणेषु वा" इति वा छत्वे छणमिति भवति । जगदीश्वरशब्दस्य गस्य प्रायोलोपे दलोपे शस्य सत्वे सावोत्वे जएसरो इति भवति । ओ इति निपातः पूर्ववत् । सत्वे एस इति भवति । ऋत उत्वे सौ वुत्तो इति भवति । इहत्यस्य समानं रूपम् । ओ इति निपातः । नस्य णत्वे ण इति । हमिति "अस्मदो हं अहं अहअं सौ" इत्यनेन । तिष्ठतेष्ठादेशे निष्ठायाम् इत्वे सौ ठिओ इति भवति । वारयतेर्धातोः मिपि म्यादेशे एत्वे च वारेमि इति । पूर्ववदोद्वयमपि । इदम इमादेशे इममिति भवति । तस्य इतिशब्देन योगे सन्धाविमंत्ति इति भवति । चिन्तितकारस्य प्रायोलोपे चिन्तिअमिति भवति । इन्द्रवंशावृत्तम् ॥

चिन्तानन्तरं मदभञ्जनेनेन्द्रस्यानुग्रहं कर्तुं तदुत्सवनिवारणं निश्चितवतः कृष्णस्य तत्प्रकारमाह—

सो देवो इर ईसए किर ठिओ सग्गे किळत्ति व्व णो
  णाओ णो हु णिअच्छिरो ण खु जणो अण्णो वि पच्छीअ तं ।
किं एदं हु मए खु वो विमुहदा ता होउ सक्कूसवं
  संमोत्तूण वसद्दिबम्हणमहो भद्दं हु पावं ण खु ॥ २ ॥

छाया—

स देव इर ईष्टे किर स्थितः स्वर्गे किलेतीव नो
  ज्ञातो नो हु द्रष्टा न खु जनोऽन्योऽप्यपश्यत् तम् ।
किमेतद्धु मयि खु वो विमुखता तावद् भवतु शक्रोत्सवं
  सम्मुच्य वृषाद्रिब्राह्मणमहो भद्रं हु पापं न खु ॥

---

१. 'तप' क.

भवता पूज्यत्वेनाभिमतो य इन्द्रः स देवविग्रहवान् हविर्भोक्ता इर अस्तीति कथं निश्चीयते । ईष्टे किर प्रसादयुक्त ईश्वरो भवति किर इत्यपि कथं निश्चीयते । स्वर्गे स्थितः स्वर्गकांक्षिणां यजतां फलदाता किल इत्यपि कथं निश्चीयते । एतत्पूर्वकं मीमांसकमतमनुसृत्य तत्पक्षे विग्रहादिपञ्चकनिरासः । ननु च अनिश्चयो देवेन्द्रस्यायुक्तः । त्रैवर्णिकैरकृत्रिमया मन्त्रार्थवादात्मिकया गिरा ज्ञातत्वात् । सत्यम्, उत्तरमीमांसकानां मतेनैवं भवतु । तथाप्युभयेषां विप्रतिपत्तिदर्शनाद-निश्चय एव पर्यवसानम् । तदेतदाह– नो ज्ञात इति सिद्धयति । विप्रतिपत्तिस्तु मन्त्रादीनां विधिपरत्वेन विशिष्टविग्रहादिभाजामिन्द्रा-दीनां सद्भावे तात्पर्याभावात् । चतुर्थ्यन्तपदमात्रमेवेन्द्रादयः । कर्मणा-मेव फलदातृत्वमिति केचित् प्रतिपन्नाः । केचित् तु मन्त्रादीनामन्य-परत्वेऽपि तद्गतपदवाक्यार्थानां प्रमाणान्तराविरोधात् तदर्थभूतेन्द्रादि-सद्भावमङ्गीकुर्वतीत्यतः परीक्षकाणां विप्रतिपत्तिदर्शनान्न ज्ञातस्तादृश इन्द्र इत्युक्तं भवति । अपि च तथाविध इन्द्रोऽस्ति चेत् तर्हि यज्ञ-शालायां ऋत्विगादिवद् दृश्येत । अत्र केनाचिदपि न दृश्यते च । तस्मात् प्रायशो नास्त्येवेत्याह– नो इति । नो द्रष्टा तमिति सम्बन्धः । हु निश्चये । पूर्वमपि केनचिन्न दृष्टः स इत्याह– नेति । खु निश्चये । अन्योऽपि जन इदानीन्तनाज्जनादन्योऽपि नापश्यत् तमिन्द्रम् । अन्यजननयनेनापि इन्द्रो न दृष्टः । नयनत्वात् । यथा अस्मन्नयने-नेति भावः । एवमिन्द्रस्यापूज्यत्वे सिद्धे, एतद् आरब्धं कर्म किं हु किं वा । हु वितर्के । एवं वेदितरि मयि युष्माकं विमुखता वैमुख्यं खु किं वा । खुरपि वितर्के । इति सवितर्कमुक्त्वा भगवानेवं साक्षा-दप्युवाचेत्याह– तावत् प्रथमं शक्रस्योत्सवं सन्त्यज्य तदर्थमानीतै-र्द्रव्यैः वृषपदोपलक्षितानां गवामग्रे गोवर्धनस्य ब्राह्मणानां च मह उत्सवो भवतु इति ।

यवसाद्यैर्गवां पूजा मृष्टान्नेन द्विजन्मनाम् ।
बलिनां क्रियतां पूजा त्वस्मदाश्रयभूभृतः ॥

इति भगवता विभागश्च कृत इति द्रष्टव्यम् । गवादिपूजने फलाभावं निवारयन्नाह– भद्रमिति । हुशब्दः सम्भावनायाम् । पापं न । अत्र खुशब्दः संभावनायाम् । सम्पत्प्राप्तिर्विपच्छान्तिश्चाभीष्टे फले सम्भाव्येते इत्यर्थः ।

*"इर किर किल अनिश्चिताख्याने" (९।५) इत्यनेन इर किर किल इत्येतन्निपातत्रयम् अनिश्चिताख्याने दर्शितम् । देवो इर, ईशे किर, स्वर्गे स्थितः किल । "हु †खु निश्चयवितर्कसम्भावनासु" (९।६) इत्यनेन त्रिष्वर्थेषु निपातद्वयं निदर्शितम् । निश्चये– णो हु णिअच्चिरो, ण खु पच्छीअ । वितर्के– किं एदं हु, मए खु वो निसुहदा । सम्भावनायां– भद्दं हु, पावं ण खु । सो इति पूर्ववत् । सावत ओत्वे देवो इति । इरेति निपातः । ईशधातोः 'ततिपोरिदेता'वित्येत्वे शस्य सत्वे ईसए इति । किरेति निपातः । तिष्ठतेष्ठादेशे निष्ठायामित्वे सावोत्वे तकारस्य प्रायोलोपे ठिओ इति भवति । स्वर्गशब्दस्य वलोपे रलोपे गस्य द्वित्वे ङेरेत्वे सग्गे इति भवति । किलेति निपातस्य ळत्वम् । तस्य इतिशब्देन सन्धौ किळत्ति इति भवति । नो इत्यस्य णत्वे णो इति । ज्ञातशब्दस्य 'ञ्ज्ञपञ्चाशत्पञ्चदशेषु णः' इत्यनेन णादेशे तकारस्य प्रायोलोपे सौ णाओ इति । हु निपातः । दृशेर्णिअच्चादेशे वुन इरादेशे णिअच्चिरो इति भवति । नस्य णत्वम् । जनशब्दस्य नस्य णत्वे सौ जणो इति भवति । अन्यशब्दस्य यलोपे नस्य णत्वे द्वित्वे

---

* 'इरकिरकिला अनिश्चिताख्यानेषु' मुद्रितपाठः ।

† 'क्खु' मुद्रितपाठः ।

अण्णो इति । अपेः पस्य वत्वे सन्धावकारलोपे अण्णोवीति भवति । दृशेः पच्छादेशे भूत ईआदेशे पच्छीअ इति भवति । इमित्येतत् समान-रूपं, किमिति च । एतदोऽन्त्यहलो लोपे तकारस्य दत्वे एदमिति । हु । 'डौ च मइ मए' इति मए । खु । 'वो हौ तुज्झाणतुम्हाणमामि' इति वो इति । विमुखतेति स्थिते खस्य हत्वे 'तल्त्वयोर्दात्तणौ' इति तलो दाभावे विमुहदा इति । तावच्छब्दस्य अन्त्यहल्लोपे यावदादि-त्वाद्वलोपे ता इति भवति । भुवो होभावे विध्युत्वे होउ इति भवति । शक्रोत्सवमिति स्थिते शस्य सत्वे क्र इत्यस्य रलोपे कस्य द्वित्वे 'उप-रिलोपः कगडतदपषसाम्' इत्यनेन तलोपे दीर्घे सन्धौ सक्कूसवमिति भवति । सम्पूर्वस्य मुचेस्तूणादेशे तुण्डरूपत्वादुत ओत्वे सम्मोत्तूण इति भवति । वृषादिब्राह्मणमहशब्दस्य 'ऋतोऽदि'त्यृत अत्वे षस्य सत्वे रलोपे दस्य द्वित्वे रलोपे वसद्दिबम्हणमहो इति भवति । भद्रशब्दस्य रलोपे भद्दमिति भवति । पशब्दस्य वत्वे पावमिति । नस्य णत्वे ण । खु निपातः । इति भद्रम् । शार्दूलविक्रीडितम् ॥

इअ इजे कहिअं तह रे वओ
णवर ळोअहिएण तणीअ तं ।
णवरिअ च्चिअ रोसवसो सई-
पिअजणो वरिसीअ घणो घणं ॥ ४ ॥

छाया—

इति इजे कथितं तथा रे भजो
णवर लोकहितेन ततान तत् ।
णवरिअ च्चिअ रोषवशः शची-
प्रियजनो ववर्ष घनो घनम् ॥

इति इत्थं भगवता यत् कथितं व्रजः व्रजवासिजनः तत् तथा ततान, नन्दगोपाद्यो जन इत्यर्थः । शक्रोत्सवं मुक्त्वा बुधाद्रिब्राह्मण-महं चकारेति भावः । इजे इति निपातः पादपूरणे, रे इति च । णवर लोकहितेन केवलं लोकहितेन नित्यतृप्ततया स्वप्रयोजननिरपेक्षतया । णवरिअ च्चिअ अनन्तरमेव स्वकल्पितपूजापहरणात् शचीप्रियजनः शचीपती रोषवशो जात इति शेषः । शचीप्रियजन इत्यनेन शच्याः प्रियः त्रैलोक्याधिपतिरहमेव पूजाविषय इतीन्द्रस्य अहमभिमानो द्योतितः । मदसञ्जाताविवेकदूषितहृदयः, 'कृष्णमर्त्यमुपाश्रित्य गोपा मे चक्रुरप्रियम्' इत्याद्युक्त्वा रोषस्य वशंगतोऽभूदित्यर्थः । पुनः किं जातं- क्रुद्धेनेन्द्रेण घोषनाशनाय नियुक्तो घनः कालमेघः तदभिमानी देवताविशेषः घनम् अनल्पं यथा भवति तथा स्थूणास्थूलाभिर्निर-न्तरपतिताभिस्तोयधाराभिर्ववर्ष । व्रजे इत्यर्थात् सिद्ध्यति ।

*"इजे रे पादपूरणे" इत्यनेन निपातद्वयं पादपूरणे दृश्यते । $"णवर केवले" (९।७) इत्यनेन णवरेति निपातः केवलार्थे प्रदर्शितः । "आनन्तर्ये £णवरिअ" (९।८) इत्यनेन णवरिअ इति निपात आन-न्तर्यार्थे प्रदर्शितः । द्रुतविलम्बितं वृत्तम् ॥

ऊ सप्पई रज्जमुहेण मत्तो ऊ मं वि णाहं सुमरेइ सो ण ।
ऊ आअदं संवरिसं ति चिन्तो[1] गोवद्धणं छत्तमओ धरीअ ॥

---

* सूत्रमिदं (Chow- edn.) पुस्तके नास्ति ।, 'इजेराः पादपूरणे' (Saras- edn )

$ 'णवरः केवले' (Chow- edn.), सूत्रमिदं (Saras-edn.) पुस्तके नास्ति ।

£ 'णवरि' इति मुद्रितपाठः ।

---

१. 'उ' क. २. 'न्ती' क.

छाया—

ऊ स्वर्पती राज्यसुखेन मत्तो ऊ मामपि नाथं स्मरति स न ।
ऊ आगतं संवर्षमिति चिन्तयन् गोवर्धनं छत्रमजो दधार ॥

ऊ इति क्षेपे । स्वयं स्वर्पतिः वयं व्रजचारिणो मनुष्या इति मूढोऽयं मन्यते । मया स्वर्गाधिकारं लम्भयित्वा स्वर्गे स्थापितस्यास्वतन्त्रस्य कुतः स्वर्पतित्वमित्यप्यधिक्षेपः । राज्यसुखेन राज्यनिमित्तेन सुखेन मत्तः कर्तव्याकर्तव्यविमर्शशून्यतां प्राप्तः । ऊ विस्मये । स स्वर्पतिम्मन्योऽसौ मामपि न स्मरति । ऊ अहो । मदपरवशानां मौढ्यमिति विस्मयः । नाथं सर्वसङ्कटेषु पालनान्नाथत्वं स्फुटतरमित्यर्थः । व्रजस्यापि नाथं, तत्सूचनाय पुनरूशब्दः ।

*"ऊ क्षेपविस्मयसूचनासु" इत्यनेन ऊशब्दः त्रिष्वप्यर्थेषु दर्शितः । इन्द्रवज्रा वृत्तम् ॥

पुनरपि भगवता किं कृतमित्यपेक्षायामाह—

बन्धू अस्सि किणो हे विसह मह भुआधारिअद्दिन्दमूळे
अव्वो बाएहिं अम्मो वरिसइ कळुणावज्जिओ काळमेहो ।
इत्थं उत्तेहिं अव्वो विसिमु णिवसिमो एत्थ अम्मोत्ति गोवा
संविट्ठा तत्थ अम्मो जिणसि तमहिवो कण्ह अम्मोसि अत्ति ॥

* 'सूत्रमिदं (Chow- edn.) पुस्तके नास्ति ।, 'उ क्षेप-' इति (Saras- edn.)

१. 'अप्पो' क. २. 'घ' क. ३. 'विसि' ख.
४. 'अम्होत्ति' क. ५. 'अप्पो' क. ६. 'वुसि' ख.

छाया—

बन्धवोऽस्मिन् किणो हे विशत मम भुजाधारिताद्रीन्द्रमूले
अव्वो म्लायथ अम्मो वर्षति करुणावर्जितः कालमेघः ।
इत्थमुक्तैरव्वो विशामो निवसाम एतस्मिन्नम्मो इति गोपाः
संविष्टास्तस्मिन्नम्मो जयसि त्वमधिपः कृष्ण अम्मोऽसि चेति ॥

हे बन्धवः ! सवत्सगोधना गोपाः ! यूयमस्मिन् मम भुजया भुजेन धारितस्याद्रीन्द्रस्य मूले विशथ किणो विशथ किम् । किणो इति प्रश्ने । तेषां त्रासनिरासार्थं निधिगर्भोऽयं प्रश्नः । त्रासं मुक्त्वा (नि)विशध्वमित्यर्थः । तेषां पीडामालोक्य दुःखित इवाह- अम्मो म्लायथ अम्मो इति दुःखे । हा यूयं म्लाना इत्यर्थः । पुनरपि पीडामालोक्य दुःखित इवाह- अम्मो वर्षतीति । अम्मो इति च दुःखे । हा कष्टमिदानीमपि वर्षस्योपरतिर्न जाता इति भावः । इत्थम् उक्तैर्वचनैर्गोपा इति चोक्त्वा तस्मिन् गिरिगर्ते संविष्टाः । तेषामुक्तिप्रकारमाह— अम्मो विशामः, अम्मो निवसामः इति । आभ्यां प्रवेशनिवासयोः सूचनं क्रियते । इमे वयं प्रविशामः, इमे निवसाम इत्यर्थः । अत्र सूचनार्थे । अनेन यावद्वर्षोपरमं निर्भयनिवासः सूचितः । अम्मो कृष्ण त्वं जयसि । अम्मो त्वमस्माकम् अधिपोऽसि । अत्र सम्भाषणे निपातद्वयम् ।

"किणो प्रश्ने" (९।९) इत्यनेन किणोशब्दः प्रश्ने दर्शितः । "*अव्वो अम्मो दुःखसूचनासम्भाषणेषु" (९।१०) इत्यनेन निपातद्वयं त्रिष्वप्यर्थेषु क्रमेण दर्शितम् । स्रग्धरा वृत्तम् ॥

अथावस्थानुरूपेणेन्द्रभगवद्गोपानां धृतिमाह—

* 'अव्वो दुःखसूचनासम्भावनेषु' (Chow- edn.), 'अव्वो दुःख०' (Saras- edn.)

रण्णा सग्गे हळाहित्ति भणिअगमिए खम्मि पेच्छूण मेहे
णाहो संसीअ गोवे अइ सुहमिह वो ता वळे णिस्सरेह ।
जेट्ठो वच्छो वि बप्फे अ अळहर तुवंसित्ति एदाण वुन्दं
गेळीणं चुक्किअं आ णमिमु जअपहुं तंति बुद्धीअ सक्को ॥

छाया—

राज्ञा स्वर्गे हलाहीति भणितगमितान् खे दृष्ट्वा मेघान्
नाथः शशंस गोपानयि सुखमिह युष्माकं तावद् वले निस्सरत ।
ज्येष्ठो वत्सो वि बप्फे अचलधर त्वमसीत्येषां वृन्दम्
अपक्रान्तं प्रमत्तमा नमेयं जगत्प्रभुं तमित्यबुद्ध्यत शक्रः ॥

स्वर्गे राज्ञा शक्रेण हलाहीति भणितगमितान्— हलाहि मास्तु व्यर्थः परिश्रमो युष्माकम् । वर्षेण अलमित्यर्थः । हलाहीति निवारणे । भणितगमितान् भणितान् उक्तान् गमितान् निवर्तितान् । खे आकाशे । मेघान् दृष्ट्वा नाथः श्रीकृष्णो गोपान् शशंस उक्तवान् । कथम्— अयि गोपाः इह अद्रिमूले वः सुखं तावद् । यूयं निस्सरत वर्षस्य शान्तत्वाद् यथाकामम् अस्मान्निर्गच्छतेति शेषः । बप्फे अचलधर त्वं वि असि अचलधरणाद्यपदानकर्मणा वत्सेभ्यः शिशुभ्यः विपरीतोऽसि भवसि । अत एव ज्येष्ठः सर्वेभ्य आदिभूतः, प्रशस्यतमो वा इति । उक्त इति शेषः । एतेषां भगवता निस्सरतेत्युक्तानां सहवत्सगोगणानां गोपानां वृन्दं शकटाद्युपस्करणोपेतमदृष्टश्रुतचरकर्मदर्शनात् प्रमत्तं सद् अपक्रान्तं निर्गतम् । चुक्कशब्दः प्रमादे । देवोऽपि पर्वतं पूर्ववदेव स्थापयामासेति द्रष्टव्यम् । भगवता मदाख्यकवाटोद्घाटने कृते हृदयभवने प्रविष्टेन विवेकेन नायं केवलमानुषः, अपि तु भगवान् श्रीनारायण एवेति यथावद् बोधितः शक्रः आ नमेयं तं जग-

स्प्रभुम् इत्यबुद्धयत । आशब्दः कुत्सायाम् । नमेयमिति सम्प्रश्ने सम्प्रधारणे लिङ् । सन्दिह्य निर्णयो हि सम्प्रधारणम् । आ इति भगवति कृतापराधमात्मानं कुत्सयन् तं वसुदेवगृहे अवतीर्णं तदानीं मत्करच्युतपुष्पवृष्टं वसुदेवेन नन्दगोपे न्यस्तं तत्र वर्धमानं क्रीडामात्रेण पूतनादीनां निग्रहमाचरन्तं जगत्प्रभुं तत्प्रसादार्थं नमेयमित्यबुद्धयत ज्ञातवानित्यर्थः । देवानामप्यधिपेन सता शक्रेण मानुषरूपेऽपि कृष्णे नमस्कार्यत्वं परीक्ष्य निर्णीतमासीदित्यर्थः ।

*"हलाहि निवारणे" (९।११) इत्यनेन हलाहिशब्दो निवारणे दर्शितः । ¶"अइ वले सम्भाषणे" (९।१२) इत्यनेन अइ वले इति निपातद्वयं सम्भाषणे प्रदर्शितम् । ‡"वि वैपरीत्ये" (९।१३) इत्यनेन विशब्दो वैपरीत्ये प्रदर्शितः । ‡‡"आ कुत्सायाम्" (९।१४) इत्यनेन आशब्दः कुत्सायां प्रदर्शितः । ङ"बप्फे आमन्त्रणे" (९।१५) इत्यनेन बप्फे इत्यामन्त्रणे प्रदर्शितः । स्रग्धरा वृत्तम् ॥

इन्द्रस्य मखभङ्गवन्मानभङ्गोऽपि जात इति प्रकटयंस्तद्वृत्तशेषमाह–

रे जुज्झेसे अरे किं मुणसि पहरिउं णो हरे सोहसे तं
रे वज्झो तं अरे दे सिरमहिहरिमो किं हरे कत्थिएहि ।

---

* 'अलाहि०' मुद्रितपाठः ।

¶ 'अइ रणे०' (Saras- edn.)

‡ 'णवि वैप०' (Chow- edn.)

‡‡ 'सू कुत्सायाम्' (Chow- edn.), 'धू कुत्सायाम्' (Saras- edn.)

ङ 'अज्ज आमन्त्रणे' (Chow-edn.), 'वेच्च आमन्त्रणे' (Saras- edn.)

रे मुक्खो तं अरे किं जिणसि णिअघरं तं हरे मे सि मेसो
जो इत्थं वेरिजुज्झे मुहलअमुहो सो हरी तुण्णि मित्तो ॥

छाया—

रे युध्यसि अरे किं जानीषे प्रहर्तुं नो हरे शोभसे त्वं
रे वध्यस्त्वमरे तव शिरोऽभिहरामः किं हरे कत्थितैः ।
रे मूर्खस्त्वमरे किं जयसि निजगृहं त्वं हरे समासि मेषो
य इत्थं वैरियुद्धे मुखरतममुखः स हरिस्तूष्णीमास्त ॥

रे अरे हरे इत्येभिर्निपातैर्युक्तमाद्यं वाक्यत्रयं सम्भाषणे, तैरेव निपातैर्युक्तमतिकलहे । अतिकलहोऽतिशययुक्तः अतिभूमिं गतः कलहः मूर्च्छितः कलह इति यावत् । किं कत्थितैः इति वैरिप्रयुक्तोद्धतवचनानन्तरमिन्द्रस्य प्रत्युक्तिः । कत्थितानि वृथा जल्पितानि । रे मूर्ख इत्यादि वाक्यत्रयमेतैरेव निपातैर्युक्तम् आक्षेपे । समासि मेष इत्येनेनायुधं विना मेषवदप्रयत्नवध्यस्त्वमित्याक्षिप्यते । य इन्द्र इत्थं वैरियुद्धे वैरिभिरसुरैस्सह युद्धे तैः कैश्चिदप्यनिवारितपराक्रमत्वादित्थं मुखरतममुखः अतिशयेन वाचालमुखः । इत्थंशब्देन पूर्वोक्तानि नव वाक्यानि परामृश्यन्ते । य इन्द्र एवंभूतः स हरिः तूष्णीमास्त निर्वचनं प्राप्तः । शरणार्थं भगवच्चरणोपान्ते कृताञ्जलिर्निपतित इत्यर्थः ।

*"रे अरे हरे सम्भाष$णातिकलहाक्षेपेषु" (९।११) इत्यनेन निपातत्रयं त्रिष्वर्थेषु क्रमेण दर्शितम् । स्रग्धरा वृत्तम् ॥

---

* 'रे अरे हिरे सम्भाषणरातिकलहाक्षेपेषु' (Chow- edn.),

$ 'णरातिकलहक्षेपेषु' (Saras- edn.)

वसिट्ठेसी रामं पिव हळतणूअं मिव अहं
मम्मं तं तं पुव्वं विअ अहिसिएमित्ति भणिओ ।
सिरीसं गोच्छीरच्छुरिअ विअगंगंबुसिअअं
हरी तूसेईअच्चिअ भरिअजोण्हं व जळही ॥ ९ ॥

छाया—

वसिष्ठर्षी राममिव हरतनूजमिवाहं
मां त्वं त्वां पूर्वमिवाभिषिञ्चामीति भणितः ।
श्रीशं गोक्षीरच्छुरितवियद्गङ्गाम्बुसिक्तं
हरिस्तोषयामासैव भृतज्योत्स्नमिव जलधिम् ॥

पुनरपि भगवत्परितोषार्थं शक्रस्य प्रवृत्तिमाह- हरिरिन्द्र इति भणितः मणनशीलः अभिषेकक्रियया श्रीशं विष्णुं तोषयामास । कथं भणित इत्याह- अहं त्वामभिषिञ्चामि । कः कमिव- वसिष्ठर्षी रामं दाशरथिमिव । यथा दशरथमरणानन्तरमराजकं भूलोकमालोक्य ब्रह्मणो मानसपुत्रो वसिष्ठो राममभिषिक्तवान् भुवनं च रामाभिषेकेण कृतरक्षमासीत् तथा मया कृतेन भवदभिषेकेणापि भुवनमिदं कृतरक्षं भवत्वित्यर्थः। लोकरक्षार्थं मनुष्यच्छलेन भूमाववतीर्णानां हर्यंशानां महद्भिर्मङ्गळाभिषेकः क्रियते । सोऽस्मिन्नवतारेऽनेनैव निर्वृत्तो भवत्विवतीन्द्राभिप्रायार्थो ध्वन्यते । पुनरपि कः कमिव- अहं हरतनूजं सेनान्यमिव । भगवति परमेश्वरे प्रशान्तचेतसि तपस्यति सेनान्यभावात् तारकादिभिरसुरैराक्रान्तं भुवनमालोक्याहं यथा स्कन्दं सेनानीपदेऽभिषिक्तवान् तद्वदित्यर्थः। अनेन यथा वयं सेनान्या कृतरक्षाः तथा भवतापि भवामीति ध्वन्यते । पुनरपि कः कमिवेत्याह- पूर्वं कल्पादौ त्वं साक्षाद् विष्णुरूपः सन् मां ततः स्कन्दाभिषेक्तारं त्रैलोक्यरक्षार्थमभिषिक्तवान् । तद्वदनेन सर्वदापि त्वदधीनैव भुवनरक्षेति ध्वन्यते ।

यथेमेऽभिषिक्तास्तथाहं त्वामभिषिश्चामीति भणितः कर्मभूतस्य श्रीशस्य तत्कालविशेषणत्वेनभिषेकक्रियां प्रकाशयति— गोक्षीरच्छुरितवियद्गङ्गाम्बुसिक्तम् । भगवदपदानजनितामोदायाः सुरभेः पयोभिः छुरितानि यान्यैरावतकरोद्धृतान्याकाशगङ्गाम्बूनि तैः सिक्तम् अभिषिक्तम् । अत एव भृतज्योत्स्नं जलधिमिव । जलधेः कृष्णवर्णत्वाज्ज्योत्स्नाया धावल्यातिशयाच्च तदा कृष्णस्यैव रूपोपमोत्थाप्यते । अत्र ज्योत्स्नाशब्देन प्रणतेषु अभिषेकप्रवृत्तेष्विन्द्रादिषु प्रवणस्य कृष्णस्य मुखचन्द्रप्रसुता स्मितज्योत्स्नापि सातिशयं प्रवृत्तेति सूचिता । एवं देवराजो भगवन्तमभिषिच्य तोषयामास ।

*"पिव मिव विअ इवार्थे" (९।१६) इत्यनेन पिव मिव विअ इत्येते निपाता इवार्थे प्रदर्शिताः । रामं पिव, हरतणूअं मिव, पुव्वं विअ । इवे लोपो नित्यमिति इकारलोपे जळही वेति सिद्ध्यति । शिखरिणी वृत्तम्, 'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी' इति हि वृत्तरत्नाकरे ॥

नवाच्छपद्ये रचितोऽत्र काव्ये
श्रीचिह्नकाव्येऽष्टमके निरुक्तः ।
त्रिसप्तकात्यायनसूत्रलक्ष्ये
शुभे परिच्छेदवरेऽष्टमेऽस्य¶ ॥

इति अष्टमः सर्गः समाप्तः ।

---

* 'म्मिवमिवविआ इवार्थे' (Chow- edn.), 'पिव मिव विव व इवार्थे' (Saras- edn.)

¶ इअ सिरिकण्हलीलासुअसुणिविरइए गोइंदाहिसेए पाअडकव्वे सिरिंचे णिवाअकज्जविलसिअं णाम अट्ठमो सग्गो । गोइंदाहिसेओ समत्तो ॥

## अथ नवमः सर्गः ।

संपत्तो अह विबुहावरे पआए
देवेसी सुवररुई तिविक्कमं तं ।
देवेसं चिअ सिरिकण्हणामखाअं
वीणोत्थब्भुअअसिरीहरिप्पसद्दो ॥ १ ॥

छाया—

सम्प्राप्तोऽथ विबुधवरे प्रयाते
देवर्षिः सुवररुचिस्त्रिविक्रमं तम् ।
देवेशमेव श्रीकृष्णनामख्यातं
वीणोत्थाद्भुतकश्रीहरिप्रशब्दः ॥

श्रीकृष्णलीलाशुकबद्धकाव्यं विवृत्य लोकस्य हिताय पूर्वम् ।
तच्छेषपूर्तिं च पुनर्विधाय विवृण्महेऽथोत्तरभागमेतम् ॥

अथ नवमः सर्गः प्रारभ्यते । अथ निग्राह्यत्वेन प्रस्तुतकंसादिनिग्रहस्यानुक्तेः 'दक्खिणा' 'मासआणि' 'आणेहि' 'मम' 'चिहइ' 'भविस्सिहि' 'पुच्छिस्सं' इत्यादौ णि इत्यादिनपुंसकबहुवचनप्रयोगलक्षणस्य त्रैविक्रम एवान्वेष्यत्वात् पूर्वभागे वाररुचस्यैवाभिहितत्वाच्च श्रीकृष्णकथाशेषं त्रैविक्रमोदाहरणलेशालङ्कृतम् अवतारयति कविः— विबुधवरे शक्रे श्रीकृष्णमभिषिच्य स्वर्गं प्रयाते सति । अथ सुरासुरगन्धर्वसिद्धविद्याधरनीरन्ध्रिते गगनतले स्थित्वा भगवतो

---

Transcript reads— १. 'त्तो विबु'; २. 'त्थभु'; ३. 'नामा'; ४. 'तश्री'; ५. 'वाभिकृत'.

गोवर्धनलीलादर्शनानन्तरं देवर्षिः श्रीनारदः तं त्रिविक्रमयुक्तप्रकारेणाभिषिक्तं विष्णुं सम्प्राप्तोऽभवदिति शेषः 'देवर्षिः परमद्युति'रित्यादिदर्शनात् सुवररुचिः। अत्र सुशब्दः शोभनवाची। वरशब्दः श्रेष्ठवाची। तथाविधरुचियुक्तः देवेशमेव विष्णुमेव सम्प्राप्तः। तदानीं सर्वस्यापि लोकस्य मानुषोऽयमिति श्रीलिवृत्तेरर्थः। देवर्षिर्न तु यः कश्चित्, अपितु नारद एवायमिति प्रख्यापयन्नाह— वीणायां स्वयमेवोत्थितत्वाददद्भुतत्वम्। श्रीहरिपदं नारायणादिनामान्तरमप्युपलक्षयति।

'वीणेयं मधुरारावा भवत्कर्णे दिवानिशम्।
नारायणादि मन्नाम गायति त्वत्प्रियेप्सया॥

सप्ततन्त्रीसमायुक्ता महती मधुरस्वरा।
अनाहतापि हस्तस्था सदा गायत्वभीप्सितम्॥'

इति नारदं प्रति वीणां प्रयच्छतो विष्णोर्वच उपलभ्यते ब्रह्माण्डे। अत्र वाररुचत्रैविक्रमयोः सम्बन्धः सूचितः। तत्र वाररुचस्य व्यापारोक्त्या पूर्वप्रयुक्तत्वं सूचितम्।

"दिहौ मिथः से" (१. १. १८) इत्यनेन से समासे दीर्घह्रस्वौ परस्परमन्योन्यस्य बहुलं भवतः। ह्रस्वस्य दीर्घ इति पक्षे विउहावरे, तदभावे सुवररुई। दीर्घस्य ह्रस्वपक्षे सिरिकण्ह, तदभावे सिरीहरि॥

मुक्खेसी च इसीण जो खु दुहिणंकत्तप्पअंगो इजे
सुहाए तणओ वि पुव्वमसळो कंसस्स काही वहं।

T— १. 'दुहिणकत्तरसणगो'.

कण्हो काहिइ अण्णसत्तुमहणं बीएणं सुण्णो विहू
जाणंतो विइएण रामवउणा सेण्णेव्व साअं ति रे ॥ २ ॥

छाया—

मुख्यर्षिश्च ऋषीणां यः खलु द्रुहिणाङ्गात्स्वाङ्ग इजे
शूद्रायास्तनयोऽपि पूर्वममलः कंसस्य करिष्यति वधम् ।
कृष्णः करिष्यत्यन्यशत्रुमथनं द्वितीयेन शून्यो विभुः
जानानो द्वितीयेन रामवपुषा स्वेनैव साकमिति रे ।

न केवलं पूर्वश्लोकोक्तविशेषणविशिष्टः, ऋषीणां मध्ये मुख्यर्षिरित्यादिविशेषणविशिष्टश्च यः इति चशब्दार्थः । द्रुहिणेत्यादिविशेषणानि मुख्यर्षित्वोपपादकानि । अस्मिन् कल्पे द्रुहिणस्य विरिञ्चस्योत्सङ्गात् स्वीकृतस्वदेहः । अन्यशत्रुमथनं कंसादन्येषां जरासन्धादीनां धर्मद्विषां निग्रहम् । द्वितीयेन शून्यः । कुतः— विभुः परमार्थचिद्रूपेण, अनिर्वाच्यजडप्रपञ्चरूपेण च तस्यैव स्फुरणादित्यर्थः । द्वितीयेन रामवपुषेत्युक्तेः सद्वितीयत्वं प्राप्तम् । अत्राह— स्वेनेति । चैतन्योपलक्षितं रामशरीरं स्वयमेवेत्यर्थः । वपुषः प्राधान्येन ग्रहणं शरीरस्यैव सकला विक्रिया न तु चिद्रूपस्यात्मन इति दर्शयितुम् । पूर्वजन्मनि शूद्रयोनिजत्वेऽपि यतिशुश्रूषालब्ध (........वाघटक?) चित्तवैमल्येनास्मिन् कल्पे ब्रह्मपुत्रत्वेन जातत्वाद् भविष्यत्कालीनकृष्णचरिततत्स्वरूपभूतपरमार्थसदद्वितीयब्रह्मज्ञानाच्च मुख्यर्षित्वसिद्धिरिति भावः । वस्तुत एवंभूतः कृष्णो रामेण साकमेवं कर्म करिष्यतीति सम्बन्धः ।

---

T— १. 'णे'; २. 'व्वयचउप्र'.

"सन्धिरत्त्वपदे" (१. १. १९) इत्यनेन संस्कृतोक्तः सर्वोऽपि सन्धिः प्राकृतेऽपि एकपदत्ववर्जिते भवति । तुशब्दो विकल्पार्थः । सन्धौ– सुक्खेसी, तदभावे च इसीण । अपद इति किम्– सुहाए । बहुलग्रहणात् क्वचिदेकपदेऽपि– काही, काहिइ । बीएण, बिइएण ॥

दहिओअणसम्महुअप्पवर-
प्पिअ! दे अणिसं णमिमो अमळं ।
चळणं णिजभत्तउळासअ रे
कळुणाअर काळण ळोअगुरू! ॥ ३ ॥

छाया—

दध्योदनसंन्मध्वात्मपर-
प्रिय! ते अनिशं नमामोऽमलम् ।
चरणं निजभक्तकुलाश्रय रे
करुणाकर कारण लोकगुरो! ॥

दध्योदनादिवदात्मतत्त्वतत्परा अपि भवतः प्रिया इत्यर्थः । अथवा दध्योदनेत्युपक्रममात्रमेव आत्मपरप्रिय इति विशेषणम् ।

"न यण्" (१. १. २०) इत्यनेन यणादेशरूपसन्धिः प्राकृते निषिध्यते । दहिओअण । महुअप्पवर । "एङः" (१. १. २१) एङः संस्कृतोक्तः सन्धिर्निषिध्यते । दे अणिसं । णमिमो असळं । "शेषेऽच्यचः" (१. १. २२) इत्यनेन युक्तस्य हलो लोपे योऽवशिष्यते तस्मिन्नचि परे पूर्वस्याचः सन्धिर्निषिध्यते । भत्तउळ । ळोअ ।

T— १. 'सम्बन्धात्म' २. 'अयुक्तस्य' ३. 'ओइ'.

कारणेत्युक्तम् । तत्र वैशेषिकाभिमतेन प्रसक्तं कुलालादिवन्निमित्तमात्रकारणत्वं व्युदस्यति—

ण कुंभआरो व्व तुमं खु काळणं
मुआइ कुंभारजणेण तुळ्ळदा ।
इअट्ठिआ ईसर सोरि! सूरिसा
णमो णमो दे णमणिज्जविग्गह! ॥ ४ ॥

छाया—

न कुम्भकार इव त्वं खु कारणं
मृदा कुम्भकारजनेन तुल्यता ।
इति स्थिता ईश्वरं शौरे सुपूरुषा
नमो नमस्ते नमनीयविग्रह ॥

मृदा कुम्भकारेण चेत्यध्याहारः । तुल्यता तवेति शेषः । अत्र मृदा तुल्यत्वं उपादानत्वम् । कुम्भकारेण तुल्यत्वं निमित्तत्वम् । सर्पः खलु स्वयमेव स्वस्य कुण्डलत्वे निमित्तत्वमुपादानत्वं च इत्यादिदृष्टान्तसौलभ्यान्मात्रानुपपत्तिरिति भावः । एवं दृढप्रतिपत्तीनां सुपूरुषत्वं वेदानुसारादिति द्रष्टव्यम् ।

उक्तोऽस्मिन् सूत्रे बहुलानुवृत्त्या सन्धिरपि प्रदर्श्यते । कुम्भआरो, कुम्भार । सूरिसा, सुउरिसा ॥

इअ पणमिअ कण्हं णारओ अत्थजाअं
जह सुउरिसवज्जो तस्स अग्गे भणीअ ।

---

T— १. 'र सुपू'

तह भणामि अहं तं विण्हु जाओसि भूए
पसुअघरगओ सो णंदगोवस्स पुण्णा ॥ ५ ॥

छाया—

इति प्रणम्य कृष्णं नारदोऽर्थजातं
यथा सुपुरुषवर्यस्तस्याग्रेऽभणत् ।
तथा भणाम्यहं तद् विष्णो जातोऽसि भुवि
पशुपगृहगतः स नन्दगोपस्य पुण्यात् ॥

इति श्लोकद्वयमुक्त्वा कृष्णं प्रणम्य तस्याग्रे स्थित्वा अर्थजातं वक्ष्यमाणं यथा अभणत् तथा तदर्थजातमहं भणामि । स्तुतिप्रवृत्तनारदोक्तिप्रकाररूपेण श्रीकृष्णचरितशेषं रचयामीत्यर्थः ।

सुउरिसेत्ति पूर्वमेव लिखितम् ॥

चक्काअमुक्खविहगाणुकिई जहा दे
अण्णं व कीळणमहो तह होउ ईड्डु ! ।
अद्दिन्दधारणमहं पळसेउ ऊद्दं
कित्ती सुरीसर ! जअं पगआ च्चिरं ते ॥ ६ ॥

छाया—

चक्रवाकमुख्यविहगानुकृतिर्यथा ते
अन्यद् वा क्रीडनमहो तथा भवतु ईड्य ! ।

---

T— १. ' ण्गोजां '.

अद्रीन्द्रधारणमिदं प्रलसतूर्ध्वं
कीर्तिः सुरेश्वर! जगत् प्रगता चिरं ते ॥

चक्रवाकाद्यनुकरणं च भागवत उक्तम् –

'चकोरक्रौञ्चचक्राह्वभारद्वाजालिबर्हिणाम् ।
अनुरौति स्म सत्त्वानां भीतवद्व्याघ्रसिंहयोः ॥'

इति । अन्यत् क्रीडनं निलायनसेतुबन्धमर्कटोत्प्लवनादि । एवं विष्णो जातोऽसीत्यारभ्य आद्यन्तग्रहणेनातीतजन्मजातं स्मारयित्वा आगामिनीमपि चरितजन्यां कीर्तिं लोकानुग्रहाय प्रार्थयते- प्रलसत्विति । ऊर्ध्वमपीति शेषः ।

"*क्वचिद् वकारलोपे सन्धिरेव" चकाअ । "तिङः"(१. १. २२) इत्यनेन तिङोऽचोऽचि परतः सन्धिर्न भवति । होउ इह । पळसेउ उड्ढं । "लोपः" (१. १. २४) इत्यनेनाचोऽचि परे बहुलं लोपो भवति । सुरीसर । "अन्त्यहलोऽश्रदुदि" (१. १. २५) इत्यनेन अन्त्यहलो लोपो भवति श्रदित्यव्ययम् उदित्युपसर्गं च वर्जयित्वा । जअं ॥

विस्तारितायाः सत्कविग्रथितायाः ज्ञातायाः कीर्तेः भगवद्विग्रहस्मरणद्वारा सकलपुरुषार्थसिद्धिं प्रयोजनं कथयिष्यन् प्रथमं तावत् सत्कविग्रथनं भवतीति दर्शयन्नाह—

सद्दहेइ तुह उग्गअं जसं
सक्कई ण सकई खु सो कई ।

---

* त्रैविक्रमसूत्रवृत्तिः ।

णीसहत्थगअणिस्सहच्छरो
दूसहत्थगअदुस्सहच्छरो ॥ ७ ॥

छाया—

श्रद्धाति तवोद्गतं यशः
सत्कविर्न सत्कविः खु स कविः ।
निस्सहार्थगतनिस्सहाक्षरो
दुस्सहार्थगतदुस्सहाक्षरः ॥

उद्गतमुद्भूतं यशः कीर्तिम् । कः सत्कविरित्यपेक्षायां तस्य दुष्कविलक्षणविलक्षणत्वात् तद्वर्णनेनार्थात् सत्कविं वर्णयति– न सत्कविरिति । न सत्कविः किन्तु दुष्कविरित्यर्थः । को दुष्कविरित्याह– निस्सहेति । न सह्यत इति निस्सहोऽर्थः तस्मिन् गतानि तथाविधान्यक्षराणि यस्य स तथा । निश्चयेन सह्यमर्थं विषयं गच्छन्ति विषयीकुर्वन्ति इति निस्सहार्थगतानि स्वयमपि निश्चयेन सह्यानि अक्षराणि यस्य स तथा इति कश्चिद् योजयेदित्याशङ्कयाह– दुस्सहेति । दुस्सहोऽर्थो राजादिः । सारासारविवेकिनां तावद् विप्रुड्भूतविषयानन्दात् परमानन्दसागररूपस्य परब्रह्मण एव सारत्वात् तत्प्राप्तिविघ्नभूतस्य वनितादेर्हेयत्वेन दुस्सहत्वं युक्तमेव । अन्येषामपि यथोचितं विषयव्यक्तेर्दुस्सहत्वमूह्यम् । परमार्थतस्तु राजाद्येव विषयीकुर्वन् कविः दुष्कविरेव । 'न यद्वचश्चित्रपदं हरेर्यशो जगत्पवित्रं प्रगृणीत कर्हिचित् । तद्वायसं तीर्थमुशन्ति' इत्यादिदर्शनात् । अत्र चित्रपदप्रयोगात् 'अवद्धोक्तिरबद्धा चेत् सुबद्धान्योक्तितो वरा' इत्युक्तेश्च यद्यपि

T— १. 'स कविः' २. 'णलक्ष'
३. 'ति । सत्क' ४. 'कः कवि'

भगवच्चरित्रे प्रवृत्तस्य अपशब्दाद्यपि न दूषणं तथापि दूषणमित्यङ्गी- कृत्य लोकन्यायानुसारेण विषयसम्यक्त्वेऽपि स्वरूपतो दुस्सहासाधु- शब्दप्रयोक्तापि दुष्कविरित्युक्तम् । अतश्चेश्वरविषयं साधुशब्दं काव्यं कुर्वन् मुख्यसत्कविरिति तत् सिद्धम् ।

अश्रदिति किम्- सद्दहेइ । अनुदीति किम्- उग्गअं । समासे हि अन्त्यत्वमनन्त्यत्वं च इत्युभयथापि भवति । सक्कई, सकई । "निर्दुरि वा" (१. १. २६) इत्यनेन निर्दुरित्येतयोरुपसर्गयोः विभाषा अन्त्यहलो लोपो भवति । णीसह, णिस्सह । दूसह, दुस्सह ॥

यस्य यत्र श्रद्धा स तत्र प्रवर्तत एवेति न्यायात् प्रभूतं यशस्तव पश्यन् सत्कविस्तद्ग्रथ्नातीत्यर्थादुक्तं पूर्वश्लोके । ततश्च तद्ग्रथितुः काव्य- रूपेण परिणतं तच्छृण्वंत्स्येव भाग्यवान् । मुहुर्मुहुः श्रवणपुटपीता च सा कीर्तिः सुधाह्लादकरी भगवतः स्मृतिं साधयतीति मन्वानो नारद- स्तद् ग्रथितुं स्मृतेः फलं प्रदर्शयन् भगवन्तं स्तौति —

सुदुःखिओ सो दुहिओ ण होइ
जो अंतरंगं सुमरेइ तुज्झ ।
णिरंतरं जेण दुरन्तपावं
परिच्चअंतो दुरुवक्कमो वि ॥ ७ ॥

छाया—

सुदुःखितः स दुःखितो न भवति
योऽन्तरङ्गं स्मरति तव ।

T— १. 'सुदुःखि'

निरन्तरं येन दुरन्तपापं
परित्यजन् दुरुपक्रमोऽपि ॥

यस्तवाङ्गं गुणगणभूषितं कीर्तिश्रवणाङ्कुशाकृष्टं अन्तर्हृदये निरन्तरं स्मरति चिन्तयति स पूर्वं सुदुःखितः आध्यात्मिकाधिदैविकाधिभौतिकदुःखाब्धिमग्नो दुःखितो न भवति । दुःखलेशमपि नानुभवति । तव सकलरूपस्मरणेष्टकापूर्णपरिशोधितेऽन्तःकरणदर्पणे शास्त्राचार्यलब्धनिष्कलरूपात्मतत्त्वस्य सम्यक्स्फुरणस्यावश्यम्भावादिहजन्मन्येव मुच्यत इत्यर्थः । येनेति हेतौ तृतीया । तत्र पापपदेन पुण्यमपि गृहीतम् । बन्धहेतुत्वस्य तुल्यत्वात् । येन हेतुना शरीरपरिग्रहपूर्वकस्य सुखायमानेतरदुःखानुभवस्य संसारस्य कारणं दुरन्तपापं ब्रह्मज्ञानं विना साकल्येनोच्छेत्तुमशक्यम् । पुण्यपापं परित्यजन् ज्ञानाग्निना परिदह्य वियोजयन् भवति । तेन हेतुना दुःखितो न भवतीति योजनम् । किञ्चान्यद् भवतः स्मरणमाहात्म्यं– दुरुपक्रमो दुराचारोऽपि तवाङ्गं स्मरन् दुःखितो न भवतीति । किं पुनः साध्वाचार इत्यर्थः । ननु दुराचारोऽपि मां सदा भजन् साधुर्भूत्वा मुच्यत इति भवतो वाक्यमिति भावः ।

"अन्तरि च नाचि" (१. १. २७) इत्यनेन अन्तरशब्दे चकारान्निर्दुरोश्चाचि परतोऽन्त्यहलो लोपो निषिध्यते । अंतरंगं, णिरंतरं, दुरुवक्कमो ॥

दुःखितो न भवतीत्युक्तं विशदयति–

T— १. 'ल्यता'

णउण इ भअं णउणा णिरअं
णउणत्थि अ तस्स हु वाहिसअं ।
ण गिरा ण धुरा ण मणो भअवं!
तुइ णारिअणप्पेवणस्स सआ ॥ ८ ॥

छाया—

नपुनर्भयं नपुनर्निरयं
नपुनरस्ति च तस्य खु व्याधिशतम् ।
न गीर्न धूर्न मनो भगवन्
त्वयि नारीजनप्रवणस्य सदा ॥

तस्य भगवन्तं सकळरूपेण पुनर्निष्कळरूपेण च स्मरतः तत एवात्मतत्त्वज्ञानमनुभवत इत्यर्थः । सर्वोपद्रवरहितस्वात्मस्वरूपं मोक्षाख्यं देहेन्द्रियादिसङ्घाताहम्ममाभिमानभ्रान्त्यालब्धमिव स्थितं लभत इति भावः । यद्येवं तर्हि किमिति सर्वे सर्वदा श्रीवासुदेवं न ध्यायन्ति इति । स्त्र्यादिविषयेषु बुद्धेर्विक्षेपादित्याह- ण गिरेति । नारीपदम् अर्थपुत्राद्युपलक्षणम् । 'स्मरणमपि कामिनीनामलमिह मनसो विकाराये'त्याद्युक्तेरीश्वरवैमुख्यकारिषु प्राधान्यात् स्त्रीपिण्डस्य तेनोपलक्षणं न्याय्यमिति ।

"शिश्लुङ्नपुनरि तु" (१. १. २८) इत्यनेन पुनरशब्देऽन्त्यहलः शानुबन्ध इकारो लुग् विकल्पेन विधीयते । णउणाइ, णउणा, णउण । शानुबन्धत्वात् पूर्वस्वरस्य दीर्घः । "रो रा" (१. १. ३०) स्त्रियां वर्तमानस्यान्त्यरेफस्य रा इति रूपं भवति । गिरा, धुरा ॥

T— १. 'प्पपणस्स' २. 'प्रपन्नस्य'

भगवत्स्मरणस्य मोक्षफलत्वेऽप्यानुषङ्गिकफलान्तरमस्तीत्याह—

छुहा ण ताए ककुहाइ जाए
तुमं सरन्तो धणुहाणं वज्जो ।
धणू हु सारंगवओ रिवुं दे
छिंदेइ भिंदेइ अ तस्स खग्गो ॥ ९ ॥

छाया—

क्षुन्न तस्यां ककुभि यस्यां
त्वां स्मरन् धनुषां वर्यः ।
धनुर्हु शार्ङ्गवचो रिपुं ते
छिनत्ति भिनत्ति च तस्य खड्गः ॥

अत्र क्षुत्पदेनान्नालाभो लक्ष्यते। क्षुद्भावमात्रस्याग्निदीप्तावपि सम्भवेनापुरुषार्थत्वादन्नाभावनिमित्तत्वाच्च क्षुत्पीडायाः। स्मरन् पुरुषः। यस्य सन्निहितानामप्यन्नलाभः तस्य किमु वक्तव्यमिति भावः। तस्य त्वां स्मरतः यदि कश्चिद्रिपुः स्यात् तर्हि तं रिपुं ते शार्ङ्गवचो धनुषां वर्यः धनुर्भिनत्ति, ते खड्गो भिनत्ति च। यथा श्रीप्रह्लादस्य रिपुं नखानीति भावः। अत्रैधांसि पचन्तीतिवत् करणे कर्तृत्वारोप इति द्रष्टव्यम्।

"हः क्षुत्ककुभि" (१. १. ३१) इत्यनेन क्षुत्ककुप्शब्दयोरन्त्यहलो हकारादेशः। छुहा। ककुहाइ। "धनुषि वा"(१. १. ३२) इत्यनेन धनुश्शब्देऽन्त्यहलो हकारो वा भवति। धणुहाण ॥

---

T— १. 'ण वंओ'

आसीसाब्भुअअगआ दिआण णो सा
  जत्तो सो णसणजुओ तहप्परूवो ।
मोक्खं[1] जा दिसइ सुणिच्चमप्परूवं
  आसी सा तुह सरणे कआ हु कण्ह ! ॥ १० ॥

छाया—

आशीरभ्युदयगता द्विजानां नो सा
  यतस्स नशनयुतस्तथाल्पस्वरूपः ।
मोक्षं यादिशति सुनित्यमात्मरूप-
  माशीः सा तव स्मरणे कृता हु कृष्ण ! ॥

हे कृष्ण ! अभ्युदयगता आशीः अभ्युदविषया[3] सा आशीः। तत्र हेतुमाह- यत इति । सः अभ्युदयः सुखायमानदुःखरूपत्वादभ्युदयस्य आशीर्विषयत्वाभावादित्यर्थः। अल्परूपत्वात् परिच्छिन्नरूपत्वाद् विनाशोपपत्तिः । का पुनराशीरित्याह- मोक्षमिति । मोक्षं या दिशति सा आशीः । सुनित्यमिति सुशब्देन हेमादिवत् परिणामिनित्यताव्यावृत्तिः । कूटस्थनित्यमित्यर्थः । आत्मस्वरूपत्वाच्च कूटस्थनित्यत्वमित्याह- आत्मरूपमिति । एवंभूतनिरतिशयानन्दरूपत्वान्मोक्षस्य आशीर्विषयत्वोपपत्तेः । तत् प्रददात्याशीराशीरेव । तस्याप्यनुत्पाद्यत्वान्न साक्षादाशीर्विषयत्वम् । किन्तु ज्ञानपर्यवसायिभगवत्स्मरणद्वारैवेति तद्विषयत्वमाह— तवेति ।

"सशाशिषि" (१. १. ३३) इत्यनेन आशिश्शब्देऽन्त्यहलो

T— १. 'क्खाजा' २. 'क्षाग्रा' ३. 'यानेन सा'

वा सकारो भवति । तस्य शित्वात् पूर्वस्वरस्य दीर्घत्वम् । आसीसा, आसी ॥

अथाभ्युदय आशीस्स्वरूपकथनपूर्वकं भोग्यनाशाद् भोक्तुर्देहस्य नाशेन भोग्यवियोगाच्च तस्या अनाशीष्ट्वमाह—

दीहाउसो होसु पसू अ पुत्ता
ते होन्तु तो अच्छरसा[1] अ सग्गे ।
आसी इमा मिच्चुवसं गअस्स
दीहाउणो[2] का उण अच्छरा[3] अ ॥ ११ ॥

छाया—

दीर्घायुर्भव पशवश्च पुत्राः
ते भवन्तु ततोऽप्सरसश्च स्वर्गे ।
आशीरियं मृत्युवशं गतस्य
दीर्घायुषः काः[6] पुनरप्सरसश्च ॥

आशीरियम् अभ्युदयविषय इति शेषः । मृत्युवशंगतत्वं प्रसिद्धम् ।

'आसन्नतरतां याति मृत्युर्जन्तोर्दिने दिने ।
आघातं नीयमानस्य वध्यस्येव पदे पदे ॥'

इति वचनाच्च । आशीर्वादोऽपि न साक्षान्मृत्युं वारयतीति शेषः ।

T— १. 'च्च' २. 'उद्या का' ३. 'च्छ'
४. 'स्सा' ५. 'षा' ६. 'का पु'

दीर्घायुषः[1] पुनर्मरणानन्तरमप्सरसश्च के[2]ाः । पुनरपि मृत्युवशात् स्वर्गात् च्युतस्य अप्सरोभिः किं प्रयोजनमिति भावः। चशब्देन मरणानन्तरं पशुपुत्रादयश्च के इति समुच्चिनोति ।

"स आयुरप्सरसोः" (१. १. ३४) इत्यनेन अनयोरन्त्यव्यञ्जनस्य सकारो वा भवति । दीहाउसो, दीहाउ[3]ओ । अच्छ[4]रसा, अच्छ[5]रा ॥

सुदुःखितः स दुःखितो न भवतीति श्लोके सगुणोपासनमेव श्रौतोऽर्थः । तेन शोधिते चित्तदर्पणे निर्गुणज्ञानोदयस्त्वार्थिकः दुःखराहित्यात्मकमोक्षोक्त्यान्यथानुपपत्तिगम्यः । इदानीं यथोक्ताया मोक्षदाया आशिष आशिष्ट्वं दर्शयन् तमेवार्थं श्रौतं करोति—

सरए व मणे सच्छे फुरए जस्स दे वबू ।
भिसओ सि जम्ममिच्चूदुःखरोअस्स तस्स खु ॥ १२ ॥

छाया—

शरदीव मनसि स्वच्छे स्फुरति यस्य ते वपुः ।
भिषगसि जन्ममृत्युदुःखरोगस्य तस्य खु ॥

वपुः निर्गुणस्वरूपमित्यर्थः ।

"शरदामत्" (१. १. ३६) इत्यनेन शरत्प्रकाराणामन्त्यहलः अत्वं भवति । सरओ, भिसओ ॥

---

T— १. 'युष्का पु'    २. 'ताः'    ३. 'हाउदा'
४. 'च्च'    ५. 'च्च'

अधुना तर्हि कीदृशं निर्गुणरूपं कीदृशं वा सगुणमित्यपेक्षायामाह—

धीणच्चस्स खु सक्खिणो अहव रे सव्वस्स सक्खी सआ
बंम्हक्खो सुहबोहपुण्णअववू णिच्चो भवन्तो भवं ।
माआए तहवीस ! सक्खतणुओ णो जम्मणो विम्हओ
जम्मो अत्थि अ तं णराण विबुहेसाणं महन्तो महं ॥१२॥

छाया—

धीनृत्तस्य खु साक्षी अथवा रे सर्वस्य साक्षी सदा
ब्रह्माख्यः सुखबोधपूर्णकवपुर्नित्यो भवान् भवान् ।
मायायास्तथापीश ! साक्ष्यतनुको नो जन्म विस्मयः
जन्मास्ति च त्वं नराणां विबुधेशानां महान् महान् ॥

हे ईश ! त्वं नराणां महान् । विबुधेशानां च महान् सन् वर्तमानः ब्रह्माख्यो भवसीति शेषः । एवंभूतं त्वामेव ब्रह्मेति वदन्ति औपनिषदा इत्यर्थः । तत्कुत इति । निष्कळं तावद्रूपमादाय ब्रह्मत्वमुपपादयति- धीनृत्तस्येति । एषां विशेषणानामाद्येन भवानित्यनेन सम्बन्धः । धीनृत्तस्य साक्षी अन्तःकरणे विशेषणाभिव्यक्त्या विशेषणबुद्धितद्वृत्ति- साक्षीत्यर्थः । अथवेति विषयव्याप्त्यर्थं पक्षान्तरग्रहणं न तु पूर्वत्रा- परितोषात् । सर्वस्य प्रपञ्चस्य सदा सामान्येन साक्षी सदा विलुप्तदृग्रू- पत्वात् । सुखबोधात्मकं पूर्णकं पूर्णं च वपुः स्वरूपं यस्येति विग्रहः । देशकालाभ्यामिव वस्तुनाप्यपरिच्छिन्नस्य पूर्णपदमुख्यार्थत्वादस्याद्वै- तसिद्धौ साक्ष्यपेक्षं साक्षित्वमपि परमार्थतो नास्तीति मन्तव्यम् ।

---

T— १. 'बम्मप्पो' २. 'श्वरः'

अद्वितीयत्वादेव विच्छेदकस्यान्यस्याभावात् तन्नाशे च शून्यत्वप्रसङ्गात् । नित्यश्चेत्याह– नित्य इति । अत्र जीवस्यापि नीरूपेण साक्षित्वस्फुरणात् प्रेमास्पदत्वेन सुखात्मकत्वात् सदा भानेन बोधात्मकत्वात् परिच्छिन्नत्वे घटादिवदनित्यत्वादुक्तब्रह्मरूपत्वोपपत्तेः अविद्याकल्पितमनुष्यत्वाद्यभिमानव्युदासेन अहमेवंभूतं ब्रह्मेति तस्य चित्तादर्शे ब्रह्मणः स्फुरणे पूर्वश्लोकोक्तजन्ममृत्युनाश इत्यनुसन्धेयम् । अथ सकलं रूपमादाय ब्रह्मत्वमुच्यते– भवान् माययेति । यद्यप्येवंरूपः परमार्थः तथापि भवान् मायया साक्ष्यतनुकः दृश्यप्रपञ्चशरीरवानित्यर्थः । तस्य सप्रपञ्चस्यापि कर्माभावाज्जन्माभावः । स्वेच्छया पुनः जन्मेति रहस्यम् ।

"तु सक्खिणभवंतजम्मणमहंताः" (१. १. ३७) इत्यनेन सक्खिणादयः शब्दा विहितान्त्यव्यञ्जनादेशा निपात्यन्ते । तुशब्दो विकल्पार्थः । सक्खिणो, सक्खी । भवंतो, भवं । जम्मणो, जम्मो । महंतो, महं ॥

जन्मोक्तेरवतारशतप्रसक्तावपि तेषु श्रीकृष्णावतारमुपसंहरति । अथवा श्रीविष्णुविग्रहसाधारणोऽयं श्लोकः–

सरंति जं दे वुवु अच्छकेसं
समंदहासं महुरं च सामं ।
तं सम्ममस्सिं पुरिसा जअम्मि
वीसुंपहाहिं खु पिहं अहं ति ॥ १३ ॥

छाया –

सरन्ति यत्ते वपुरच्छकेशं समन्दहासं मधुरं च श्यामम् ।
तत् सम्यगस्मिन् पुरुषा जगति विष्वक्प्रभाभिः खु पृथगहमिति ॥

T— १. 'वखुरच्छ' २. 'भाभिः पृ'

समन्दहासमित्यनेन माधुर्ये सिद्धेऽपि मधुरमित्युक्तिः आकृति-माधुर्याभिप्रायेण । विष्वग् विषूचीभिः सर्वदिक्प्रसृताभिः प्रभाभिरुप-लक्षितं यत्, ये एवंभूतं ते वपुः पूर्वं पृथक्,

'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥'

इति भक्तिमार्गे स्थित्वा आसन्नतरमहामिति स्मरन्ति तत् ते पुरुषा अस्मिन् जगति सम्यञ्चः उक्तप्रकारेण मोक्षभाजो यतोऽतस्तेषां जन्मैव सफलमित्यभिप्रायः ।

"यत्तत्सम्यग्विष्वक्पृथको मल्" (१. १. ३८) इत्यनेन यदादीनामव्ययानामन्त्यस्य हलो मकारो भवति । द्वित्वान्न विकल्पः । जं, तं, सम्मं, वीसुं, पिहं ॥

अनन्तरं श्रीकृष्णविग्रहमेव वर्णयन् गुणवर्णलक्षणां स्तुतिं पुन-रपि कर्तुं कीर्तिं वा प्रख्यापयितुं भगवद्विषयेऽपि स्वस्य भविष्यज्ज्ञानं वा लोकेभ्यः प्रदर्शयितुं भगवच्चरितं प्रसजयति श्लोकद्वयेन—

सुकंचणव्व[1]ग्घणहत्तकंठं
सिणिद्धवं[2]त्थच्छकअं सु[3]पंसं ।
म[4]णंसिणो दे अतसीसुगुंछ-
प्पहं सु[5]मुंधं पसुपंसु[6]अंगं ॥ १४ ॥

छाया—

सुकाञ्चनव्याघ्रनखाप्तकण्ठं स्निग्धवस्त्राच्छकचं सुपार्श्वम् ।
मनस्विनस्तेऽतसीसुगुच्छप्रभं सुमूर्धं पशुपांस्वङ्गम् ॥

---

T— १. 'व्वक्खण' २. 'वक्कच्छ' ३. 'सुपस्सं'
४. 'मणस्सिणो' ५. 'समुद्धं' ६. 'सुदंगं'

उत्तरश्लोके यच्छब्दोपबन्धेनात्र तच्छब्दो द्रष्टव्यः, इदमिति च सन्निहितत्वात्। मनस्विनस्ते तदिदमङ्गम् एवंभूतम्। कथंभूतमित्यपेक्षायामाह– सुकाञ्चनेत्यादि । सुष्ठु रुचकाकारेण परिणतम् । सुकाञ्चनव्याघ्रनखाभ्यामासः कण्ठो यस्य तत् तथा। सूत्रप्रोतव्याघ्रनखद्वयमध्यगतवररुचकालङ्कृतग्रीवमित्यर्थः । इतस्ततो धावतां पशूनां पांसवो यस्मिन् तत् तथा। पांसूनामपि भगवद्गात्रलग्नानां भूषणभाव एवेति भावः।

"हलि ङञणनाम्" (१. १. ४१) इत्यनेन ङ ञ ण न इत्येतेषां हलि परे बिन्दुर्भवति। *"नङोर्हलि" इति पूर्वमुक्तत्वात् ञणोरेवात्र प्रदर्शनम्। सुकंचणं, कंठं।

कंकोडमोआभसिरीभुअं जं
मणंसिळाळित्तमहो करं दे।
मंजारसंपत्थिअमोहरन्तं
जेउं व कण्णाण मणं हरीअ ॥ १५ ॥

छाया—
कार्कोटभोगाभश्रीभुजं यद् मनश्शिलालिप्तमहो करं ते।
मार्जारसम्प्रार्थितमपहरन्तं जेतुमिव कन्यानां मनो जहार ॥

मार्जारसम्प्रार्थितमिति अपहारकालविशेषणम् । अतो विशेष्यं च नवनीतादीति सिध्यति। अहो आश्चर्यम् । मार्जारेण सम्प्रार्थितम् आकारचेष्टया याचितं नवनीतादि अपहरन्तं ते करं श्रीबाहुं जेतुमिव

---

* प्रा प्र. ४१४ Chow-edn.

---

T— १. 'ङणो'

यदङ्गं गोपकन्यानां मनो जहार हृतवत् । भवनान्तर्गतापहारी शरीरान्तर्गतापहारिणा जित एव भवेत् । अतो जेतुमिति युक्तमेवोक्तमिति ।

[१]नखद्वयप्रभाकण्ठरुचकोद्दीप्तचञ्चलः ।
श्यामः कृष्णघनः सोऽहं नृत्यच्छिखिशिखण्डकः ॥

नखसंज्ञेन्दुसुज्योत्स्नाबाधितान्तर्बहिस्तमाः ।
हृत्प्रभाक्षीरसम्मग्नशक्रनीलमहामणिः ॥

दन्तमुक्ताफलततिस्त्वोष्ठविद्रुमयोः प्रभाम् ।
नेत्रनीलोत्पलरुचिं दधानो मुखपङ्कजे ॥

केकिपिञ्छप्रभाव्याप्तकेशवान् केशिसूदनः ।
मधुरस्वरसम्पन्नो वेणुद्वारकृताङ्गुलिः ॥

हेमनूपुरवाचालपादको मुग्धबालकः ।
गिरिधातुविचित्राङ्गः सानुरागावलोकनः ॥

तत्तन्नामभिराहूतगोगणो गोपकैर्वृतः ।
गोरेणुभूषिततनुः पीतवासा अहं हरिः ॥

"स्वरेभ्यो वक्रादौ" (१. १. ४२) इत्यनेन वक्रादिष्वाकृतिगणेषु[२] यथादर्शनं सर्वेभ्यः स्वरेभ्यो बिन्दुर्भवति । वंक इत्यादि । सुपंसं, मणंसिणो, सुगुंछ, सुगुंधं, कंकोड, मणंसिला, मंजार ॥

इति नवमः सर्गः ।

---

T— १. 'नखद्वय...काव्यं रुचको दीप्तचञ्चलाम्' २. 'षु परेषु यथा'

## दशमः सर्गः ।

कन्यानां मनो जहारेत्युक्तमतीतसर्गान्ते । इदानीं तासामपहृतमनसामुपरिक्रियमाणां प्रवृत्तिमाह—

उवरिं[1] अह कण्णआ मणं
सुहरन्तं कुचकुंपळोद्धआ[2] ॥
भअहिन्ति[3] अ घेत्तुमंबिअं
वरअं मासवएण सुंदरी[4] ॥ १ ॥

छाया —

उपर्यथ कन्यका मनः
सुहरत् कुचकुड्मलोद्धताः ।
भजिष्यन्ति च ग्रहीतुमम्बिकां
वरदां मासव्रतेन सुन्दर्यः ॥

उपरि अथ, कामोद्दीपनविवशभावानन्तरम् । कन्यकाः गोपकन्यकाः । मनः सुहरत् सुतरां हरत् । अङ्गमिति शेषः । ग्रहीतुम् अङ्गस्य परिग्रहार्थम् । तेन रन्तुमिति यावत् । अम्बिकां दुर्गां मासव्रतेन भजिष्यन्ति । देवतान्तरव्युदासे हेतुः वरदामिति । शीघ्रमभीष्टवरप्रदामित्यर्थः । 'हेमन्ते प्रथमे मासि' इत्यादीनि भागवते । यद्यपि श्रीभागवते केशिवधानन्तरं स्तुतौ प्रवृत्तेन नारदेन 'कंसं च निहतं द्रक्ष्ये परश्वोऽहनि ते प्रभो ।' इत्यादिना भविष्यचरितोक्तिः कृते-

---

T— १. 'वरी' २. 'कुट्मळो'
३. 'अहीति' ४. 'दरि'

त्युक्तं तथापि गोवर्धनोद्धरणे अत्याश्चर्यमूलेऽपि सा कृतेति कल्प्यत इत्यदोषः ।

उवरिं, कुंपळ । वक्रादिषु कानिचिदेव रूपाण्यत्रोक्तानि ॥

अथ भजनप्रकार एवोपपाद्यते—

वच्छेसुं विविहेसु अच्छहिअआ कण्णा करेणं सुहा
भूसड्ढेण णहप्पहाइरुइणा भिङ्गस्सिआणं सआ ।
दुग्गाए कुसुमाण जाळममळं सोरब्भजुत्तं इजे
घेत्तूणं भरऊण ते पअजुअं काहिन्ति तेणच्चणं ॥ २ ॥

छाया—

वृक्षेषु विविधेष्वच्छहृदयाः कन्याः करेण शुभा
भूषाढ्येन नखप्रभातिरुचिना भृङ्गाश्रितानां सदा ।
दुर्गायाः कुसुमानां जालममलं सौरभ्ययुक्तम् इजे
गृहीत्वा स्मृत्वा ते पदयुगं करिष्यन्ति तेनार्चनम् ॥

कन्याः गोपकन्याः विविधेषु वृक्षेष्वमलं सौरभ्ययुक्तं कुसुमानां जालं करेण गृहीत्वा अञ्जलिपूर्तिर्यथा भवति तथा स्वीकृत्य ते पदयुगं स्मृत्वा । 'ल्यपादाय स्वपिती' तिवदत्र क्त्वाप्रत्ययः । कृष्णो नो भर्ता भूयादिति सञ्चिन्त्य तेन कुसुमानां जालेन दुर्गाया अर्चनं करिष्यन्ति।

---

T— १. 'परिं' २. 'कुट्मळ'
३. 'णुं' ४. 'हाहिरु' ५. 'भीगस्सि'
६. 'आणस्सिआ' ७. 'काहीति'

"क्त्वासुपोस्तु सुणात्" (१. ३. ४३) इत्यनेन क्त्वाप्रत्ययस्य सुपश्च सुकाराण्णकाराच्च परो बिन्दुः विकल्पेन भवति। वच्छेसुं, विवि-हेसु। करेणं, भूसट्ठेण। सिंङ्कस्सिआणं, कुसुमाण। घेत्तूणं, भरऊण॥

कंसे कासे सप्पिअत्तं हविं ता
काऊणग्गे पूअंहिन्तिव्वं अज्जा।
दाणिं कण्हो होइ भत्ता ण ए मे
दाणिड्डे! रे किं करेमि च्चिआहं॥ २॥

छाया—

कांस्ये कांस्ये सर्पिरात्तं हविस्ताः
कृत्वाग्रे पूजयिष्यन्त्येवार्याम्।
इदानीं कृष्णो भवति भर्ता न चेन्मे
इदानीमीड्ये! रे किं करोम्येवाहम्॥

च्चिअ एवार्थे। ताः कन्याः आर्यां दुर्गामेव पूजयिष्यन्ति। नान्यां देवतामित्यर्थः। इदानीं कृष्ण इत्यादेरुत्तरश्लोके प्रार्थयिष्यन्तीत्यनेन सम्बन्धः। इदानीं कृष्णो मे भर्ता भवति न चेदिदानीं किं करोम्ये-वाहम्। किमेव करोमि, न किमपि करोमीत्यर्थः।

"लुङ्मांसादौ" (१. १. ४४) इत्यनेन मांसादिषु बिन्दोर्लुग् विभाषा भवति। कंसे, कासे। दाणिं, दाणि। किं करेमि, कि करेमि॥

T— १. 'भीगस्सि' २. 'करसे
३. 'हवित्ता' ४. 'अहिन्ति' ५. 'च्च'
६. 'कंसे कंसे' ७. 'च्च एवा'

भद्दस्से ! कि करेमि णंदतणए जोग्गा जहा हं तहा
सक्कारेहि सुसक्कअं कुणसु मं सक्केसुअच्छाहरे! ।
ळोए किंसुअपुप्फजाळमळिणो व[1]च्छन्ति णो माळइं
वाफु[2]ळ्ळंति अ पत्थ[3]हिन्ति महुरं एक्केकरूवा पिहं ॥ ४ ॥

छाया—

भद्रास्ये ! किं करोमि नन्दतनये योग्या यथाहं तथा
संस्कारैः सुसंस्कृतां कुरु मां सत्किशुकाच्छाधरे ! ।
लोके किंशुकपुष्पजालमळयो वाञ्छन्ति नो मालतीं
वाफुल्लामिति च प्रार्थयिष्यन्ति मधुरमेकैकरूपाः पृथक् ॥

किं करोमीति पुनर्वचनमवश्यमनुग्रहणीयाहमिति द्योतनार्थम् । इदानीं किं करोमि । भद्रास्ये! किं करोमि । योग्या चेद् भर्ता भवेदेव । अतो नन्दतनये योग्या यथाहं भवेयं तथा संस्कारैः सुसंस्कृतां कुरु माम् । तादृशपुरुषरत्नस्य न या काचित् स्त्री योग्येत्यर्थान्तरोपन्यासः लोके किंशुकेति । एवमत्यन्तायोग्यता नास्माकं त्वत्कटाक्षपातादि-योगात् । अतः संस्कारः कार्य इत्याह— अफुल्लाम् अविकासिताम् मालतीं न अळयो वाञ्छन्तीति, इत्येवमेकैकरूपाः सत्यः पृथङ् मधुरं प्रार्थयिष्यन्ति गोपकन्यकाः । दुर्गामिति प्रकरणबलात् सिध्यति पूजनानन्तरामिति च । भगवत्या अधरस्य किंशुकपुष्पतुल्यत्वं निर्मला-रुणवर्णसाम्येणेत्यच्छपदात् सिध्यति ।

"संस्कृतसंस्कारे" (१. १. ४५) इत्यनेन संस्कृतसंस्कारयोः बिन्दोर्लोपो विधीयते । सक्कारेहि, सुसक्कअं । "ह्रे तु किंशुके"

T— १. 'वछन्ति' २. 'ळळन्ति' ३. 'त्थहीति'

(१. १. ४६) इत्यनेन किंशुकशब्दे बिन्दोः एकारो विकल्पेन भवति । केसुअ, किंसुअ ॥

वरंक मोरुज्जळपिंछमोळी[1]
सुकुंडळरसज्ज[2] सुबंधु कण्ह ! ।
सुभंतसव्वङ्गतमाळवण्ण[3] !
कस्सित्ति सव्वा भणिहिन्ति मज्झे[4] ॥ ५ ॥

छाया—

*[वराङ्क मयूरोज्ज्वलपिञ्छमौले
सुकुण्डलास्याब्ज सुबन्धो कृष्ण ! ।
शोभमानसर्वाङ्ग तमालवर्ण !
कासीति सर्वा भणिष्यन्ति मध्ये ॥]

यमुनापुलिने भगवत्याः सैकतीं प्रतिमां कृत्वा ममैव भर्ता भवतु कृष्ण इति बुद्ध्या एकैकशः पूजां प्रार्थनं च बहुवारं कुर्वन्तीनां कन्यकानां मध्ये पारवश्यात् सम्भूय वचनमिदम् । हे कृष्ण कासि त्वं क्व भवसि । नयनमार्गे न पश्यामि । किं मद्दर्शनेनेति चेन्मैवं, नयनसाफल्यकरत्वात् तव दर्शनस्येति विशेषणैः प्रदर्श्यते वराङ्केत्यादिना ॥

पूर्वश्लोकस्य प्रयोगप्रकारमाह—

T— १. 'पिच्छ' २. 'सुकुड्डळंसज्ज'
३. 'सुभतंतस' ४. 'भणिष्यन्ति मध्ये'

* छायेयमादर्शे नास्ति ।

सबिन्दुएहिं चरमच्छरस्स
वग्गन्तजुत्तेहि पएहि एव्वं ।
आउत्तिमग्गा कहहिन्ति[1] सव्वा
एदाण पुण्णस्स ण होइ संखा[2] ॥ ६ ॥

छाया—

सबिन्दुकैश्चरमाक्षरस्य
वर्गान्त्ययुक्तैः पदैरेवम् ।
आवृत्तिमार्गात् कथयिष्यन्ति सर्वाः
एतासां पुण्यस्य न भवति सङ्ख्या ॥

वरांकपदे तावत् ककारश्चरमाक्षरम् । तस्य वर्गान्त्याक्षरं ङकारः । तेन ककारनिरन्तरपूर्वभावितया सम्बद्धं वराङ्कपदं प्रयुज्यते । एवं पिंछेत्यत्र चरमाक्षरं छकारः । तद्वर्गान्त्याक्षरस्तु ञकार इति तस्य छकारपूर्वतया प्रयोगः । एवं कुंडळ, सुबंधु, सुमंत इति । "वर्गेऽन्त्यः" (१. १. ४७) इत्यनेन पक्षे वर्गस्यान्त्याक्षरपूर्वता । बिन्दोर्वर्गे परे प्रत्यासन्नस्तस्यैव वर्गस्यान्त्यो भवति विकल्पेन । अत्र पक्षे वर्गान्त्यस्थाने बिन्दुरपि प्रयुज्यते । यत आह— सबिन्दुकैः पदैरिति । किमेकदैव प्रयुज्यते उभयमपि । तथा च विरोधः । नेत्याह— आवृत्तिमार्गादिति । पूर्वं बिन्दुयुक्ततया प्रयुज्यते । पश्चाच्चरमाक्षरवर्गान्त्ययुक्ततयेत्यावृत्तिसिद्धिः ॥

वीसाहासुन्तो रे खु अव्वा ण एसो
भत्ता मह णो होइ गच्छन्ति पाणा ।

---

T— १. 'हंहीति' २. 'सकूखा'

तीसाहासुन्तो किं सुहे! पाणदं तं
दामं गोवीए बंधिउं जं करेसु ॥ ७ ॥

छाया—

त्रिंशदहेभ्यो रे खु अर्वाङ् ने एष
भर्ता भद्रे नो भवति गच्छन्ति प्राणाः ।
त्रिंशदहेभ्यः किं शुभे! प्राणदं तं
दाम गोप्या बन्धुं यं कुरु ॥

त्रिंशदहेभ्योऽर्वाक् स कृष्णो भर्ता भवति न चेत् प्राणा गच्छन्तीति शब्दाध्याहारः । किं वक्तव्यमिति शेषः । एवं स्थिते हे शुभे! सर्वमङ्गलभूते दुर्गे तं कृष्णं नः प्राणदं कुरु । नः प्राणरक्षार्थं तं भर्तारं कुर्विति यावत् । तमित्युक्तं तत्र कमित्यपेक्षायां- यं बन्धुं गोप्या यशोदया दाम संवृत्तमिति शेषः । अनेन बन्धनकारणं तत्तद्भवनगनवनीतादिस्तेयापदेशेनास्मन्मनस्तेयं कृतवान् । तम् ।

"त्रिंशतिषु त्या स्लोपश्च" (१. १. ४८) इत्यनेन त्रिंशतिप्रकारेषु त्यवयवेन सह बिन्दोर्लोपः । शित्वात् पूर्वस्य दीर्घः । लित्वान्नित्यत्वम् । तीसा, तीसा । "स्नमदामशिरोनभो नरि" । (१. १. ४९) इत्यनेन दामशिरोनभांसि वर्जयित्वा सान्तं नान्तं च शब्दरूपं नरि पुल्लिङ्गे प्रयोक्तव्यम् । पूर्वमनुदाहृतत्वादत्र दामशब्द एवोदाहृतः । वैश्वदेवी वृत्तम् । 'पञ्चाश्वैश्छिन्ना वैश्वदेवी ममौ यौ' ॥

---

T— १. 'गमन्तं' २. 'न भवेत् स भर्ता'

अच्छी ऍसो मे ण मुञ्चेउ कण्हं
चक्खू एसो मे ण मुञ्चेउ कण्हं ।
चक्खू एदं मे ण मुञ्चेउ कण्हं
एक्केक्कत्थं ता केहेहिन्ति दुग्गं ॥ ८ ॥

छाया—

अक्ष्येतन्मे न मुञ्चतु कृष्णं
चक्षुरेतन्मे न मुञ्चतु कृष्णम् ।
चक्षुरेतन्मे न मुञ्चतु कृष्ण-
मेकैका इत्थं ताः कथयिष्यन्ति दुर्गाम् ॥

स्पष्टोऽर्थः ।

"अक्ष्यर्थकुलाद्या वा" (१. १. ५१) इत्यनेन अक्षिपर्यायाः कुलाद्याश्च शब्दा वा पुल्लिङ्गे प्रयोक्तव्याः । अच्छी एसो । अच्छी एदमित्यपि द्रष्टव्यम् । चक्खू एसो, चक्खू एदं ॥

इदानीं फलातिशयदानशीलत्वात् सर्वातिशायिनं श्रीकृष्णं पतिं नो दास्यति भवतीति द्योतयन्त्यः स्तुवन्ति—

ळोएसे सुरुइकुळो कुळं खु ळोए
माहप्पो च्चिअ वअणो व्व तस्स दुग्गे ।

---

T— १. 'एसा' २. 'हु' ३. 'हकेहिन्ति'
४. 'केत्थं'

माहप्पं बअ वअणं पअज्जजुग्गं
जो ळोओ सइ पणमेइ तुज्झ भद्दे ॥ ९ ॥

छाया—
लोकेशे सुरुचिकुलं कुलं खु लोके माहात्म्यमेव वचनमेव तस्य दुर्गे ।
माहात्म्यं बत वचनं पदाब्जयुग्मं यो लोकः सदा प्रणमति तव भद्रे ॥

हे दुर्गे! हे लोकेशे तस्य लोके भुवने कुलं सुरुचिकुलं । खु निश्चये । कुलेन श्रैष्ठ्यं तस्यैवेत्यर्थः । एवं माहात्म्यादिष्वपि योजनीयम् । तस्य माहात्म्यमेव माहात्म्यम् । तस्य वचनमेव वचनम् । वाग्मिनां श्रेष्ठोऽपि स एवेत्यर्थः । एवमनुक्तेष्वपि फलेष्वतिशयस्तस्यैवेत्यभिप्रायः । बतेति विस्मये । कस्यैवं फलपौष्कल्यमित्यपेक्षायामाह– यो लोको जनः तव पदाब्जयुग्मं सदा प्रणमति ।

कुळो, कुळं । माहप्पो, माहप्पं । वअणो, वअणं ॥

ण तस्स दुक्खो अवरस्स दुक्खं
सो भाअणो पुण्णगणस्स गोरि! ।
ण भाअणं जो विमुहो इ तुत्तो
अण्णो जणो सो ण गुणं गुणो वि ॥ १० ॥

छाया –
न तस्य दुःखमपरस्य दुःखं स भाजनं पुण्यगणस्य गौरि! ।
न भाजनं यो विमुखस्त्वत्तः अन्यो जनः स न गुणो गुणोऽपि ॥

तस्य प्रकृतस्य त्वत्पादपद्मं सेवमानस्य न दुःखम् । अतो वयमपि गोविन्दालाभदुःखानर्हा इत्याशयः । अपरस्य तस्मादन्यस्य त्वाम-

T— १. ‘ गुणं ’

सेवमानस्य दुःखमित्यर्थः । सः त्वत्पादपद्मसेवी पुण्यगणस्य भाजनम् । तत्कृतमेव पुण्यजातं सफलमित्यर्थः । सः अन्यो जनो न भाजनं पुण्यगणस्य । तस्यार्जितमपि पुण्यजातं व्यर्थमेवेत्यर्थः । कोऽन्यो जनस्त्वद्विमुखः तद्गुणस्यापि गुणत्वं ग्राह्यं यथा दोषस्येति । नेत्याह— गुणोऽपि न गुणः । तस्येत्युत्तरश्लोकादाकृष्टव्यम् । त्वद्विमुखस्य जनस्य । यो गुणस्तस्य प्रतिभासत एव । गुणत्वं न फलत इत्यर्थः ।

दुःखो, दुःखं । भाअणो, भाअणं । *गुणो, गुणं ॥

देवाइ देवा ण ण खग्गमुग्गं
खग्गो तहा तस्स ण मंडळग्गं ।
सुमंडळग्गो ण सुछायरुक्खं
रुक्खो ण अत्थो खु किणा वि तस्स ॥ ११ ॥

छाया —

देवा देवा न न खड्ग उग्रः खड्गस्तथा तस्य न मण्डलाग्रम् ।
सुमण्डलाग्रं न सुच्छायवृक्षो वृक्षो नार्थः खु केनापि तस्य ॥

अत्र ब्राह्मणोऽपि दिव्यैर्वर्णितान् देवान् यज्ञैः प्रीणयित्वा पुरुषार्थमाप्तुं प्रवर्तते । तदभिप्रायेणाह— देवा देवा नेति । तस्य त्वद्विमुखस्य ब्राह्मणादेः देवा न देवाः । तं प्रति पुरुषार्थसम्पादनाशक्तत्वेन पृथग्जनतुल्यत्वात् । तत्र राज्ञः खड्गद्वारेण पराक्रमेणापि पुरुषार्थसिद्धिः प्रसिद्धा । सापि न त्वद्विमुखस्येत्याह— खड्ग इति । तस्य उग्रोऽपि

* "क्लीबे गुणगाः" (१. १ ३१) गुणादयः शब्दा नपुंसके वा प्रयोक्तव्याः— गुणाइं, गुणाः । देवाइं, देवाः । मंडलग्गं, मंडळग्गो । खग्गं, खग्गो । इत्यादयो गुणादयः कररुहान्ता मुद्रितपुस्तके उक्ताः अत्र कुलाद्यन्तर्भाविताः नोदाहियन्त इति भाति ।

T— १. 'तत्पा' २. 'त्यर्थः पुण्य' ३. 'सापि त्वद्वि'

खड्गो न खड्गः । प्रयोगकाले विपरीतप्रवृत्तेरिति भावः । सत्समूह-सेवापि तस्याकिञ्चित्करीत्याह । तस्य मण्डलाग्रं मण्डलस्य अग्रं पुरो-भागः । तत्र स्थित्वा सेवनमिति यावत् । मतामिति सुमण्डलाग्र-मित्युत्तरपदात् सिद्ध्यति । मण्डलाग्रशब्दस्य खड्गार्थकत्वाङ्गीकारे पौनरुक्त्यमिति भावः । तस्य वृक्षच्छायापि आतपपीडायां न लभ्यत इत्याह– सुच्छायेति । किं बहुना, केनापि न तस्य पुरुषार्थ इत्याह– नार्थ इति । तस्येति द्विर्ग्रहणं सर्वत्र योजनार्थम् ।

देवाइ, देवा । खग्गं, खग्गो । मंडळग्गं, सुमंडळग्गो । रुक्खं, रुक्खो ॥

**करुरुहममळं तुहच्चणाए सुकररुहो तुइ णीळिमा इमा खु ।**
**सुइइणअणसोक्खदा तहा दे सुअरुणिमा इमो वि रूअभेदे ॥**

छाया—

करुरुहै[3]: अमलस्तवार्चनाया[4]ं सुकररुहस्त्वयि नीलिमा अयं खु ।
सुकृतिनयनसौख्यदस्तथा ते स्वरुणिमा अयमपि रूपभेदे ॥

तवार्चनायां क्रियमाणायामेव करुहस्य शोभनकररुहत्वम् । उक्तप्रकारेण तथा सत्येव पुरुषार्थसिद्धेः । 'आराधिता सैव नृणां भोग-स्वर्गापवर्गदा ।' इति पुराणवचनाच्च । न पुनः पूर्णैरप्यङ्गुलीयै-रित्यर्थः । स्वय्ययं नीलिमा नयनसौख्यदः । अयं स्वरुणिमा तथा नयनसौख्यद इत्यर्थः । कथमेकस्या एव कार्त्स्न्येन विरुद्धवर्णद्वययोग इति । स्वेच्छागृहीतविग्रहभेदादित्याह– रूपभेदे इति । रूपभेदे विग्रहभेदे सति त्वय्येकरूपायामपि नीलिमा अरुणिमा अपि सुकृति-नयनसौख्यद इति योजना । अत्र सुरथवैश्ययोरिव प्रत्यक्षा सती सुकृतिनां भजतां वरं प्रयच्छसीति सूचितम् ।

---

T— १. 'मळे' २. 'तहच्च' ३. 'हकमले त'
४. 'ना चेत् (अर्चनायमिति वा)'

करुहं, करुहो ! एतदन्ताः कुलादय उदाहृताः । "स्त्रिया-मिमाञ्जलिगाः" (१. १. ५३) इत्यनेनेमान्तानामञ्जल्यादीनां गणानां च विकल्पेन स्त्रीलिङ्गता विधीयते । णीळिमा इमा । अरुणिमा इमो ॥

भगवत्याः श्रीपादसेवालभ्यं प्रसादं विना न पुरुषार्थसिद्धिरित्युक्तम् । तत्र फलितोक्तिः—

जा अंजळी तुह बळी अ णिही अ रस्सी
सो अंजळी वरबळी अ णिही अ रस्सी ।
कुच्छीअ पुत्तिसहिओ खलु दे पसादा
कुच्छी अपुत्तिसहिओ तुह अप्पसादा ॥ १३ ॥

छाया—

योऽञ्जलिस्तव बलिश्च निधिश्च रश्मिः
सोऽञ्जलिर्वरबलिश्च निधिश्च रश्मिः ।
कुक्षेः पूर्तिसहितः खलु ते प्रसादात्
कुक्षिरपूर्तिसहितस्तवाप्रसादात् ॥

तव प्रतिमासन्निहिताया योऽञ्जलिः बद्धाञ्जलिः यस्तव बलिश्च बलिप्रदानं च । पूजाप्युपलक्षिता । यस्तव निधिश्च क्षेत्रे सुवर्णादि-निधिस्थापनं च यस्तव रश्मिश्च प्रभा च । तव सम्बन्धि दीपप्रभा-सम्पादनमिति यावत् । पुरुषार्थसम्पादकत्वात्स एवाञ्जलिः । तथा स एव वरबलिः । तथा स एव निधिः । तथा स एव रश्मिः । किञ्च कुक्षेः पूर्तिसहितः जन्तुर्भवतीति शेषः । ते प्रसादात् खलु । तथा कुक्षिः सर्वदाप्यपूर्तिसहितः तव अप्रसादात् । सर्वैर्जन्तुभिः सर्वदा सम्प्राप्यर्था उदरपूर्तिरपि तव प्रसादादेव । नान्यथेत्यर्थः । एवं गरीयो लघीयश्च फलं त्वत्प्रसादादेव सिद्ध्यति सर्वेषाम् । तस्मात् त्वं प्रसन्ना सती अस्मान् कृष्णे योजयेत्याहुः ॥

एसा गिट्ठी एस गिट्ठित्ति वक्कं
　　इत्थं गेहे चोरिआ गोरसस्स ।
जस्सिं धीए चोरिअं णो घडेउ
　　तस्सिं कण्हे दे विहीए विही सो ॥ १४ ॥

छाया—

एषा गृष्टिरेषा गृष्टिरिति वाक्य-
　　मित्थं गेहे चौर्यं गोरसस्य ।
यस्मिन् धियश्चौर्यं नो घटयतु
　　तस्मिन् कृष्णे ते विधेर्विधिः सः ॥

योऽभिमुखीभूतः सर्वं घटयतीति प्रसिद्धिः स विधिस्ते तव विधेर्नियोगात् तस्मिन् कृष्णे नः अस्मान् घटयतु योजयतु । भार्याभावेनेति शेषः । विधिद्वारा विधिरूपेण वा त्वं योजयेति यावत् । कीदृग्भूते कृष्णे— यस्मिन् कृष्णे एषा गृष्टिरेषा गृष्टिरिति वाक्यमासीदिति शेषः । यः पूर्वमकाले वत्सैर्गा योजयित्वा स्वयं न तत्कृतवानिति कृत्वा ता वत्सैः सह गच्छन्तीः एषा गृष्टिः कालाक्षी, एषा गृष्टिः स्वस्तिमतीत्यादिवाक्येनाङ्गुल्या निर्दिश्यान्यान् बोधयतीत्यर्थः । इत्थमेवं नः अस्माकं गेहे गोरसस्य नवनीतादेश्चौर्यं चासीद् यस्मिन्नित्यादिव्यापारे नोऽस्माकं धियो मनसश्चौर्यं च तस्मिन् कृष्णे नो घटयतु ।

जा अंजळी, णिही, रस्सी इति स्त्रीभावे । सो अंजळी, णिही, रस्सी इति तदभावे । उच्छीअ स्त्रीभावे । उच्छी अपुत्तिसहिओ तदभावे । एसा गिट्ठी स्त्रीभावे । एस गिट्ठी तदभावे । चोरिआ स्त्रीभावे ।

चोरिअं तदभावे। विहीए, विही सो। पृष्ठाक्षिप्तश्लोदाहरणं तु पूर्वमेव कृतं 'पड्डीए जस्स देवा' (स० ४. श्लो० १०) इत्यादिना। एव-शब्दसूत्रिताञ्जल्यादिगणोदाहरणम्(१) ॥

गोपकन्यकानां स्तुत्यादिकमनुक्तमपि किंचिदुक्त्वोपसंहरति—

ओमाळं परिहरिअंबिआसुबिंबे
काऊण त्थुइणइसंजुअं सपज्जं।
णिम्माळं धरिअ सिरे पारेट्ठिआए
काहिन्तिव्व तुइ मणे चिरं पइट्ठं ॥ १५ ॥

छाया —

*निर्माल्यं परिहृत्याम्बिकासुबिम्बे
कृत्वा स्तुतिनतिसंयुतां सपर्याम्।
निर्माल्यं धृत्वा शिरसि प्रतिष्ठितायाः
करिष्यन्त्येव तव मनसि चिरं प्रतिष्ठाम् ॥

निर्माल्यं परिहृत्य अम्बिकायाः सुबिम्बे करिष्यन्ति तव मनसि चिरं प्रतिष्ठाम्। अम्बिकायाः प्रतिष्ठितायाः निर्माल्यं तदातनं शिरसि धृत्वा मनसि तव भवतः प्रतिष्ठां चिरं करिष्यन्ति। त्वद्रूपं निश्चल-तया सदा मनसि धारयिष्यन्तीति यावत्।

---

* छायेयं मातृकायां नास्ति।

---

T— १. 'ह्रीति च्च'

"निष्प्रती ओत्परी माल्यस्थोर्वा" (१. २. १.) इत्यनेन निष्प्रतीत्येतावुपसर्गौ माल्यशब्दे परे स्थाधातौ च परे यथासंख्यं ओत् परि इत्येवंरूपौ वा भवतः । ओमालं, पक्षे णिम्मालं । परिट्ठिअ, पक्षे पइट्ठं ॥

अम्हेत्थ पूअविसआ वरदा हु अम्हे
एत्थंगणाण विसआ अ रईअ णूणं ।
भत्ता सआ वि जइमा सुमणज्जरूवा
भत्ता अ सो जइ अहं णणु जुत्तमेदं ॥ १६ ॥

छाया—

वयमत्र पूजाविषया वरदा हु वय-
मत्राङ्गनानां विषयाश्च रतेर्नूनम् ।
भक्ताः सदापि यदीमाः सुमनोज्ञरूपा
भर्ता च स यद्यहं ननु युक्तमेतत् ॥

वयमत्र कात्यायन्यर्चनाव्रते पूजाविषयाः । अयं भावः— कात्यायन्या मम शक्तित्वात् शक्तिशक्तिमतोश्च अग्न्यौष्ण्यवदभेदाद् असम्भ्यमेवैताभिः पूजा क्रियत इति । अतः पूजाफलस्य दातारोऽपि वयमेवेत्याह— वरदाः इति । अतः फलं दास्यामीत्याह— अङ्गनानामासां रतेर्विषयाश्च वयं नूनम् । नात्र संशयः । नन्वात्मारामस्याभिः सह रमणमयुक्तमिति । भक्तानुकम्पित्वान्मम नैवमित्याह— इमाः कन्याः सदा भक्ता यदि । मयीति शेषः । यदीत्यसन्दिग्धे सन्दिग्धवचनम् । सः भक्त्या वशीकृतोऽहं भर्ता च यदि । आसामिति शेषः । तर्हीत्यध्याहार्यम् । नन्विति वितर्के । युक्तमेतदासां रतिविषयत्वमित्यर्थः । एत-

दुक्तं भवति- मम भक्ताभीष्टप्रदत्वादासां च भद्धार्याभावस्य अभीष्ट-त्वाद् भर्तृत्वेनानुग्रहः कार्यः। तदा च आभिः सह रमणं युक्तमिति।

"लुगव्ययत्यदाद्यात्तदचः" (१. २. ३) इत्यनेन अव्ययात् त्यदादेश्च परस्य तदचः तयोरव्ययत्यदाद्योरचः "आदेः" (१.२.२) इत्यधिकारादादिभूतस्य बहुलं लुग् विधीयते। अव्यये- अम्हेत्थ। लोपाभावपक्षे- अम्हे एत्थ। त्यदादौ- जइमा। जइ अहं॥

इत्थं पहुस्स बहुळाउकरण्णवास
संचिंतणं खु उइअं तुह सिक्खवाआ।
ठाणे तहिं पुण किमत्थमसेसवासा
ताणं खणा हरिहिसे पमउत्तिमाणं॥ १७॥

छाया—

इत्थं प्रभोर्बह्वलाबुकारण्यवास
सञ्चिन्तनं खु उचितं तव शिक्षाव्याजात्।
स्थाने तस्मिन् पुनः किमर्थमशेषवासांसि
तासां क्षणाद् धरिष्यसि प्रमदोत्तमानाम्॥

अत्र वासश्शब्दस्य सान्तत्वात्पुल्लिङ्गत्वे "श्लुग्जश्शसोः" (२. २. ३) इति शसो लोपः शित्त्वात्पूर्वस्याचो दीर्घः- असेसवासा इति। हे बह्वलाबुकारण्यवास कृष्ण! इत्थं पूर्वश्लोकोक्तप्रकारेण तव सञ्चिन्तनम् उचितम्। प्रभोः ईश्वरस्य इति कृतं हेतुगर्भविशेषणम्।

---

T— १. 'बहु' २. 'नः अशेष'
३. 'लोपोतिकारेण असेस'

किं पुनरनुचितमित्याह– तस्मिन् व्रतसमये पूर्णप्राये कदाचित् पूर्वेद्युरुषसि यमुनायां स्नाने प्रवृत्ते तासां तीरनिक्षिप्तवस्त्राणाम्। अत एवावस्त्राणाम्। किमर्थम् अशेषवासांसि शिक्षाव्याजाद् विवस्त्रस्नानं व्रतघ्नमतो न तत् कार्यमिति शिक्षाच्छलेन हरिष्यसि। किमर्थमिति क्रियाविशेषणम्। किमिति क्षेपे। न केनापि प्रयोजनेन वस्त्रापहारं करिष्यसि। अतो दयावत्त्वाच्च अनुचितं तत्॥

ननु किन्नाम न करोति कामपरवशः पुरुषोऽत उचितमिदम्। नैवम्। स्वरूपलाभेनैवाप्तकामत्वादित्याह—

अलाउमुक्खसप्पत्ता अरण्णादिणिवासिणो।
झाअन्ति किंवि ते तत्तं पॅच्छन्ति किमवीस ण॥ १८॥

छाया—

अलाबुमुख्यसत्पात्रा अरण्यादिनिवासिनः।
ध्यायन्ति किमपि ते तत्त्वं प्रार्थयन्ति किमपीश न॥

मुख्यशब्देन दारुमृन्मयवैणवपात्राणि गृह्यन्ते। विहितत्वादेषां सत्पात्रत्वमित्यवगन्तव्यम्। अरण्यादीत्यादिशब्देन देवालयादिसङ्ग्रहः। सन्न्यासिन इति यावत्। ते तव किमपि अनिर्देश्यं तत्त्वं परमानन्दमद्वितीयं स्वात्मतया ध्यायन्ति। हे ईश ईश्वर ते तव तत्त्वस्य काम्यमानाशेषपुरुषार्थरूपत्वात् ते सन्न्यासिनः किमपि फलान्तरं न प्रार्थयन्ते।

---

T— १. 'व'

"वालाब्वरण्ये" (१. २. ४.) इत्यनेन अलाब्वरण्यशब्दयो-रादेरचो वा लुग्भवति। लाउऊ, अलाउमुक्ख। रण्णवास, अरण्णादि। "अपेः पदात्" (१. २. ५) इत्यनेन पदात् परस्यापिशब्दस्यादेर्वा लुग् विधीयते। किंवि, किमवि ॥

एवमुक्तवन्तं नारदं प्रति भगवद्वचनम्—

बम्हो सो जइअणझाणगोअरो मे
जोग्गेत्थं जइ [1]परणारिसंपउत्ती ।
कत्तो [2]पा खु गुरुणिवुत्तिउद्धकाला
मच्चस्[3]संत्ति अह वईअ वासुदेवो ॥ १९ ॥

छाया—

ब्रह्म तद् यतिजनध्यानगोचरो मे
योग्येत्थं यदि परनारीसम्प्रयुक्तिः ।
कस्मात् प्रांक् खु गुरुनिवृत्त्यूर्ध्वकाला-
न्मर्त्यस्येत्यथोवाच वासुदेवः ॥

तद् वेदान्तादिप्रसिद्धं ब्रह्म यतिजनध्यानगोचरः नाहं मनुष्यत्वात्। इत्थं यदीति नारदोक्तिप्रकारपरामर्शः। अहमेवं चिन्तयिष्यामि यदि चिन्तयित्वा च यदि वस्त्रापहारं करिष्यामीत्यर्थः। किं मम व्यापारस्यैकदेशस्यौचित्यमनौचित्यं वेत्याह - मे इति। मे

---

T— १ 'वरहारि' २ 'वाघु गुरु'
३. 'स्सं ति' ४. 'प्राग्गुगुरु'

मर्त्यस्य परनारीणां सम्प्रयुक्तिः सम्प्रयोगः। तत्रापि सा गुरुनिवृत्त्यूर्ध्व-कालात् प्रागसद्योग्या। परस्त्रीसम्प्रयोग एव निषिद्धत्वान्न कार्यो योग्येऽपि काले। तत्र किमु वक्तव्यम्। गुरुसकाशान्निवृत्तेः समावर्तनात् प्राग् उपनयनाध्ययनस्नानान्यकृत्वा असत्कार्यं इत्यर्थः। एवमुत्तरश्लोकोक्तं पूर्वश्लोकोक्तं चापाकृतम् ॥

"इतेः" (१. २. ६) इत्यनेन पदात् परस्येतिशब्दस्यादेर्लुङ्-नित्यं विधीयते। "तोऽचः" (१. २. ७.) इत्यनेन अचः परत्वे तस्यैवेतिशब्दस्य लुप्तेकारस्य स्थाने तकारो विधीयते। उभयसूत्रोक्तं संभूयोदाहृतम्- मचस्सत्ति ॥

इअ उण वअणं तं वासवीसस्स मीस-
 प्फुडअरणरविण्हुव्वावइस्सुज्जळस्स ।
सुविगअरसपासादिस्स तत्तेण सक्खा
 सुवरिहरिअदोसो णारदो सो सुणीअ ॥ २० ॥

छाया—

इति पुनर्वचनं तद् वश्यविश्वस्य मिश्र-
 स्फुटतरनरविष्णुव्यापृतेरुज्ज्वलस्य ।
सुविगतरसस्पर्शादेस्तत्त्वेन साक्षात्
 सुपरिहृतदोषो नारदः स शुश्राव ॥

T— १. 'योग्योपि' २. 'ति लुङ्नि'
३. 'मीसं फुट' ४. 'ण्हुं वा'
५. 'तस्य वश्य' ६. 'मित्र'

पुनःशब्दो वाक्यालङ्कारार्थः। कृष्णस्येति विशेषसिद्धिः प्रकरणाद् भवति। तस्य कृष्णस्य इति वचनं स नारदः शुश्रावेति सम्बन्धः। किमिदमाश्चर्यवद् ब्रवीषि नारदः शुश्रावेति। सर्वोऽप्यबधिरः शृणोत्येव हि शब्दमिति शङ्कायां विश्ववश्यस्येत्यादिविशेषणानि भगवतो वाक्यस्येतरवाक्यवच्छ्रोतुमलभ्यत्वद्योतकानि। तर्हि नारदोऽपि न श्रोतुमर्हतीति शङ्का। अतः सुपरिहृताविद्यादिदोष इति विशेषणं नारदस्य श्रोतुं योग्यत्वद्योतकम्। मिश्रेति। अन्तरान्तरा प्रदर्श्यमानस्फुटतरमनुष्यविष्णुचेष्टोपपन्नस्येत्यर्थः। अत एव देहकान्त्या चोज्ज्वलस्य। तत्त्वेन तत्त्वतः परमार्थतः साक्षात् सुतरां विगतरसस्पर्शादेः। आदिशब्देन शब्दरूपगन्धसंग्रहः। निर्गुणस्य परमात्मन इति यावत्।

"शोर्लुप्तयवरशोर्दिः" (१. २. ८.) इत्यनेन संयोगे उपर्यधोभावेन वर्तमानयवरशषसानां लोपे सति अवशिष्टानां शषसानां आदेरचो दीर्घो भवति। "कगटडतदप×क×पशोरुपर्यद्रे" (१. ४. ७७.) इत्यादिसूत्रतः शषसानामपि लोपसिद्धिः। श्यस्य यलोपे वास। वलोपे वीस। रलोपे मीस, पास। उत्तरश्लोकालोचने षस्य च लोपे दूसम। रलोपे ऊस। सलोपे दूसह॥

तत्तो मणासिळविइत्तमणूसवेसं
वीसुंफुरंतमवि वासववासरक्खं।
दासूसु दूसमअमासअमूमपत्तं
सोदूसहप्परिवुदाहिणअं गईअ॥ २१॥

---

T.— १. 'मआल' २. 'वीसुत्थरंत'
३ 'सहं वरिवु' ४ 'अग्ग'

छाया—

ततो मनःशिलाविचित्रमनुष्यवेषं
विष्वक्स्फुरन्तमपि वासववर्षरक्षम् ।
दस्युषु दुष्षमकमस्वकमुस्रपात्रं
सुदुस्सहात्मरिपुदक्षिणं जगाद ॥

ततः स नारदः सुदुस्सहात्मरिपुदक्षिणां जगादेति सम्बन्धः। दुःखेन सह्या आत्मरिपवः यस्य सः सुदुस्सहात्मरिपुः । स रिपुवधादौ दक्षिणो विदग्धश्चेति तथा । स च अः विष्णुश्चेति सुदुस्सहात्मरिपुदक्षिणाः । तमिति विग्रहः । कप्रत्ययाङ्गीकारे विशेष्यतया कृष्णपदाध्याहारः । दस्युषु दुष्षमं सर्वसमोऽपि भगवान् दस्युप्रभृतिषु दुष्षमः । धर्मप्रतिकूलानां तेषां हन्तेति यावत् । दुष्षमकम् इत्यत्र "सुविनिर्दुर्भ्यः सुपिसूतिसमाः" (पा० सू० ८. ३. ८८) इति हि सस्कृते षत्वम् । अद्वितीयत्वेन स्वीयशून्यत्वाद् अस्वकः । तम् । विष्वक्स्फुरणे हेतुः उस्रपात्रमिति । उस्रस्य प्रभाया भाजनमित्यर्थः ।

"हे दक्षिणेऽस्य" (१. २. ९) इत्यनेन दक्षिणशब्दे हे क्षकारस्य हकारे सति अस्य अकारस्य दीर्घो विधीयते । दाहिणं । अत्र क्षकारस्य खकारस्तावद् भवति । तस्य हकारस्यापि उत्पत्तिरित्यवसेयम् । पक्षे दक्खिण इत्यापतति ॥

पॅारक्कसुण्णअ पॅरक्कतणुप्पसत्त-
दूरट्ठिआच्छवअपावअणं फुरंत ।

T— १. 'णकं णादिति वा ज' २. 'मः किमित्य'
३. 'स्याव्युत्प' ४. 'वार' ५. 'वर' ६. 'वाव'

सज्झाअसंप्पवअणादिविसुद्धसेव्व[1]
कीळावओ णणु इमो तुह अप्पभत्ते ॥ २२ ॥

छाया—
परकीयशून्यक परकीयतनुप्रसक्त-
दूरस्थित अच्छवचःप्रवचने स्फुरन् ।
स्वाध्यायसत्प्रवचनादिविशुद्धसेव्य
क्रीडावचो नन्विदं तवात्मभक्ते ॥

हे कृष्ण! इति विशेष्याध्याहारः कार्यः। नन्वात्मभक्ते मयीति शेषः। तव क्रीडावचः क्रीडानुरूपं वचनमिदं नतु वस्तुवृत्त्यपेक्षम्। तर्हि वस्तुवृत्तिः कथम्। भवान् परब्रह्मेत्याह- परकीयशून्येत्यादि-विशेषणैः। परकीयशून्य सर्वस्याप्यात्मसृष्टत्वेनात्मीयत्वात् स्वात्म-त्वाद्वा। परकीयतनुप्रसक्तदूरस्थित- परकीया खलु तनुः देहः। किमन्नदातुः[3] स्वनिषेक्तुः मातुरेव वा। 'मातुः पितुर्वा क्रेतुर्वा बलि-नोऽग्नेः शुनोऽपि वा' इति भागवतोक्तेः। तत्र प्रसक्ताः प्रकर्षेण सक्ताः। देहाहम्ममाभिमानिन इति यावत्। तेषां स्वरूपभूतत्वेऽपि दूरस्थित अप्राप्य! तर्हि श्रुत्युपपत्तिभ्यां देहाद्यनात्मत्वं पश्यन् कथं त्वां प्राप्नोतीति चेद् देहाद्यहम्ममाभिमानस्य भ्रमरूपत्वेन वेदान्त-जनितात्मतत्त्वसम्यग्ज्ञानेनेत्याह- अच्छवचसामपौरुषेयत्वेन निर्दोषाणां वेदान्तवचसां प्रवचने अध्यापने। प्रवचनमुपलक्षणं यथोचितमध्ययने-ऽध्यापने चापाततः स्फुरन्, अर्थविचारे च निश्चयतः स्फुरन्नित्यर्थः। तदा च त्वत्प्राप्तिरिति भावः। तर्हि देहादिरनात्मा आत्मतत्त्वं तु परं ब्रह्म इति वेदान्तश्रवणादिप्रवृत्तिः केन स्यादित्यपेक्षायामाह—

T— १. 'सव्वव' २. 'सा' ३. 'सं दा'

स्वाध्यायेति । आदिशब्देन निष्कामकृतयज्ञदानादिसंग्रहः । एतैः साधनैर्विशुद्धेन शुद्धान्तःकरणेन सेव्येति ॥

यदुपासनमन्तःकरणशुद्धयेऽतीतसर्गे उक्तं तस्य जगत्कारणत्वकथनपूर्वकं दृश्यमानकृष्णरूपेणैक्यं सम्पादयन् सकलब्रह्मापि त्वम् । अतो न केवलमानुष इत्याह—

पारोहो जअतरुणो जदो पेरोहे
भत्तीए जहिंमिह वल्ळरीइ पक्कं ।
मोक्खक्खं खु भुअइ चाउरंतणाहो
भूहारत्तअचउरंतराअदी जो ॥ २३ ।

छाया—

प्ररोहो जगत्तरोर्यस्मात् प्ररोहे
भक्त्या यस्मिन्निह वल्लर्याः पक्वम् ।
मोक्षाख्यं खु भवति चतुरन्तनाथो
भूभारात्मकचतुरन्तराजद्विड् यः ॥

जगदेव तरुः जगत्तरुः । यस्मान्मूलकारणात् तस्य प्ररोहः । यस्मिन् विषये भक्त्या नाम वल्लर्याः वल्ल्याः प्ररोहे सति इह लोके क्रमेण ज्ञानप्रसूनान्मोक्षाख्यं पक्वं स्वादुतां गतं फलं परमानन्दरूपं भवति । यश्चतुस्समुद्रान्तस्य भूमण्डलस्य नाथः तथा यो भूभारात्मकचतुरन्तराजम्मन्यानां कंसादीनां द्विट् संहर्ता तस्य तव ननु क्रीडायच इदमिति तच्छब्दाध्याहारेण अधस्तनश्लोकेन सम्बन्धः ।

T—'वा' २. 'व' ३. 'बु' ४. 'बु'

"तु समृद्ध्यादौ" (१. २. १०.) इत्यनेन समृद्ध्यादिषु शब्देष्वादेरकारस्य वा दीर्घो विधीयते[1]। पारक्क, परक्क। पावअण, पवअण। पारोहो, परोहो। चाउरंत, चउरंत। केचित्तु समृद्ध्यादयः पूर्वमेवोदाहृताः पूर्वश्लोकेन[2]॥

पक्षान्तरं परिगृह्णाति--

अहव विळिअवक्कउत्तिमोत्तं
तुइ वइरेअमुहेण ईसदाए।
कहिउमसुइकिंकरत्तणं[3] दे
समिरिअकेरअकेरळाइणाह॥ २४॥

छाया—

अथवा व्यलीकवाक्योत्तमोक्त[4]
त्वयि व्यतिरेकमुखेनेशतया।
कथयितुमश्रुतिकिङ्करत्वं ते
समरिचकेरकेरळादिनाथ॥

हे व्यलीकवाक्योत्तम न मयोदितपूर्वं वानृतम्। तदिमे विदुरिति हि त्वयोक्तमित्यभिप्रायः। व्यतिरेकमुखेन तवेशतया हेतुना अश्रुतिकिङ्करत्वं कथयितुं त्वयोक्तं 'बम्हो सो' इति श्लोकेन मर्त्यत्वम् उक्तमिति सिद्ध्यति। अयमर्थः– ईश्वरत्वाभावे व्यतिरेकः। तन्मुखेन यदि मे नेश्वरता किन्तु मर्त्यतैव तर्हि श्रुतिकिङ्करत्वात् सर्वमेतदयुक्तम्। न चैवम्। तथा च श्रुतिकिङ्करत्वाभावान्नित्यतृप्तस्य मे

---

T— १. 'रतोरस्य वा' २. 'के मनः'
३. 'इतिंकर' ४. 'क्तः' ५. 'रके'

लीला श्वासवृथाचेष्टादिवत् । प्रयोजननिःस्पृहत्वेऽपि जगत्सर्जनादौ यथेष्टचरणे च न पर्यनुयोगः कार्य इति ।

"स्वप्नादावित्" (१. २. ११) इत्यनेन स्वप्नादिशब्देष्वादेरकारस्य नित्यमित्वं विधीयते । "इदीषत्-" (१।३) इति वाररुचोक्तसूत्रवन्न विकल्पेन । विलिअ, उत्तिम, भिरिअ ॥

अथ कीदृशोऽहं [1]तदा भविष्यामीत्युच्यतामित्याह—

**णणु सुकिविणदिण्ण[2]अंजळीणं**
**णवरिअ होहिसि ताण दत्तवत्तो ।**
**परमसिवणिडाळवण्हितावा**
**भिं[3]सरुइमारसुकंचणं व तत्तं ॥ २५ ॥**

छाया—

ननु सुकृपणदत्ताञ्जलीनां
[4]अनन्तरं भविष्यसि तासां दत्तवस्त्रः ।
परमशिवललाटवह्नितापाद्
भृशरुचिमारसुकाञ्चनमिव तत् त्वम् ॥

णवरिअ अनन्तरं तासां कन्यकानां वस्त्रापहारेणात्यन्तकृपणानां दीनानामत एव त्वया तत्तद्धर्मौक्तिकच्छलनिवारितरहस्यप्रदेशाच्छादनमात्रतया यथावद्दत्ताञ्जलीनां दत्तवस्त्रो भविष्यसि ननु । तदानीं क इवाहं विलसिष्यामीत्याह– परमशिवस्य ललाटवह्नितापाद् भृशरुचि यन्मार-

T— १. 'तथा' २. 'णणदत्तांजळिणं'
३. 'भस' ४. 'नवरिअ'

सुकाञ्चनं कामाख्यशोभनं सुवर्णं तादिव त्वं तत् तदा। अनया भङ्ग्या कामादपि प्रसिद्धाद् रूपेणाधिक इत्युक्तं भवति।

किंचिण, दिण्ण। बहुलाधिकाराण्णत्वाभावे दत्त। स्वप्नादयः क्वचित् पूर्वमेवोदाहृताः। "पक्काङ्गारललाटे तु" (१. २. १२) इत्यनेन पक्कादिषु इत्वं वा भवति। णिडाळा पक्षे णडाळ उत्तरश्लोके। पक्काङ्गारौ '"ईसिपिक्कफळपाअवे' (स० १ - श्लो० ६) इत्यत्रोदाहृतौ॥

तासां कन्यानामनभिलषितपित्रादिकल्पितभर्तृसंयोगानन्तरं ताभिः सह रासक्रीडाप्रवृत्तिं दर्शयन्नाह—

अद्धेंदुसाण्णिहणडाळ! सुछत्तिवण्णे
किं छत्तवण्णवइरित्तमहादुमड्ढे।
रण्णे सुमज्झिम सआ कइमोव्व देवो
हीरोव्व रे हरसहोव्व रमेहिसीस॥ २६॥

छाया—

अर्धेन्दुसन्निभललाट! सुसप्तपर्णे
किं सप्तपर्णव्यतिरिक्तमहाद्रुमाढ्ये।
अरण्ये सुमध्यम सदा कतम इव देवो
हर इव रे हरसख इव रंस्यसे ईश॥

हे ईश कृष्ण। अर्धेन्दुसन्निभललाट सुमध्यम शोभनमध्य-

T— १. 'अस्सिपिक' २ 'अद्धेंदु'
३. 'मज्झिम' ४ 'रमिध्यतो'

भाग! । आभ्यां विशेषणाभ्यां सर्वाङ्गसौन्दर्यमुपलक्षितम् । अरण्ये वृन्दावने कतमो देव इव [1]रंस्यसे । देवजातिविशेषोपमोक्त्यापरितोषादाह– किं हर इव अथवा हरसखो धनेश इव [2]रंस्यस इति । 'रेमे रमेशो व्रजसुन्दरीभिर्यथा कुबेरोऽद्रिषु गुह्यकीभिः' इति हि भागवत उक्तम् । सप्तपर्णव्यतिरिक्त इति द्रुमान्तरविधानपरमेव । उक्तशोभनसप्तपर्णैः तद्व्यतिरिक्तैस्तेभ्यो भिन्नैर्महाद्रुमैश्च शोभिते इत्यर्थः ।

"सप्तपर्णे फोः" (१. २. १३) इत्यनेन द्वितीयस्याकारस्य इत्वं वा भवति फोरित्युक्तेः । छत्तिवण्णे, छत्तवण्ण । "मध्यमकतमे च" (१. २. १४) इत्यनेनैतयोरपि द्वितीयस्याकारस्य इत्वं भवति । पृथ[3]ग्योगो नित्यत्वार्थः । सुमज्झिम, कइमोव्व । "हरे त्वी" (१. २. १५) इत्यनेन हरशब्दे आदेरकारस्य वा ईत्वं भवति । हीरोव्व । हरसहोव्व ॥

वृन्दावने [4]रमेहिसि इति सूचितां गोपिकामनोरथपूरिकां रासक्रीडां स्पष्टयति—

मुक्खाअमाण[5]पइपत्तिमणुज्जळाहा
रत्तीइ वेणुधुणि[6]पाविअअप्पपाआ ।
जा ताहि तुङ्गगउए खु रमेहिसीस
वी[7]सुं[8]फुरन्तससिरंसिजुए अरण्णे ॥ २७ ॥

---

T— १. 'रमिष्यसे' २. 'रमिष्यसे'
३. 'थकृप्रयोगो' ४. 'रमिश्रास' ५. 'वइवात्ति'
६. 'वाविअ' ७. 'वाशा'
८. 'वु' ९. 'रासि'

छाया —

मुख्यायमानपतिप्राप्तिमनूज्ज्वलाभा
रात्रौ वेणुध्वनिप्रापितात्मपादाः ।
यास्ताभिस्तुष्टगवये खु रंस्यसे ईश
विष्वक्स्फुरच्छशिरश्मियुतेऽरण्ये ॥

मुख्यायमानपतिप्राप्तेः पश्चादित्यनेन नन्दगोपसुतं मे पतिं कुर्वित्येकैकशः प्रार्थयन्तीनां गोपकन्यकानां कन्यात्वभङ्गानन्तरं भगवता संगम इत्युक्तम् । तत्प्रकारमुपपादयति रात्राविति । कदाचिद्रात्रौ सर्वलोकमनोहरवेणुशब्दरूपमन्त्रेण वस्त्रापहारसूचितप्रसादेन भगवता कृतकर्षणाः पादमूलं चिरादभिलषितमपि बलाद् यास्यन्तीत्यर्थः । एवंभूता या गोपिकाः ताभिः सहारण्ये वृन्दावने [2]रंस्यसे । तुष्टगवये । वृन्दावनवासिनां सर्वजन्तूनामपि तदा वेणुनादेन प्रीतिर्भविष्यतीति भावः । गवयो नाम गोतुल्याकारो मृगविशेषः । विष्वगिति । स्फुटगन्धकुसुमोपेतसप्तपर्णतदन्यमहातरुपूर्णतया राकेशकररञ्जितत्वेनापि कामिजनहिते इत्यर्थः ।

"उल् ध्वनिगवयविष्वचो वः" (१. २. १६) इत्यनेन ध्वन्यादिषु वकारसम्बन्धिनोऽकारस्य लित्त्वाभित्यमुत्वं सिध्यति । वेणुधुणि, गउए, वीसुं ॥

अहिण्णू खु सव्वण्णुणो दे अहिज्जो
ण अण्णो तुहत्तीस ताणं [6]पिआणं ।

T— १. 'खु रमिष्यसे' २. 'रमिष्यसे'
३. 'ता वा केश' ४ 'पण वु स'
५. 'गणणो' ६. 'विआणं'

अहिण्णाणहाणीअ णो विम्हओ ता
सआ कामिदं दे मुणेहिन्ति धण्णा ॥ २८ ॥

छाया—

अभिज्ञा खु सर्वज्ञस्य तेऽभिज्ञो
नान्यस्तवेतीश तासां प्रियाणाम् ।
अभिज्ञानहान्यां नो विस्मयस्ताः
सदा कामितां ते ज्ञास्यन्ति धन्याः ॥

हे ईश कृष्ण ता गोपिकाः सदा ते कामितां ज्ञास्यन्ति, न पुनरीशताम्। तथापि ता धन्याः। परमपुरुषार्थसिद्धेः। अज्ञानादपि स्पृष्टोऽग्निः स्वकार्यं दहनं करोतीति भावः। 'तमेव परमात्मानं जारबुद्ध्यापि सङ्गताः। जहुर्गुणमयं देहं सद्यः प्रक्षीणबन्धनाः ॥' इति हि भागवत उक्तम्। तत्र विस्मयमाशङ्क्य आह— सर्वज्ञस्य ते सर्वविषया इति सिद्ध्यति। अभिज्ञा अस्तीति शेषः। तव अभिज्ञोऽन्यः कोऽपि नेति हेतोः तासां गोपीनां तवाभिज्ञानहान्यां को विस्मयः।

"ज्ञो णोऽभिज्ञादौ" (१. २. १७) इत्यनेन ज्ञकारादेशभूतणकारसम्बन्धिनोऽकारस्य उत्वं भवति। अहिण्णू, सव्वण्णुणो। णस्येत्येव। अहिज्ञो। अभिज्ञादावित्येव– अहिण्णाण ॥

थुँवअगाअअमज्झगओ विए
भरिअसुण्हपसुप्पडिविक्खिअं।

T— १. 'घु' २. 'भिजा' ३. 'हन्यात नो'
४. 'ते' ५ 'अहीणा' ६. 'णणो'
७. 'थावअ'

पुळहिमीस ! तुमं चुडचंडरिं
खुडिअपावसुगोपिवअं तहिं ॥ २९ ॥

छाया—

स्तावकगायकमध्यगतो वियति
भृतसास्नपशुप्रतिवीक्षितम् ।
द्रक्ष्यामीश ! त्वां चण्डचण्डारिं
खण्डितपापसुगोपीवृतं तस्मिन् ॥

तस्मिन् रासोत्सवे प्रवृत्ते अहं वियति अम्बरमार्गे स्तावकगायकानां गन्धर्वप्रभृतीनां मध्यगतः । तेष्वेको भूत्वेति यावत् । त्वां द्रक्ष्यामि । भृतसास्नेत्यनेन तुष्टगवय इति वेणुनादादिव्यापृतस्य भगवतः सर्वजन्तुमनोहरत्वमुक्तम् इति सूचितम् । तत्कालविशेषणं चेदम् । खण्डितपापेतिवत् ।

"स्तावकसास्ने" (१. २. १८) इत्यनेन स्तावकसास्नाशब्दयोरादेरकारस्य उत्वम् भवति । थुवअ, सुण्ह । "चण्डखण्डिते णा वा" (१. २. १९) इत्यनेन चण्डखण्डितशब्दयोः णकारेण सहितस्य आदेरकारस्य वा उत्वं सिद्ध्यति । चुड, चण्ड । खुडिअ, परिखंण्डिअ ॥

पुनरपि कीदृग्भूतं मां द्रक्ष्यसीत्याह—

T— १. 'णडरी' २. 'तही' ३. 'व्रतं'
४. 'स्य वा उत्वं सिद्ध्यति'

परिखण्डिअसत्तुगणं जअई-
पुडुमं पडुमं पुडमं पडमं ।
विबुहाण णराण दइ्ळळजण-
प्पवराण सुगाणसुणच्चजुअं ॥ ३० ॥

छाया—

परिखण्डितशत्रुगणं जगती-
प्रथमं प्रथमं प्रथमं प्रथमम् ।
विबुधानां नराणां दयावज्जन-
प्रवराणां सुगानसुनृत्ययुतम् ॥

जगत्याः प्रथममिति । तथा जगत आदिकारणभूतमित्यर्थः । विबुधानां प्रथमं श्रेष्ठम् । नराणां प्रथमं प्रधानभूतम् । दयावज्जनप्रवराणां प्रथमम् अग्रगण्यम् ।

"प्रथमे प्थोः" (१. २. २०) इत्यनेन प्रथमशब्दे पकारथकारयोरकारस्य युगपत् क्रमेण च उत्वं वा भवति । *पुडुमं, पडुमं, पुडमं, पडमं ॥

नवनीतलुण्ठनादेरधिकतरगर्हा इयं बालवपुषो मायावस्था किं मातापित्रोर्गोपिकापतीनां च सह्या भविष्यति । किमेवं भणसि तन्मायामोहितत्वेन ननु तज्ज्ञानाभाव एव तेषामित्याह—

* 'पुढुमं, पढुमं, पुढमं, पढमं' इति मुद्रितत्रिविक्रमसूत्रवृत्तौ ।

T— 1. 'दअळळ'

अज्जू सासू सा जसोआ धआ दे
गोवीणं णो णंदओ वोहिहिन्ति ।
माआमोहा दे दसं तुळ्ळचित्त
सक्कूसारे पुप्फआसारए अ ॥ ३१ ॥

छाया

आर्या श्वश्रूः सा यशोदा धवास्ते
गोपीनां नो नन्दको भीरस्यन्ते ।
मायामोहात् ते दशां तुल्यचित्त
शक्रासारे पुष्पासारे च ॥

गोपीनां श्वश्रूः गोपीनां धवाः नन्दकः नन्दगोपश्च ते माया-मोहात् ते दशामिति च । ते इत्यस्य मध्यदीपिकान्यायेन सम्बन्धः । 'नासूयन् खलु कृष्णाय मोहितास्तस्य मायया । मन्यमानाः स्वपार्श्वस्थान् स्वान् स्वान् दारान् व्रजौकसः ॥' इति हि भागवत उक्तम् । पुष्पासारे पराजितस्य शक्रस्येति शेषः । तुल्यचित्त निर्विकाराचित्त ।

"आर्यायां र्यः श्वश्र्वामूल्" (१. २. २१) इत्यनेन श्वश्रूवाच्यार्यशब्दे र्यकारसम्बन्धयवर्णस्य ऊत्वं भवति लित् । अतो नित्यम् । अज्जू सासू । "आसारे तूं" (१. २. २२) इत्यनेन आसारशब्दे आदेरवर्णस्य ऊत्वं वा भवति । सक्कूसारे, पुप्फआसारए ।

अथ कतिभिश्चित् श्लोकैः तत्तदवतारेषु साहाय्यं कुर्वता स्वेन कीर्त्यमाणकर्मघटनप्रकारमाह—

T— १. 'पोहिहीति' २. 'मा' ३. 'यां श्व'
४. 'ऊ' ५. 'भिः श्लो'

कीडारम्मखवासु देव सुसुहं जाआसु अंतेउरे
अंतेआरिभआत्तकंसरिवुणो अंतग्गउत्तित्थिओ ।
विक्खाअं महुराउरिं[1] महुर तं रे रुप्परुप्पज्जळं
सोरुप्पप्पडिदंसणिज्जपुरिसं[2] कज्जस्स दे जाहिमि ॥ ३२ ॥

छाया—

क्रीडारम्यक्षपासु देव सुसुखं यातास्वन्तःपुरे
अन्तश्चारिभयात्तकंसरिपोरन्तर्गतोक्तिस्थितः ।
विख्यातां मधुरापुरीं[3] मधुर तां रे रुक्मरूप्योज्ज्वलां
सौरूप्यप्रतिदर्शनीयपुरुषां कार्याय ते यास्यामि ॥

एवमेकां क्षपामारभ्य बह्वीषु क्षपासु रासक्रीडा भविष्यति । हे देव मधुर मधुराकृते तासु तव क्रीडारम्यासु क्षपासु ममाकाशवर्तिनः तद्दर्शनेन सुसुखं यातासु गतासु अहं विख्यातां तां तादृशीं तव जन्मनिलयभूतां तां मधुरापुरीं तव कार्याय कंसवधलक्षणकार्यघटनाय यास्यामि प्राप्स्यामि । कुत्र विषये अहमेवं गमिष्यामीति दृढां प्रतिपत्तिं कृत्वा यास्यसीति चेत् शृणु इत्याह- अन्तःपुर इति । अन्तश्चारित्वे हेतुः त्वत्तो मरणभयं प्राप्त इति । एवंभूतकंसरूपारिपोः सम्बन्धी यो ममान्तर्गतोऽर्थः तस्योक्तौ स्थितः । मया श्रीवासुदेवसाचिव्यमनुतिष्ठता कंसं प्रत्येतद् वक्तव्यमिति यदन्तर्मनसि सदा कल्पितं तस्योक्तिं करिष्यामीति दृढप्रतिपत्तिरित्यर्थः। लोके खलु कार्ये प्रवृत्तेन नोन्मत्तादिवद् वर्तितव्यम् । अतोऽन्तर्गतोक्तिस्थित इत्युक्तम् ।

---

T— १. 'उरीमहुरुतं'   २. 'दस्सणीज्जवुरिसं'
३. 'पुरीमधुर'

मधुराया विशेषणं सौरूप्येत्यादि रुक्मरूप्येत्यादि च ।

"तोऽन्तर्येल्" (१. २. २३) इत्यनेन अन्तःशब्दे तकार-सम्बन्धिनोऽवर्णस्य एत्वं ल् । अतो नित्यं भवति । रेफस्यान्तहल्लोपः । अन्तेउरे, अन्तेआरि । क्वचिन्न भवति— अन्तग्गअ ॥

मधुरामेव वर्णयति—

ईहामत्तविसेसअण्णपहिअप्पोज्जन्तपारेवअ-
प्पासादप्पवरप्पकप्पिअमहासिप्पप्पपारावअं ।
देरे द्दारअरम्मि वारपवरे पच्छादुवारुत्तिमे
भीईए खु तुमादु पुण्णपुरिसं कंसं च वोच्छेहिमि ॥ ३३ ॥

छाया—

ईहामात्रविशेषान्यप्रथितप्रोद्यत्पारावत-
प्रासादप्रवरप्रकल्पितमहाशिल्पात्मपारावताम् ।
द्वारे द्वारवरे द्वारप्रवरे पश्चाद्द्वारोत्तमे
भीत्या खु त्वत् पूर्णपुरुषं कंसं च वक्ष्यामि ॥

ईहा चेष्टा तावन्मात्रेण विशेषो येषां ते तथा ईहामात्रविशेषाः । अन्ये प्रथिताः प्रसिद्धाः । रक्तश्यामवर्णोपेतत्वात् प्रोद्यन्तः पारावताः येषां तैः प्रासादश्रेष्ठेषु कल्पितैः शिल्पिभिर्निर्मितैः महाशिल्पस्वरूपैः पारावतैः उपेताम् । पुनरपि कथंभूतां- द्वारे उज्ज्वलकवाटद्वारमात्रे द्वारवरे अतोऽप्यतिशयवद्द्वारान्तरे द्वारप्रवरे अतोऽप्यतिशयविशिष्टे

---

T— १. 'णं रुक्मरूप्येति च'

द्वारे पश्चाद्द्वारोत्तमे पश्चाद्भागगतद्वारश्रेष्ठे च रक्षार्थं कंसनियुक्ताः पूर्णाः पुरुषा भटा यस्यां ताम्। किन्न्वत्र बहुभिर्द्वारपालैः कृत्यमिति। नशरीरिण्या गिरः कन्यावचनाच्च त्वत्सकाशान्मरणभयादित्याह—भीत्येति। अपि च तत्र गत्वा कंसं वक्ष्यामि च। अन्तर्गतोक्तिं करिष्यामि चेत्यर्थः।

"पारावते तु फोः" (१. २. २४) इत्यनेन पारावतशब्दे फोः द्वितीयस्यावर्णस्य एत्वं तु विकल्पेन भवति। पारे वअ, पारावअं। "उत्करवल्लीद्वारमात्रचः" (१. २. २५) इत्यनेन उत्करवल्लीद्वारशब्देषु मात्रच्प्रत्यये च आदेरवर्णस्य एत्वं वा भवति। उत्करादिशब्दानां मात्रचश्चोदाहरणान्युत्तरश्लोके। देरे, पक्षे दारअरे। वारपवरे, दुवारुत्तिमे ॥

किं वक्ष्यसीत्याह—

पत्तुक्करब्भुअअवेल्लिवणड्ढणन्द-
घोसट्ठिई तुह रिवुस्स कुमारिउत्ता।
हे कंस किं सुमरिआ ण णअज्ज अज्ज
णो बोहणिज्जमिह एत्तिअमेत्तमेव्व ॥ ३४ ॥

छाया—

पत्रोत्कराद्भुतदवल्लीवनाढ्यनन्द-
घोषस्थितिस्तव रिपोः कुमार्युक्ता।

---

T— १. 'द्वारमात्रशब्देषु मात्र' २. 'वल्लि'

हे कंस किं स्मृता न नयज्ञ *अज्ञ
नो बोधनीयमिह एतावन्मात्रमेव ॥

पत्रोत्करैः पलाशसमूहैः अद्भुतदाः आश्चर्यप्रदाः वल्ल्यो यस्मिंस्तेन वनेन बृन्दावनेन आढ्यः उपेतः यो नन्दस्य घोषः तस्मिंस्थितिस्तथोक्ता। हे कंस कुमार्युक्ता तव हस्तभ्रष्टकन्यकयोक्ता। तव रिपोरेवंभूतनन्दघोषस्थितिः किं न स्मृता न तेऽत्रभाति। सम्यक्तत्प्रवृत्तिक्रियादर्शनाभावात्। कौशलाभावात् तदभाव इति न वाच्यमित्याह- नयज्ञेति। अथवा नयज्ञ अज्ञ[1]! त्वं नयज्ञम्मन्य एव। त्वं वस्तुतोऽज्ञ एव। त्वं यतः कालेनाचिकित्स्यां रिपुव्याधिमुपेक्षसे इत्यर्थः। रिपुवृत्तान्तस्वरूपस्यासम्यग्बो[2]धित्वं नाम अत्र प्रवृत्तिभ्रान्धकरं दूषणम्। तच्चाहमपनेष्यामीत्याह- इह तव रिपौ विषये एतावन्मात्रमेव कुमार्युक्तम्। घोषस्थितिमात्रमेव नो बोधनीयमिति।

पत्तुक्कर, वेळ्ळि[3]। एत्वाभावपक्षे उदाहरणं पूर्वमुक्तमेव। मात्रच एत्वपक्षे एत्तिअमेत्तं ॥

भोएस भो अहिअमेत्तिअमत्तअत्था
मज्झुत्तिमेत्तपरिळद्धअमेत्थ[4] गेज्झं।
ओळ्ळोळ्ळवक्कवसुदेवपुवञ्चिओ तं
पुत्तस्स वच्चअकरो खु[5] णिसाइ एसो ॥ ३५ ॥

---

* 'अज्ञ' इति वा।

---

T— १. 'अज्ञं तं नय' २. 'न्तस्वस्वरूपस्य सम्यग्'
३. 'वळ्ळि' ४. 'मेत्त' ५. 'बु'

छाया—

भोजेश भोः अधिकमेतावन्मात्रार्था-
न्ममोक्तिमात्रपरिलभ्यकमत्र ग्राह्यम् ।
आर्द्रार्द्रवाक्यवसुदेवसुवञ्चितस्त्वं
पुत्रस्य व्यत्ययकरः खु[3] निशायामेषः ॥

भो भोजेश सहायबन्धुसहित अत्रास्मिन् तव रिपौ विषये एतावन्मात्रार्थाद् अधिकं वस्तु ग्राह्यम् । ममोक्तिमात्रपरिलभ्यकम् अत्यन्तसुहृत्त्वादस्य 'यतस्ते भयमुत्थितम्' इत्यादिरूपं वाक्यं यस्य तेन वसुदेवेन सुतरां वञ्चितस्त्वम् । कुतः– पुत्रस्य व्यत्ययकरः कन्यया सहेति शेषः । खु । एषः वसुदेवः ।

मात्रच एत्वाभावे एत्ति[3]अमत्त । मात्रच एत्वपक्षे मज्झुत्तिमेत्त । मत्त इति पक्षे ऊह्यम् । "शय्यादौ" (१. २. २६) इत्यनेन शय्यादिष्वादेरकारस्य एत्वं नित्यतया विधीयते । एँत्थ, गेज्झं । शय्येति दत्तोदाहरणम् । "*वार्द्रे उदोत्" (१. २. २७) इत्यनेन आर्द्रशब्दे आदेरवर्णस्य उत्वमोत्वं च संभवतः । ओळ्ळ, उळ्ळ । पक्षे अळ्ळ, अद्द ॥

पुत्रव्यत्ययकरत्वमुपपादयति—

[5]अळ्ळाद्दपत्ता तुह हत्थभट्टा
जशोअकण्णा वसुदेवणीआ ।

---

* 'स्वार्द्रे' इति मुद्रितसूत्रपाठः

---

T— १. 'थंत्वा' २. 'वु' ३. 'त्तिमत्त'
४. 'एत्त' ५. 'आर्द्रार्द्रवत्ता'

ताए सुपन्तीइ सुअस्स णासं
काऊण सोपन्तजणादु घोसा ॥ ३६ ॥

छाया—

आर्द्रार्द्रि[1]भासा तव हस्तभ्रष्टा
यशोदाकन्या वसुदेवनीता ।
तस्यां स्वपन्त्यां[2] सुतस्य न्यासं
कृत्वा स्वपज्जनाद्घोषात् ॥

या तव हस्ताद् भ्रष्टा सा घोषाद् वसुदेवेन मधुरां नीता नन्दपत्न्या यशोदायाः कन्या । किं कृत्वा नीता- पुत्रीं प्रसूय तल्लिङ्गज्ञानात् प्रागेव सहसा निद्रां प्राप्तायां तस्यां यशोदायां सुतस्य अष्टमस्य पुत्रस्य जातमात्रस्य न्यासं कृत्वा ।

"स्वपि" (१. २. २८) इत्यनेन स्वपिधातोरादेरवर्णस्य पृथक्सूत्रणान्नित्यमुत्वमोत्वं च[3] भवतः । सुपन्तीइ, सोपन्त ॥

सुरारिओळिक्खपणेण तेण दे
सुएण रे तस्स हआ जणा वए ।
सरोहिणीएण परोप्परं खुं[4] दे
सआ सिणिद्धा घअपोम्मविग्गहा ॥ ३७ ॥

---

T— १. 'वत्का'  २. 'त्न्यां'
३. 'च वा भ'  ४. 'वु'

छाया—

सुरार्यालिक्षपणेन तेन ते
　　सुतेन रे तस्य हता जना व्रजे ।
सरौहिणेयेन परस्परं खु तौ
　　सदा स्निग्धौ धृतपद्मविग्रहौ ॥

पूर्वं तारामये युद्धे त्वया कालनेमिना दृष्टेन सुरारीणामाळ्याः पङ्क्त्याः क्षपणेन इदानीं तस्य वसुदेवस्य सुतेन सुतत्वेन जातेन व्रजे ते जनाः पूतनादयः हताः । पुनः कीदृशेन सरौहिणेयेन, या ह्यन्या वसुदेवपत्नी रोहिणी त्वद्भयाद् व्रजं प्राप्ता तस्या अपत्येन रौहिणेयेन सहितेन । सोऽपि हतवान् । सदा परस्परं स्निग्धत्वे हेतुः– धृतपद्मेति । धृता पद्मा श्रीः धृतं पद्मं वा येन तस्य विष्णोर्विग्रहावेकस्वरूपावित्यर्थः ।

"ओदाळ्यां पङ्क्तौ" (१. २. २९) पङ्क्तिवाच्यालिशब्दे आदेरवर्णस्य ओत्वं, सुरारिओलि । "फोः परस्परनमस्कारे" (१. २. ३०) इत्यनेन परस्परनमस्कारशब्दयोः ओत्वं फोः द्वितीयस्यावर्णस्य भवति । परोप्परं । णमोक्कार इति नोदाहृतम् । सलोपे सत्येवं रूपसिद्धिः । "पद्मे मि" (१. २. ३१) इत्यनेन पद्मशब्दस्यादेरवर्णस्य खल्वोत्वं लोपशिष्टमकारे परे ग्राह्यम् । धअपोम्म ॥

इअ मए कहिए धअखग्गअं
　　अंह अ हम्मिउमाणअदुंदुहिं ।
दुइअरामभअं ण ण दे हए
　　दिअरि तम्मि अहं ति कहेहिमि ॥ ३८ ॥

छाया—

इति मया कथिते धृतखड्गक-
मथ च हन्तुमानकदुन्दुभिम् ।
द्वितीयरामभयं न न ते हते
द्विजारे तस्मिन्नहमिति कथयिष्यामि ॥

अथ च इति मया कथिते उक्ते सति आनकदुन्दुभिं हन्तुं धृत-खड्गकं कंसं हे द्विजारे कंस तस्मिन् वसुदेवे हते । द्वितीयो रामो यस्य स द्वितीयरामः तस्मात् कृष्णाद् भयं न न । द्वौ नञौ प्रकृतमर्थं साधयतः इति भयमस्तीत्यर्थः । इति कथयिष्यामि ।

विस्तरोक्तिभयाच्चाथ दुस्तरत्वाच्च मादृशाम् ।
त्रैविक्रममहाम्भोधिर्मध्ये मध्ये प्रदर्श्यते ॥

"द्विनीक्षुप्रवासिषु" (१. २. ४८) इत्यनेन एष्वादेरत उत्वं विधीयते । दुइअ । क्वचिन्न भवति- दिअरि । शिष्टं पूर्वमुदाहृतम् उच्छुमात्रम् ।

तस्मात् सरामः कृष्ण एव ते पराक्रमसफलीकरणविषयः ॥

नायं वसुदेवस्तपस्वीत्याह—

सिरिसमउळगत्ते जुण्णसप्पाण थंण्णे[3]
पसमिअविसतूहे पेढए वंळ्ळआणं[4]

T— १. 'एतस्मिन्' २. 'यम्'
३. 'शण्णे' ४. 'पळळ'

पहु सहिअपळंबारिम्मि णट्ठे सुकित्ती
सुअपरवसए दे अप्पविय्ये हए किं ॥ ३९ ॥

छाया—

शिरीषमृदुलगात्रे जीर्णसप्राणस्तन्ये
प्रशमितविषवीर्ये पीठगे वल्लवानाम् ।
प्रभो सहितप्रलम्बारौ नष्टे सुकीर्तिः
सुतपरवशे तेऽल्पवीर्ये हते किम् ॥

हे प्रभो कंस सहितप्रलम्बारौ कृष्णे नष्टे ते तव सुकीर्तिर्भविष्यतीति शेषः । वसुदेवे हते किम् । किमपि न प्रयोजनमित्यर्थः । सुतेत्यादि । पुत्रपारवश्यान्नु तस्यापराधः । अल्पवीर्यत्वाच्च न तद्वधे तव कीर्तिरिति भावः । कृतापराधत्वाद् वीर्यवत्त्वाच्च कृष्ण एव ते क्रोधविषय इति द्योतकैर्विशेषणैः कृष्णं विशिनष्टि- शिरीषेति । बहिरेव मृदुः अन्तः कठिन इत्यर्थः । जीर्णेति- त्वया प्रेषितायाः पूतनाया राक्षस्याः अत्यन्तबाल एव सन् प्राणैः सह स्तन्यं पीतवान् । त्वत्पराक्रमगणने दुर्जरमपि तज्जीर्णमिव भातीत्यर्थः । प्रशमितेति । प्रशमितविषं यमुनातीर्थं कृतवान् । हरिवंशानुसारेण त्वन्नियुक्तं कालियं जितवानिति यावत् । वल्लवानां पीठग इति पीठस्थ इत्यर्थः । पीठक इति वा । पीठस्थानीयः आश्रयभूत इति यावत् । सर्वथापि स्वामिनि तेषामिति पर्यवसितोऽर्थः ।

"गभीरग इत्" (१. २. ५१) इत्यनेन गंभीरादिगणे आदेरीतः इत्वं ग्राह्यम् । तत्रैकस्योदाहरणं- सिरिस । "उल् जीर्णे"

---

T— १. 'प' २. 'प' ३. 'गम्भी'

(१. २. ५२) इत्यनेन जीर्णशब्दे ईत उत्वविधिः । जुण्ण । जिण्णे भोअणे इत्यत्र नेच्छति । "तीर्थे ह्रूल्" (१. २. ५४) इत्यनेन तीर्थशब्दे लुप्ततकारस्य हादेशकरणे ईत ऊत्वविधिः । तूहे । "एल् पीठनीडकीदृशपीयूषविभीतकेदृशापीडे" (१. २. ५६) इत्यनेन पीठादिष्वादेरीत एत्वविधिः पेढए । 'एत्पीडापीडेदृशकीदृशेषु' (प्रा० प्र० १।१९) इति पूर्वत्र (स० १. श्लो० २१) उदाहृतम् । अत्र पीठनीडयोर्विकल्पमिच्छन्ति किल ॥

मउरविसअहीमहारखग्गो
भिउडिकराळमुहो महावळो सो ।
इअ अ मह वअस्स सण्हअत्था
वहविमुहो वि असोहणं खु काहि ॥ ४० ॥

छाया—

मुकुरविशदभीमधारखड्गो
भ्रुकुटिकराळमुखो महाबलः सः ।
इति च मम वचसः सूक्ष्मार्थत्वाद्
वधविमुखोऽप्ययशोभनं खु करिष्यति ॥

मुकुरवद् दर्पणवद् विशदो मुकुरविशदः स चासौ भीमधारः तादृशः खड्गो यस्य स तथा । भ्रुकुट्या कराळं क्रूरं मुखं यस्य स तथा । खड्गोद्यतकरः क्रुद्धो नागायुतबलः प्रतिस्पर्धिमात्रसम्मर्दनक्षमश्च सन् स कंसः इति च मम वचसः । चशब्दाद् 'द्वितीयरामभयं न न ते'

T— १. 'वु' २. 'हार' ३. 'वु'

इति पूर्वोक्तवचसश्च सूक्ष्मार्थत्वात् सूक्ष्मार्थनिरूपणादिति यावत्। वसुदेववधाद् विमुखोऽपि अशोभनं खु करिष्यति।

"मुकुळादौ" (१. २. ५८) इत्यनेन मुकुळादिष्वादेरुतोऽत्वविधिः। अत्रैकस्योदाहरणं- मउर। प्रायेणोदाहृताः परिशिष्टाः पूर्वम्। "रो भ्रुकुटिपुरुषयोरित्"(१. २. ५९) इत्यनेन रो रेफसम्बन्धिन उकारस्य इत्वविधिः। भिउडि। "सूक्ष्मेऽद्वोतः" (१. २. ६६) इत्यनेन सूक्ष्मशब्दे ऊतोऽत्वं वा भवति। सण्हअत्था। सुण्ह इत्यूह्यम्। ण्हादेशस्तु '*ण्ह' इत्यधिकारात्॥

किमशोभनमित्याह—

भय्याइ सद्धं वसुदेवमज्जो
बंधूण कंसो सिरिणाहताअं।
तणेहि पुण्णं घअपुण्णघोसं
तणेहिए केसिणमीस! जाअं॥ ४१॥

छाया—

भार्यया सार्धं वसुदेवमज्ञो
बद्ध्वा कंसः श्रीनाथतातम्।
तृणैः पूर्णं घृतपूर्णघोषं
तनिष्यते केशिनमीश यातम्॥

---

* अधिकारसूत्रम्- "श्नष्णस्नह्नह्लक्ष्णां ण्हः" (१. ४ ६९)

---

T— १. 'ति'

हे ईश कृष्ण अज्ञः विष्णोस्तव परब्रह्मत्वमजानन् कंसः श्रीनाथतातं श्रीनाथस्य भवतः पितरम्। श्रीनाथः तातः पुत्रोऽस्येति वा तथा। तं वसुदेवं भार्यया सार्धं बद्ध्वा। केशिनं केशिनामानमसुरं तृणैः पूर्णमत एव घृतपूर्णघोषम्। घृतमित्युपलक्षणम्- घृतक्षीरादिपूर्णम्। यातं तन्निष्यते।

"ऋतोऽत्" (१. २. ७३) अतीतमिदं सूत्रम्। किन्तु विप्रतिपत्तिरस्ति। यत आह- तणेहि, घअपुण्ण। '*किसरतिणं', '¶घिओहाणं' इति हि पूर्वमुदाहृतं "इदृष्यादिषु" (प्रा० प्र० १।२८) इत्यत्र। "ऋतोऽत्" (प्रा० प्र० १।२७) इत्यत्र '$णेउरवअं' इति॥

इति श्रीचिह्नकाव्ये दशमः सर्गः

समाप्तः।

---

* स० १. श्लो० २६. ¶ स० १. श्लो० २७.
$ सं १. श्लो० २५

## एकादशः सर्गः

प्रसक्तकेशिवधम् अक्रूरप्रेषणं तद्द्वारा स्वेनानीतात् स्वमृत्युभूतात् कृष्णात् कंसस्य वधं च वक्तुं सर्गान्तरमारभते—

सिण्णप्पमाही विबुहाण भूए
सिणिच्छरो जम्मगओ व्व णाणं ।
घोसं गओ सो सुमणोहरं तं
पीडेहिए गोउळमुद्धवाळो ॥ १ ॥

छाया—

सैन्यप्रमाथी विबुधानां भुवि
शनैश्चरो जन्मगत इव नृणाम् ।
घोषं गतः स सुमनोहरं तं
पीडयिष्यति गोकुलमूर्ध्वबालः ।

पूतनादीनां गतिमप्राप्यायं शत्रुहनने शक्त इति मत्वा अनेन देवर्षिणा आदिष्टौ मम जीवितहरणैकचित्तौ नन्दघोषस्थौ रामकृष्णौ व्यापादयेति कंसेन नियुक्तः केशी घोषं गतः प्राप्तः ऊर्ध्वबालः क्रोधावेशवशादुच्छ्रितबालधिः सन् गोकुलं पीडयिष्यति । अयमसुरः स्वर्गे भूलोके चोपद्रवकारी महाबलश्चेति सैन्यप्रमाथीत्यादिविशेषणलभ्योऽर्थः ।

"चपेटाकेसरदेवरसैन्यवेदनास्वेचस्त्विवत्" (१. २. ९३) इत्यनेनैतेषु एकारस्य नित्यमित्त्वं सिद्ध्यति । सिण्ण । "सैन्धवशनैश्चरे"

(१. २. ९४) इत्यनेनैतयोः शब्दयोरादेरेच इत्वं भवति। *'सिंधव' इति विष्टपेषणम्। "त्वत् सरोरुहमनोहरप्रकोष्ठातोद्यान्योऽन्ये वश्च क्तोः" (१. २. ९५) इत्यनेनैषु एचोऽत्वं तु विकल्पेन भवति। तदा प्रकोष्ठातोद्यगतयोरैचित्त्वोक्तेः ककारतकारयोः वत्वं च। तत्रैकमुदाहरति-मणोहर। पक्षे मणहर॥

अथ स्वप्रवृत्तिमाह—

तमणु अ गओ भत्तीए हं तए खु भआकिइं
मणहर तओ ताहे थूणो व्व किं खल गूहसे।
उवसरसु पच्चक्खं मं गोअणादु ण दे वहो
सढमहिअमइत्तित्थं ते वअं पसुणेहिमि॥ २॥

छाया—

तमनु च गतो भक्त्याहं त्वयि खु भयाकृतिं
मनोहर ततस्तस्मिन् स्तेन इव किं खल गूहसे।
उपसर प्रत्यक्षं मां गोगणात्त ते वधः
सटामथितमेवेतीत्थं ते वचः प्रश्रोष्यामि॥

हे मनोहर त्वयि भक्त्या अहं त्वरितदर्शनजनन्या हेतुना खु भयाकृतिं तं केशिनमनु गतश्च सन् ततो घोषप्राप्त्यनन्तरं तस्मिन्

---

* स० १. श्लो० १३

---

T— १. 'नुपग'

केशिनो गोकुलोपद्रवसमये इतीत्थं ते वचः प्रश्नोष्यामि । कथं– हे खल दुष्ट सटामथितमेघ बलिष्ठत्वाभिमानिन् स्तेन इव किं गूहसे आत्मानमाच्छाद्य वर्तसे । प्रत्यक्षं तव प्रत्यक्षभूतं मामुपसर । एष तिष्ठामि त्वद्वधार्थम् । अत आगच्छ । न ते वधो गोगणात् । अतोऽस्थाने संभ्रमो न कार्यः ।

"ऊ स्तेने वा" (१. २. ९९) इत्यनेन स्तेनशब्दे एच ऊत्वं वा भवति । थूणो व्व । सुग्राह्यमन्यत् ॥

आजाअं अहिमुहमुच्चअं सआ रे
तं हेसारवमुहरं खु वत्तवत्तं ।
पाएहिं तुह परिताडणे पउत्तं
पाणीहिं गअमह णीचअं च दच्छं ॥ ३ ॥

**छाया—**

आयातमभिमुखमुच्चैः सदा रे
तं हेषारवमुखरं खु व्यात्तवक्त्रम् ।
पादाभ्यां तव परिताडने प्रवृत्तं
पाणिभ्यां गतमथ नीचैश्च द्रक्ष्यामि ॥

तं भगवद्वाकूछरविद्धकर्णम् । अत एव सदा रे तं हेषारवमुखरं व्यात्तवक्त्रं पादाभ्यां तव परिताडने प्रवृत्तं तवाभिमुखमुच्चैरायातं पादाभ्यामपराभ्यामिति सिद्ध्यति, करणाभ्यां तव परिताडने प्रवृत्तं त्वां परिक्षेप्तुमारब्धम् । अथ तव पाणिभ्यां हेतुभ्यां नीचैर्गतं त्वया पाणिभ्यां गृहीत्वा पातितं च केशिनं द्रक्ष्यामि ।

---

T— १. 'अच'

"उच्चैर्नीचैसोरअः" (१. २. १०७) इत्यनेनैतयोरैच अअ इत्यादेशो भवति । उच्चअं, नीचअं ॥

घेत्तूणं पअजुग्गए थणुसए क्खित्तस्स ळोणादिआ
सत्तस्सेसर आअदस्स अ बिळे वत्त भुजाहिं तुहे ।
दंतस्सेअसुसक्करापपअणं ओविट्ठमेसब्भुअं
पुप्फं(?) पाणसमीरपारणमहं दच्छं मुआकोहळा ॥ ४ ॥

छाया—

गृहीत्वा पदयुग्मके धनुश्शते क्षिप्तस्य लवणादिका-
च्छक्तस्येश्वर आगतस्य च बिले वक्रे भुजाहिं तव ।
दन्तश्वेतसुशर्कराप्रपतनमपाविष्टमेषोऽद्भुतं
पुष्पं(?) प्राणसमीरपारणमहं द्रक्ष्यामि मुत्कौतूहलात् ॥

हे ईश्वर लवणादिकाल्लवणाख्यादिकादसुरजाताच्छक्तस्य तथापि पादयुग्मके अपरपादयोरेव गृहीत्वा परिमाणतो धनुश्शते देशे त्वया क्षिप्तस्य प्रबोधं लब्ध्वा पुनरुत्थाय पूर्ववदागतस्य केशिनो वक्रे बिले वक्रात्मके पाताळे दन्तात्मकश्वेतशोभनशर्कराणां प्रपतनं यथा भवति तथा अपविष्टं पुनः स्थूलतामुपगतं केशिनम् । प्राणसमीरपारणम् अत एव अद्भुतम् । तव भुजाहिं श्रीहस्तभोगीन्द्रम् । मुत्कौतूहलादिति द्वन्द्वैकवद्भावः । एषोऽहं द्रक्ष्यामि ।

"तु मयूरचतुर्थचतुर्वारचतुर्दशचतुर्गुणमयूखोलूखलसुकुमारो-दूखललवण*कौतूहले" (१. ३. ५) इत्यनेन मयूरादिष्वादेः स्वरस्य

* 'कुतू' मुद्रितसूत्रपाठः ।

T— १. 'देः अस्य'.

परेण अज्झला सह ओत्वं वा भवति । लोणादिआ । कोहला । पक्षे च सुग्रहत्वम् । उदूहळं, ओहळं । उऊहळं, ओहळं ॥

पुनः करप्रवेशरुद्धप्राणः पतिष्यतीत्येतदाह—

उदूहळं[1] कम्ममहे अ ओहळं
बंधस्स दे[2] जस्स तहा उऊहळं ।
मोक्खस्स[3] सण्णत्थ[4]मुवेअजण्णअं
तिणा तए सो णिहओ पडेहिए ॥ ५ ॥

छाया—

उदूखलं काम्यमखे च उलूखलं
बन्धाय ते यस्य तथा उलूखलम् ।
मोक्षाय सन्न्यस्तमुपेतयज्ञकं
तेन त्वया स निहतः पतिष्यति ॥

स केशी तेन त्वया निहतः पतिष्यति । [6]केनेति विशिनष्टि- उलूखलमिति । यशोदागृहगतमुलूखलं यस्य ते बन्धाय, तेन त्वयेति सम्बन्धः । यस्य ते सम्बन्धीनि काम्यमखे काम्ययागे उलूखलम् उलूखलोपलक्षितानि यज्ञायुधानि, कर्म च । उपेतयज्ञकमित्येतद् अत्रापि सम्बध्यते[7] वा बन्धाय मोक्षविपरीताय भवति । लोकस्य फलाभिसन्धिसहितं कर्म बन्धकमिति स्थितिः । तथा यस्मै सन्न्यस्तं समर्पितम् उपेतयज्ञ[8]कमुलूखलं मोक्षाय । यज्ञ[9]कं तदङ्गायितमुपकरणानि

---

T— १. 'लू' २. 'जे दस्स' ३. 'क्खं स ङण्ण'
४ 'त्थउवे' ५. 'लू' ६. 'तेने'
७. 'ते इत्यत्रापि सम्बध्यते वा' ८. 'ज्ञमुलू'
९. 'ज्ञकः'

च त्वयि अर्पितानि मोक्षायैव भवति न[1] तु बन्धाय । तथा अर्जुनं प्रति वक्ष्यसि– यत्करोषि यज्जुहोषि तत्कुरुष्व मदर्पणं तथा च कर्मबन्धनैर्मोक्ष्यस इति ॥

केशिवधानन्तरं देवानां पुष्पवृष्टिर्भविष्यतीत्येतदाह—

दीहं णिद्दं खिईए णिअरिवुपवरे सप्फसेज्जाइ णीए
देवा वोमे सुतारे सुमरिअ! विजणे जोइणा रे सचापे ।
भत्तीए साहुपत्तागरुअसुकुसुमं दाणवारिस्स हो[2]उ
च्चेअं एदंति अ[3]ज्जा थुइणइसहिअं सोहणा वास[4]हिंति ॥ ६ ॥

छाया—

दीर्घां निद्रां क्षितौ निजरिपुप्रवरे शष्पशय्यायां नीते
देवा व्योम्नि सुतारे स्मृत विजने योगिना रे सचापे ।
भक्त्या साधुप्राप्तागरुकसुकुसुमं दानवारेर्भवतु
च्चेअ इदमिति[5] आर्याः स्तुतिनतिसहितं शोभना वर्षिष्यन्ति ॥

योगिना जीवपरैक्यभावनावता विजने विगतजने स्थले स्थित्वा स्मृत! हे कृष्ण! क्षितौ [6]शष्पशय्यायां निजरिपुप्रवरे केशिनि दीर्घनिद्रां नीते त्वयेति शेषः । आर्याः शोभना देवाः व्योम्नि स्थिताः अथवा व्योम्नि विषये वा । साधुप्राप्तागरुकसुकुसुमं तादृशकुसुमानि नात्रैकवचनविवक्षा । इदं दानवारेरेव भवत्विति बुद्ध्या । स्तुतिनति-

T— १. ‘ न तु तथार्जु ’ २. ‘ होळं चेअं ’ ३. ‘ मज्जा ’
४. ‘ सहीति ’ ५. ‘ तीत्थमार्याः ’ ६. ‘ पुष्प ’

सहितमिति क्रियाविशेषणम् । भक्त्या सह वर्षिष्यन्ति । साधु विशिष्टं, साधु च तत् प्राक्षागरुकक्कुसुमं च विशिष्टं नन्दनोद्यानजातम् अगर्वादि-मिश्रितं शोभनं पुष्पमित्यर्थः । कथम्भूते व्योम्नि– सुतारे शोभन-नक्षत्रोपेते । सचापे इन्द्रचापोज्ज्वले ॥

अह सुगअमअट्ठिओ सुपावो
विदुरसमं खलु दाणणाहमुग्गो ।
वहिअइ महुरं खु रामकण्हे
धणुमहवाअमिहागए करेसु ॥ ७ ॥

छाया—

अथ सुगतमतास्थितः सुपापो
विदुरसमं खलु दाननाथमुग्रः ।
वक्ष्यति मधुरं खु रामकृष्णौ
धनुर्मखव्याजमिहागतौ कुरुष्व ॥

अथ पूतनातृणावर्तबकप्रलम्बारिष्टधेनुकादिवत् केशिनोऽप्यनाग-मदर्शनानन्तरम् । कंस इति विशेष्यसिद्धिः प्रकरणाद् विशेषणवशाच्च । दाननाथं स्वविपरीतं विदुरसमम् अक्रूरमाहूय 'भो भो दानपते मह्यं क्रियतां मैत्रम्' इत्यादिप्रकारं मधुरं वक्ष्यति । तद्वाक्यं संक्षिप्याह–नन्दघोषाद् रामकृष्णाविहागतौ कुरुष्वेति । धनुर्मखव्याजमिति क्रिया-विशेषणम् । कंसो नन्दसुतावेव भवन्तौ विज्ञाय प्रारब्धधनुर्यागदर्श-नार्थं भवद्भिरागन्तव्यमिति मां प्रेषयामास । अत आगम्यतामिति व्याजेन आनय । पश्चात् तूपायैस्तयोर्हतयोः मद्दत्तमर्धराज्यमनुभवि-ष्यतीत्यर्थः । सुगतो बुद्धः ॥

पआगातित्थादिफळस्स हेउ
हे कण्ह पापस्स समापओसि ।
अक्कूरणामो तुइ तुम्मि भत्तो
पुव्वं वि ते दंसणअग्गहो सो ॥ ८ ॥

छाया—

प्रयागतीर्थादिफलस्य हेतो
हे कृष्ण पापस्य समापकोऽसि ।
अक्रूरनामा त्वयि तस्मिन् भक्तः
पूर्वमपि ते दर्शनाग्रहः सः ॥

हे कृष्ण स दाननाथः अक्रूरनामा तस्मिन् प्रयागेत्यादिविशेषणद्वयसिद्धे सर्वकर्मफलदातरि ज्ञानानुग्रहेण बन्धके सर्वकर्मसमापके च त्वयि भक्तः । अत एव कंसप्रेरणात् पूर्वमपि तव दर्शनाग्रहयुक्तः । अत्र पूर्वार्धेन कंसस्य मौढ्यं सूचितम् । उत्तरार्धेन अक्रूरस्य विदुरसमत्वमुपपादितमित्यनुसन्धेयम् ।

"प्रायो लुक् कगचजतदपयवाम्" (१. ३. ८) इति सूत्रमत्र प्रायश्शब्दस्य त्रैविक्रमे बहुलार्थताङ्गीकार इतीदं प्रवृत्तौ उदाहरणतया केचिच्छब्दाः प्रदर्श्यन्ते । देवा, सुतारे, विजणे, सचापे, अगरुसुकुसुमं, दाणवा, सुगअ, सुपावो, विदुर, पआग, समापओ । अखोरित्यनुवृत्तेः असंयुक्तानादिकादिविषयोऽयं लोपादिविधिः । बकुळाधिकारात् क्वचिदादेरपि लोपः स्यात् । यथा- चिह्नेत्यस्य इंधाइ ॥

त्वद्दर्शनानुग्रहवत्वं स स्वयमेव व्यक्तीकरिष्यतीत्येतदाह —

तेणव्व [1]संझाइ वअं गओ सो
　[2]इंधाइ ते पाअजुअस्स भूए ।
पे[3]क्खूण किं णाम ण काहिइव्व[4]
　पच्छा [5]खु पेच्छीहिइ तं [6]तुमं च ॥ ९ ॥

छाया —

तेनैव सन्ध्यायां व्रजं गतः स
　चिह्नानि ते पादयुगस्य भुवि ।
दृष्ट्वा किन्नाम न करिष्यत्येव
　पश्चात् खु द्रक्ष्यति तं त्वां च ॥

तेनैव त्वद्दर्शनाग्रहेणैवापरस्यां सन्ध्यायां व्रजं गतः स अक्रूरः भुवि तव पादयुगस्य चिह्नानि चक्रमत्स्यादिरूपाणि दृष्ट्वैव तदङ्कित-रजस्सु पुनः पुनर्निजशरीरवेष्टनादिकं किं नाम न करिष्यति । पश्चात् तद्दर्शनाग्रहविषयं त्वां द्रक्ष्यति च ॥

दुष्टकंसजनमध्यपातित्वात् तस्य भक्तिपूर्वकं दर्शनमयुक्तमिति न वाच्यमित्याह —

दुट्ठेहि पुण्णे खळकंसमंदिरे
　चिळाअपुण्णे विविणे सिवो व्व जो ।

---

T— १ 'सज्झाइ'　२. 'इधाइ'　३. 'पेक्कूण'
४. 'च'　५ 'वु'　६. 'तुमच'
७. 'वु'　८. 'रः स्यात् स'　९. 'वव्व'

ठिओ किराओ णणु जुत्तमस्स दे
रहेण घोसं पगअस्स दंसणम् ॥ १० ॥

छाया—

दुष्टैः पूर्णे खलकंसमन्दिरे
किरातपूर्णे विपिने शिव इव यः ।
स्थितः किरातो ननु युक्तमस्य ते
रथेन घोषं प्रगतस्य दर्शनम् ॥

दुष्टैः पूर्णे । खलेति तत्र हेतुः । खलस्य कंसस्य मन्दिरे । तत्तज्जन्तुघातकाकिरातपूर्णे विपिने अर्जुनानुग्रहार्थे शिवः किरातः किरातवेषः इव स्थितः । तस्यास्याक्रूरस्य ते दर्शनं ननु युक्तम् । रथेनेति । 'रथेनानय मा चिरं' इति कंसेन नियुक्तोऽक्रूरः तथास्तु कार्यसिद्धिरीश्वराधीनेति तेन घोषं गतः । तस्येत्यर्थः ।

"छागशृङ्खलकिराते लकचाः" (१. ३. १३) इत्यनेन छागादिषु कोरित्यनुवृत्तेः कवर्गस्य यथासंख्यं लकचा भवन्ति । वृत्तावस्य किरातशब्दस्य परमेश्वरवाचकत्वे तु न चकार इत्युक्तम् । तदनुसारेण विकल्पेनोदाहरति- चिळाअपुण्णे, सिवो किराओ ॥

तत्तो गंदिणिणंदणो तुह तणुं संझं[2] व पीअंबरं
कीळागेंदुअसोहिअं मरअगप्पक्खं[3] किसोरिं तह ।

T— १. 'शृङ्गकि' २. 'सज्झं' ३. 'मअरग'

अण्णं रामतणुं ससंकधवळं रत्तिं व णीळंबरं
पेच्छूणं सफळेक्खणो पडहिए पाएसु दिण्णंजळी॥ ११ ॥

छाया—

ततो गान्दिनीनन्दनस्तव तनुं सन्ध्यामिव पीताम्बरां
क्रीडाकन्दुकशोभितां मरतकप्रख्यां किशोरीं तथा ।
अन्यां रामतनुं शशाङ्कधवला रात्रीमिव नीलाम्बरां
दृष्ट्वा सफलेक्षणः पतिष्यति पादयोर्दत्ताञ्जलिः ॥

ततः भवतोर्गोदोहनस्थलगमनानन्तरं गान्दिनीनन्दनः अक्रूरः एवंभूतविशेषणविशिष्टां तव तनुम् अन्यां रामतनुं रामाख्यां तनुं च दृष्ट्वा सफलेक्षणः सन् पादयोः पतिष्यति । सन्ध्यामिव । कुतः– पीताम्बराम् । पीतमम्बरं यस्यामिति सन्ध्यापक्षे विग्रहः । भगवत्तनु-पक्षेऽपि तथास्तु । अर्थस्तु आकाशः पट इति च भिद्यते । किशोरीं कैशोरवयस्सहितामिति रामतनावपि योज्यम् । कथम्भूतां रामतनुं– रात्रिमिव । कुतः– शशाङ्कधवळां नीलाम्बरां शशाङ्केन धवळा रात्रिः । रामतनुस्तु शशाङ्क इव धवळा । नीलं वासो वसाना, नीलाकाशमार्गा इति च अर्थभेद इति ।

"खोः कन्दुकमर*तकमदकले" (१. ३. १५) इत्यनेन एषु खोरादेः कवर्गस्य गकारो भवति । गेंदुअ । शय्यादित्वादेत्वम् । मरअग ॥

अथ अहं किं करिष्यामीत्याह—

---

* 'रकत' इति मुद्रितपाठः ।

पुळअखसिअगत्तं तं करेहिं मऊहिं
अहअपअ भवंतो सो हु गेत्तूण पत्तं ।
हरिससळिळणेत्तं आसिलिट्ठं च काही
परिभवइ जिणा ऊ णो पिसळ्ळो पिसाजी ॥ १२ ॥

छाया—

पुलकखचितगात्रं तं कराभ्यां मृदुभ्या-
मभयप्रद भवान् स हु गृहीत्वा प्राप्तम् ।
हर्षसलिलनेत्रमाश्लिष्टं च करिष्यति
*परिभवति येन ऊ नो पिशाचः पिशाची ॥

दर्शनात् प्रभृति पुलकैः रोमोद्भेदैः रूषितगात्रं हर्षाश्रुसम्पूर्णनेत्रं स्नेनाश्लिष्टं च करिष्यति । चशब्दो विशेषणद्वयसमुच्चयार्थः । स इत्युक्तमतो यच्छब्देन विशिनष्टि- येन भवता हेतुना शरणं प्राप्तं पुरुषम् । पिशाचः पिशाची उपलक्षणमेतत् । सर्वोऽप्युपद्रवहेतुः न परिभवतीत्यर्थः । ऊ विस्मये ।

"चोः खचितपिशाचयोः सल्लौ" (१. ३. २२) इत्यनेनानयोः चोः सकारद्विरुक्तलकारौ यथासंख्यं वा भवतः । खसिअ, पिसल्लो । पक्षे खइअ इत्यादि स्पष्टम् । स्त्रियां क्वचिज्जत्वमपि- पिसाजी ॥

---

* पङ्क्तिरियमादर्शे नास्ति ।

---

T— १. 'भत्त'

दासारेसर तो हळी वि अ तहा काऊण णिन्तो घरं
सावक्किं खु जहाविही सह तए पूएहिइ च्चेअ तं ।
ताहे भुत्तिविहिम्मि सेअपअगा छीरण्णिआ कोहळी
कोहण्डी थइरा सतक्कमिरिआ मुग्गादिअं होहिइ ॥१३॥

छाया —
दाशार्हेश्वर ततो हल्यपि च तथा कृत्वा नयन् गृहं
श्वाफल्किं खु यथाविधि सह त्वया पूजयिष्यत्येव तम् ।
तस्मिन् भुक्तिविधौ सेकपदगा क्षीरान्विता कूश्माण्डी
कूश्माण्डी स्थविरा सतक्रमरिचा मुद्गादिकं भविष्यति ॥

हे दाशार्हेश्वर कृष्ण ततो हली रामोऽपि च यथा भवान् तथा पादयोः पतितस्योद्धरणादि कृत्वा तं श्वाफल्किं श्वफल्कतनयमक्रूरं गृहं नयन् त्वया सह खु सम्भाव्यमेतत् पूजयिष्यति । तस्मिन् पूजाकाले भुक्तिविधौ भोजनानुष्ठाने । सेकपदगा सेकराजपदे अभिषिक्ता भविष्यति । का – क्षीरान्विता क्षीरसम्पृक्ता कूश्माण्डी । बालेति सिद्ध्यति । उपपत्तेः । स्थविरायां वक्ष्यमाणत्वाच्च । यथा बाला तथा स्थविरा कूश्माण्डी च सेकपदगा भविष्यति । कृतत्वङ्मोकेति सिद्ध्यति । तक्रमरिचाभ्यामन्येनाप्युचितद्रव्येण सहितेति विशेषणात् । मुद्गादिकम् । आदिशब्देन पक्वादिसंग्रहः । सेकपदगं भविष्यति ।

"तूर्यदाशार्हशौण्डीर्ये" (१. ४. ६०) इत्यनेनैषु स्तोः इत्यनुवृत्तेः संयुक्तस्य रेफो भवति । दासारेसर । "कूश्माण्ड्यां *ण्ड तु

* 'कूष्माण्ड्यां ण्डश्च तु लः' इति मुद्रितसूत्रपाठः ।

T— १. 'णीतो'

लः" (१. ४. ६४) इत्यनेन कूश्माण्डीशब्दे प्रथमस्य संयुक्तस्य हकारो भवति। द्वितीयस्य तु विकल्पेन लकारः, कोहळी, कोहण्डी। "ओल् *स्थूल-" (१. २. ७२) इत्यादिना पुनरूत ओत्वम् ॥

भक्तं मां प्रत्येवं करिष्यति भगवान् इति पथि परिकल्पितस्य मनोरथस्य सिद्ध्या पुनः सुखी भवत्वक्रूर इत्याह—

आळिट्ठो सहदअवीक्खणेण साअं
णीओ तो णिअघरअं खु साअरं हं।
तेळ्ळोक्केसरहरिणा सुपूइओ तो
सोक्खं सो सुहद मणम्मि जाहिइत्ति[1] ॥ १४ ॥

छाया—

आश्लिष्टः सहृदयवीक्षणेन साकं
नीतस्ततो निजगृहकं खु सादरमहम्।
त्रैलोक्येश्वरहरिणा सुपूजितस्ततः
सौख्यं स सुखद मनसि यास्यतीति[2] ॥

हे सुखद भोगस्वर्गापवर्गद कृष्ण सोऽक्रूर इति निरूप्य मनसि सौख्यं यास्यति। नयनस्पर्शनरसनजन्यसुखानुभवनं तद्विषयमनोमात्रजन्यं सुखमनुभवतीत्यर्थः। तथा निरूप्येत्याह- आश्लिष्ट इत्यादि। त्रैलोक्येश्वरश्चासौ हरिश्चेति विग्रहः। आश्लिष्ट इत्यनेन नीत इत्यनेन पूजित इत्यनेन चास्य सम्बन्धः।

---

* 'स्थूण-' इति मुद्रितसूत्रपाठः।

---

T— १. 'जाहीइ ॥' २. 'स्यन्ति ॥'

"आश्लिष्टे *लठौ" (१. ४. ७१) इति सूत्राद् आश्लिष्टशब्दे युक्तयोः लठौ भवतः । आलिङ्खो ॥

सण्हे तप्पवरे ठिओ खु अह सो पत्तेण भुत्ता सअं
भत्तो कंसाविसेसकम्मविसए पण्हे कए तो तए ।
तस्सुत्तीइ अठड्ढचापजजणं आढत्तमेह्लिं तिणा
आणा वो महदंसणे मइ ठिआ तस्स त्ति वण्णेहिइ ॥१५॥

छाया—

श्लक्ष्णे तल्पवरे स्थितः खु अथ स प्राप्तेन भुक्त्वा स्वयं
भक्तः कंसविशेषकर्मविषये प्रश्ने कृते ततस्त्वया ।
तस्योक्तौ अस्तब्धचापयजनमारब्धमिदानीं तेन
आज्ञा वो मखदर्शने मयि स्थिता तस्येति वर्णयिष्यति ॥

किंविषये प्रश्ने कथं वा वर्णयिष्यतीत्यपेक्षायामाह- कंसेति । चापयजनमिति सामान्येन खलु दृष्टं तस्य कर्मेति प्रसिद्धम् । तत्रेदानीं कंसस्तादृशे कस्मिन् कर्मणि प्रवृत्त इति प्रश्नार्थः । किञ्च एवं धनुर्याग आरब्धे तद्दर्शनार्थं भवतां भवत्प्रधानानां गोपानामाज्ञापनं च मन्मुखेन कृतम् । तत्राभिप्रायो न सर्वचित्तज्ञ त्वां प्रति वाच्यमित्याह- आज्ञा व इति ।

"ठढौ स्तब्धे" (१. ४. ७२) इति सूत्रात् [स्तब्धे संयुक्तयोर्यथासंख्यं ठढौ भवतः । ठड्ढ । "तो ढो रश्चारब्धे तु" (१.४.७३) इति $सूत्राद्] आरब्धशब्दे संयुक्तस्य ध इत्यस्य तु विकल्पेन तकारो भवति । तदानीं रेफस्य ढत्वं च । आढत्तं ॥

---

* 'लधौ' इति मुद्रितसूत्रपाठः ।

$ वलयान्तर्गतो भागः आदर्शे नास्ति ।

---

T— १. 'लढो' २. 'लढौ' ३. 'आलिड्ढो' ४. 'वण्हे'

विइअरहिअ तुज्झ तो सुवक्कं
बहुविहकामतणू अहं खु सोच्छ ।
विउणविउणसोअजोइचित्त-
प्फुरिअ सुहद्धि मणोज्जवेस इत्थं ॥ १६ ॥

छाया—

द्वितीयरहित तव ततः सुवाक्यं
बहुविधकामतनुरहं खु श्रोष्यामि ।
द्विगुणद्विगुणशौचयोगिचित्त-
स्फुरित सुखाब्धे मनोज्ञवेष इत्थम् ॥

हे द्वितीयरहित अद्वितीय । द्विगुणस्य द्विगुणं चतुर्गुणं शौचं येषां ते द्विगुणद्विगुणशौचाः । अनेनाचारनिष्ठता द्योत्यते । ते च ते योगिनः सन्न्यासिनस्तथा । तेषां चित्ते स्फुरित इति तथा । हे एवम्भूतचित्तस्फुरितसुखाब्धे इत्यन्तं वा एकं पदम् । एवमद्वितीयत्वेऽपि परमार्थतः माययोपात्तमनोज्ञवेषक । स्वावस्थावर्णनानन्तरं तव इत्थं वक्ष्यमाणप्रकारं सुवाक्यं सुष्ठु वाक्यं श्रोष्यामि । ननु गोपीनामप्रकाशनाय पिहितकवाटभवने रहस्यावयोरुपांशुव्यवहारमदृष्टस्त्वं कथं श्रोष्यसीत्याशङ्कायामाह· बहुविधेति । कामतः इच्छातः जाताः तनवः कामतनवः । बहुविधाः ताः यस्य सोऽहं तथा । तादृशोऽहं श्रोष्यामि । तथा च तत्रोचितमार्जारवेषेण श्रोष्यामीत्यर्थः ॥

वाक्यप्रकारमुपपादयति—

पट्ठे से होउ आणा अवि अ खु वि जिणा वारहाइच्चसंति
सेक्कं वत्तीससंखं उवगअविबुहा किं व सट्ठाणभट्ठा ।

उव्विग्गासेससाहुं इह मइ तमिमं ताव उव्विण्णचित्तं
विण्हू णाहं विपाणं सविपमपि ण ए कंसमेसो करेमि ॥१७॥

छाया—
पृष्ठे तस्य भवत्वाज्ञा अपिच खल्वपि येन द्वादशादित्यशान्तिः
सैका द्वात्रिंशत्संख्यामुपगतविबुधाः किं वा स्वस्थानभ्रष्टाः ।
उद्विग्नाशेषसाधुमिह मयि तमिमं तावदुद्विग्नचित्तं
विष्णुर्नाहं विप्राणं सद्विपमपि न चेत् कंसमेष करोमि ॥

तस्य कंसस्याज्ञा पृष्ठे भवतु तस्याज्ञां न गणयामि । अपिच नैतावन्मात्रं वधिष्यामि च । तमहमेषोऽहं त्रैलोक्यस्यापि सृष्टिस्थितिसंहारशक्तः सद्विपमपि सकुवलयापीडमपि । अपिशब्देन चाणूरादिसंग्रहः । द्विपचाणूरादिसहितं तमिमं पूर्वमिदानीमपि असाधुकारिणं कंसम् । विप्राणं विगतप्राणं मृतं न चेत् करोमि तर्हि न विष्णुः एवमतिमहत्यां प्रतिज्ञायां किं कारणमिति तद्वधस्यावश्यकर्तव्यतां द्योतयन् कंसं विशिनष्टि । इह लोके उद्विग्नाशेषसाधुं मयि तावत् प्रथममुद्विग्नचित्तम् । अत एव मत्पितृमातृभ्रातृद्रोहिणम् । पुनरपि तच्छब्दापेक्षितं यच्छब्दमादाय विशिनष्टि येनेति । तमिममित्यनेन सम्बन्धः । येन हेतुना द्वादशादित्यशान्तिः । किंवा न केवलमादित्याः येन कालनेमिस्वरूपिणा सर्वेऽपि देवाः स्वस्थानाद् भ्रष्टाः ।

संयुक्तस्योपर्यधश्च लोपप्राप्तौ यथादर्शनं लोपप्रकारमुदाहरति— विइअराहिअ । पानीयादित्वादित्वम् । विइअ । विउण । बारहा । बत्तीस । क्वचित् पर्यायेण— उव्विग्ग, उव्विण्ण इति । यथा बाबीसा इत्युत्तर-

T'— १. 'ण्हुं' २. 'पृष्ठे भवतु तस्याज्ञा'
३. 'लु येन' ४. 'सविअं' ५. 'बाएसा'

श्लोके । काव्यकुल्यादीनामपि [1]कव्वकुळ्ळादिरूपता द्रष्टव्या ॥

गोप्यः कृष्णरामौ मधुरां नेतुमागत इत्यप्रकाशितमपि भगवता कथञ्चिज्ज्ञातवत्य इति तदानीं तदवस्थामत्यन्तसंक्षेपेणाह—

अम्हाणं खणविरहे वि अस्स दुक्खं
सज्झं णो किमुअ गअस्स कंसपासं ।
[2]वावीसादहणवअट्ठवासवासो
गोवीओ महुरपुराइ कोसं[3]हिन्ति ॥ १८ ॥

छाया—

अस्माकं क्षणविरहेऽप्यस्य दुःखं
सह्यं नो किमुत गतस्य कंसपार्श्वम् ।
द्वाविं[4]शतिदशनवाष्टवर्षवा[5]सो
गोप्यो मधुरापुरि क्रोशिष्य[6]न्ति ॥

अस्माकमस्य कृष्णस्य क्षणविरहेऽपि यद् दुःखं तदप्यसह्यमेव । किं पुनः कंसपार्श्वं गतस्य । मधुरापुरि द्वाविं[7]शतिदशनवाष्टवर्षवासे दुःखमसह्यम् । अवश्यं पुरस्त्रीजननर्माक्षिप्तचित्ततया शीघ्रं नागमिष्यति । अतस्तद् द्वाविंशतिवर्षवासो भविष्यति, ततोऽपि किञ्चिन्न्यूनवर्षवासो वा । सर्वथापि तावन्तं कालं प्राणान् धारयितुं न शक्नुम इत्यर्थः । इति गोप्यः क्रोशिष्यन्तीतिशब्दाध्याहारः । रोदिष्यन्तीत्यर्थः ॥

मत्तंडे उअअं गए रहवरं अक्कूरसंचोइअं
आरूढस्स सहग्गअस्स अ भआ कंसा सगव्वं तओ ।

T— १. 'कव्वककळकुळळा' २. 'वासीसा' ३. 'सहीति'
४. 'शदशरं नव' ५. 'वासे' ६. 'ष्यति'
७. 'शदश'

णंदंज्जाणुगअस्स दे दरिसणं ण्हाणे किणो होहिइ
उच्चित्ताअरिसप्फुरन्तवपुणो सावल्किणो ऊ जळे ॥ १९ ॥

छाया —

मार्ताण्डे उदयं गते रथवरसक्रूरसञ्चोदित-
मारूढस्य सहाग्रजस्य च भयात्कंसात्सगव्यं ततः ।
नन्दाद्यनुगतस्य ते दर्शनं स्नाने किं नो भविष्यति
उच्चित्तादर्शस्फुरद्वपुषः श्वावल्केरू जले ॥

ततः दुःखस्वपनादेरनन्तरं मार्ताण्डे उदिते उदयं गते सति कंसाज्ञानादरणेऽपि तद्वधार्थमक्रूरोपनीतं रथवरमारोक्ष्यसि । तदा च स सारथ्यमाचरिष्यति । एवमक्रूरसञ्चोदितं रथवरमारूढस्य, रामोऽप्यारोक्ष्यति । अतः सहाग्रजस्य ते दर्शनं श्वावल्केः । किणो इति प्रश्ने । किं भविष्यत्येव । ऊ विस्मये । आश्चर्यमिदम् । सहगतस्य दर्शने किमाश्चर्यम् । स्नाने माध्यन्दिनस्नानकाले । को विशेषः- जले यमुनातीरे स्थले साग्रजे त्वयि रथस्थे स्थिते सति जले तथैव प्रकारान्तरेण च तव दर्शनमाश्चर्यजनकमेवेत्यर्थः । कंसाज्ञापालकैर्नन्दाद्यैः किं करिष्यत इत्यपेक्षायामाह- कंसाद् भयात् सगव्यं क्षीराज्यादिगव्यसहितनन्दाद्यैरनुगतस्येति । पुनरपि विशिनष्टि- उच्चित्तेति । उत्कृष्टशुद्धतरचित्तदर्पणे स्फुरद्वपुष इति ।

"र्शषतप्तवज्रेष्वित्" (१. ४. ९८) इति सूत्रादेषु चतुर्षु संयुक्तस्यान्त्यहलः प्रागित्वं वाच्यम् । दरिसणं । आअरिस । सुअरिसणमित्युत्तरश्लोके । पक्षे दंसणमित्याद्यपि द्रष्टव्यम् । वरिसेत्यादि नोदाहृतम् ॥

---

T— १. 'णंदं जाणु'

जले दर्शनप्रकारमुपन्यस्यति—

सुअरिसणमुहेहिं मुत्तिमन्तेहि मुत्तिं
पणअमहमणाणं ते अळब्भं सिरीमं ।
हलिफणिपइअंके संठिअं णीळिमाइं
णिअहिइ मुइरो सो इत्थमज्जो कमेण ॥ २० ॥

छाया—

सुदर्शनमुखैर्मूर्तिमद्भिर्मूर्तिं
प्रणतमघवतां तेऽलभ्यां श्रीमतीम् ।
हलिफणिपत्यङ्के संस्थितां नीलिमवतीं
द्रक्ष्यति मुद्वान् स इत्थमार्यः क्रमेण ॥

जले इति पूर्वश्लोकादाकृष्यते । सः अक्रूरः मुद्वान् सन्तोषयुक्तः सन् इत्थंभूतां ते मूर्तिं क्रमेण जले द्रक्ष्यति । आदौ रथस्थां मानुषीं पूर्ववदेव पुनरुत्तरश्लोकवक्ष्यमाणप्रकारेण द्रक्ष्यतीत्यर्थः । अत एवार्यः पूज्यः । कथम्भूतामिति विशिनष्टि- मूर्तिमद्भिः सुदर्शनादिभिरायुधैः ।

प्रणतमघवतामित्यादीनां "[1]मन्तमणवन्तमाआलुआलइरइल्ल उल्लइन्ता मतुपः" (२. १. १.) इत्यनेन मतुप्प्रत्ययस्य एते दश आदेशा विधीयन्ते । मुत्तिमन्तेहि, महमणाणं, सिरीमं, णीळिमाइं, मुइरो । पञ्च पूर्वमेव दत्तोदाहरणाः ॥

---

T— १. 'मन्तमणमवन्तमालआआअइरइल्लइन्ता मतुपः'।

मनुष्यवेषदर्शनं सिद्धवत् कृत्वा, भ्रमरूपद्वितीयं दर्शनं, सुदर्शन-मुखैरिति पूर्वश्लोकोक्तामानुषसकळविष्णुदर्शनं तृतीयं चाह—

पेच्छूणं सविसेससेइमजुअं गंगं सअं आगअं
काळिंदी सविसेसणीळिमजुआ आलेट्ठुमग्गे ठिआ।
णो णो एस फणीसरो पुण अमू अस्संकओ मावई
भग्गं णेत्तिअमस्स तत्तममळो बम्हो खु एक्को अहो ॥२१॥

छाया—

दृष्ट्वा सविशेषश्वेतिमयुतां गङ्गां स्वयमागतां
काळिन्दी सविशेषनीलिमयुता आश्लेष्टुमग्रे स्थिता ।
नो नो एष फणीश्वरः पुनरयमस्याङ्कगो मापतिः
भाग्यं नैतावदस्य तत्त्वममलं ब्रह्म खु एकमहो ॥

अनन्तस्य अत्यन्तधवलत्वमात्रं, विष्णोरत्यन्तनैल्यं गङ्गायमुनयोः सङ्गतिं च गृहीत्वा एवं गङ्गायमुनाविग्रहविषयं भ्रमज्ञानमनुभूय पुनस्ते सकळामानुषविष्णुरूपमनुभविष्यतीत्यर्थः । नो नो इति । नो नेयं गङ्गा । नो नेयं यमुना । किन्त्वेष फणीश्वरोऽनन्तः । अयं मापतिः श्रीपतिः । अहो आश्चर्यं भाग्यं ममेति शेषः । तत्त्वं नैतावच्चेत् किं पुनस्तत्त्वमित्याह— अमलं मायातत्कार्यमलरहितम् अत एव एकं ब्रह्म विष्णोस्तत्त्वमिति ।

"किमिदमश्च डेत्तिअडित्तिळ*डेद्दहः" (२. १. ३.) इत्यनेन

* 'एद्दहम्' इति मुद्रितपाठः ।

T— १. 'ज' २. 'मंगे'

किमिदंभ्याम् एतत्तयद्भ्यश्च परस्य वतुप्प्रत्ययस्य डानुबन्धा एते आदेशा भवन्ति। "एतल्लुक् च —" (२. १. २) इत्यनुवृत्तेः एतदो लुक्। डानुबन्धादन्त्यस्य स्वरादेर्लुक् च भवति। तत्रैतच्छब्दे डेत्तिअमिति। अत्रोदाहरणं- एत्तिअं। तत्रैव डित्तिलडेद्दहयो-रुदाहरणं- इत्तिळं, एद्दहं वि- एतत्पूत्तरश्लोके॥

पूर्वश्लोकोक्तां तत्त्वव्यवस्थामुपपादयति —

पुव्वं रहे जह तहेव्व जळे वि दिट्ठं
जं तं ण तत्तमिह इत्तिळमेव्व रूवं।
णो एद्दहं वि खळु तं विअ चिंतणाए
बम्हो खु रूवरहिदं ति णमेहिए सो॥ २२॥

छाया—

पूर्वं रथे यथा तथैव जलेऽपि दृष्टं
यत् तन्न तत्त्वमिहैतावदेव रूपम्।
नो एतावदपि खलु तदिव चिन्तनायां
ब्रह्म खु रूपरहितमिति [3] नंस्यति सः॥

सोऽक्रूरः खु निश्चये। इति निश्चित्य [4] नंस्यति- स्तुति-रुपलक्षिता। स्तुतिं च करिष्यति। कथं निश्चित्येत्याह- यथा रथे तीरस्थं रूपं विष्णोर्दृष्टं तथैव जलेऽपि यद् दृष्टं तन्न तत्त्वं परमार्थ-स्वरूपम्। तस्य रूपान्तरेणानेन बाधितत्वात्। किन्तु एतावदेव रूपम् अनन्तोत्सङ्गस्थं चतुर्भुजं मूर्तिमद्भिर्निजायुधैरन्यैश्च सनकादिभिश्च

---

T— १. 'वृत्तेः डानुबन्धद्वेतो(तयो)रन्त्यस्वरादे'
२. 'डेत्ति' ३,४. 'नमिष्यति'

सेवितं तत्त्वम् । निरूपणे एतावदपि न तत्त्वम् । पूर्वरूपवद् विग्रहवत्त्वात् । अपितु ब्रह्मैव निष्कळरूपमिति शेषः, तत्त्वम् । तत्र रूपरहितमिति हेतुः । एतदुक्तं भवति– असान्निध्येन बिम्बितत्वाभावे सति रूपैक्याज्जलगतवत् स्थलगतमपि मानुषं रूपं न तत्त्वम् । अमानुषमपि तथा विग्रहवत्त्वाद् वर्णादियोगाच्च मानुषवदेव । निष्कळस्य परमार्थसतो न विग्रहः नापि रूपरसादियोगः । अतस्तदेव तत्त्वमिति । एवं विषयासंस्पर्शेऽपि निष्कळस्वरूपब्रह्मानन्दाब्धेः स्थूलसूक्ष्मतारतम्योपेतविग्रुड्रूपत्वाद् ब्रह्मलोकादिलभ्यरूपरसादिजन्यसुखानां तस्य परमपुरुषार्थरूपत्वं च श्रुत्यादिप्रामाण्यात् सिध्यतीत्यनुसन्धेयम् ॥

चरितशेषं प्रतिपादयंस्तौति—

भत्तं विसज्जिअ सगोवअणस्स तुज्झ
मज्झण्णकाळविगमे महुरं गअस्स ।
पासाअणारिणअणोप्पळअच्चिअस्स
किं तुम्हकेरअवअस्स वहो वि कज्जो ॥ २३ ॥

छाया—

भक्तं विसृज्य सगोपजनस्य तव
मध्याह्नकालविगमे मधुरां गतस्य ।
प्रासादनारीनयनोत्पलार्चितस्य
किं युष्मदीयवचसो वधोऽपि कार्यः ॥

अक्रूरस्यानुग्रहं कृत्वा पुनरपि रथेन गत्वा मध्याह्नकालस्य

T— १. 'पंर' २. 'रवितथेन'

विगमे गमने अपराह्णकाले भक्तम् अहं भवद्भ्यां रहितो न यास्यामीति निर्बन्धेन विसृज्य सगोपजनस्य वयस्यैर्गोपजनैः सहितस्य तैः सह मधुरां प्राप्तस्य तदानीमतिथिसत्कारानुरूपं प्रासादस्थस्त्रीभिः स्वकीय-नयनोत्पलैरर्चितस्य । युष्मदीयवचा इति रजकोऽपि विवक्षितः । तस्य रजकस्य वधोऽपि कार्यः किं न केवलमन्येषामिति ।

"केर इदमर्थे" (२. १. ८) इति सूत्रादिदमर्थे विहितस्य छप्रत्ययस्य केर इत्ययमादेशः सिध्यति । तुम्हकेरअ ॥

मरिष्यमाणस्य वस्त्रभारानतकन्धरस्य रजकस्य स्वमरणनिमित्त-जल्पनं तावदाह—

तुम्हकेरमपि अम्हकेरअं
णो इणं खु परकेरमप्पअ ।
राअकेरमपि मूढ अत्थसे
गोप काणणअ किं ण ळज्जसे ॥ २४ ॥

छाया—

युष्मदीयमप्यस्मदीयं
नो इदं खलु परकीयमल्पक ।
राजकीयमपि मूढ अर्थयसे
गोप काननग किं न लज्जसे ॥

इदं वस्त्रजातं नो युष्मदीयम् । अस्मदीयमपि नो खलु नैव । अपि तु परकीयम् । भवतु परकीयं तत्र को दोषः । तत्राह– राज-कीयम् । राज्ञ इदं वस्त्रजातमर्थयसे अल्पक राजोपयुक्तजीर्णवस्त्रस्यापि

अयोग्य । कुतः— गोप काननग मूढ अज्ञातजीवितोपाय किं न लज्जसे । राजद्रव्ययाचने लज्जां न प्राप्नोषि कथम् इत्यर्थः ।

"राजपराङ्डिकडकौ च" (२. १. ९) इति सूत्राद् राजन् पर इत्येताभ्यां परस्येदमर्थप्रत्ययस्य डितौ इक अक इत्येतौ क्रमेण भवतः । चकारात् केर च । परकं । राअकेर । राइकं । परकेरमित्यपि द्रष्टव्यम् ॥

पूर्वश्लोके अर्थात्सिद्धं वस्त्रप्रार्थनमनूद्य रजकवधमाह—

वत्थपत्थणमनुद्धअं अहा
जप्पिणं अह खरव्व दूसरं ।
वत्थसोहणविहिस्स राइणो
काहिसिव्व रअअं जमं गअं ॥ २५ ॥

छाया—

वस्त्रप्रार्थनमनूद्धतमघा-
ज्जल्पिनमथ खरवद् दुस्स्वरम् ।
वस्त्रशोधनविधये राज्ञः
करिष्यसीव रजकं यमं गतम् ॥

अथ उद्धतं राजरजकोऽहमित्याद्यौद्धत्ययुक्तं वस्त्रप्रार्थनमनु भवतो वस्त्रप्रार्थनस्य पश्चात् । न केवलमदातारम् अघात् पापात् तुम्ह-केरमित्यादिप्रकारेण जल्पिनं दुर्भाषणं कुर्वन्तं खरतोऽपि कश्मल-

T— १. 'मपि'

रजकं, गमिष्यतो राज्ञः कंसस्य वस्त्रशोधनविधय इव यमं गतं प्राप्तं करिष्यसि। इति पूर्वश्लोकस्यात्र सम्बन्धः। 'रजकस्य कराग्रेण शिरः कायादपाहरत्।' इति श्रीभागवत उक्तम्।

"वर्वतेः" (२. १. ११) उपमानार्थवतिप्रत्ययस्य अस्मात् सूत्राद् रित् व इति भवति। रित्त्वादेव द्वित्वं च। खरव्व॥

सस्सिट्ठा अग्गअस्साणुगअजणपिआ वत्थजाआउ सिट्ठं
मोत्तूणं पत्तगेहं तुमम्ह मुइओ सो सुदामक्खभत्तो।
अग्घं अग्घं ति पूअं करिअ खु भणिएत्थं सअं देहिए दे
पुप्फं पुप्फत्तजुत्तं विअ भवउ सआ देहआ माळिमात्ता॥

छाया—

स्वस्येष्टादग्रजस्यानुगतजनप्रियाद् वस्त्रजाताच्छिष्टं
मुक्त्वा प्राप्तगेहं त्वामथ मुदितः स सुदामाख्यभक्तः।
अर्घ्यमर्घ्यमिति पूजां कृत्वा खु भणित्वेत्थं स्रजं दास्यति ते
पुष्पं पुष्पत्वयुक्तमिव भवतु स्रग् देहगा मालात्वाप्ता॥

एवम्भूताद् वस्त्रजाताच्छिष्टं वस्त्रजातं मुक्त्वा त्यक्त्वा सुदामनाम्नो भवनम् अयं मद्भक्त इति प्राप्स्यसि। एवं कृत्वा प्राप्तगेहं त्वां स सुदामाख्यो भक्तो भक्तानां मध्ये सुदामसंज्ञो भक्तो मुदितः सन्तुष्टोऽर्घ्यमर्घ्यम् आदरवशाद् द्विरुक्तिः, अर्घ्यमिदमर्घ्यमिदमिति उक्त्वा पूजां कृत्वा इत्थं भणित्वा ते तुभ्यं विशिष्टां स्रजं दास्यति खु।

---

T— १. 'मत्ता'

भक्तत्वात् संभाव्यमेतत् । कथं भणित्वा– पुष्पत्वयुक्तं पुष्पभावोपेतं पुष्पत्वधर्मोपेतम् । मया समर्पितं पुष्पमिव मालात्वमाप्ता मालात्वं प्राप्ता स्रक् ते तत्र देहगा शरीरगा भवतु इतीत्थमुक्त्वा स्रजं दास्यति । अत्र ते इत्यस्य एवं यथोचितं पूजामित्यनेन दास्यमीत्यनेन देहगेत्य-नेन च सम्बन्धो द्रष्टव्यः । अग्रजस्येति इष्टादित्यत्रानुषङ्गः ।

"त्वस्य तु डिमात्तणौ" (२. १. १३) इति सूत्राद् भावार्थस्य त्वप्रत्ययस्य तु वा डिदिमात्तणौ सिध्यतः । असिद्धिपक्षे पुप्फत्तजुत्तं । सिद्धिपक्षे माळिमात्ता । त्तणेति दत्तोदाहरणं पूर्वम् ॥

भगवतोऽनन्तरभाविनीं प्रवृत्तिमाह—

रिज्जिं तिवक्कं धणुहं च दीहरं
काऊण वक्कं अहिअं सजीअअं ।
संछीदिआणप्परअं खु काहिसि[2]
उद्दिग्घदुक्खं णिववक्कमाणसं ॥ २७ ॥

छाया—

ऋज्वीं त्रिवक्रां धनुश्च दीर्घं
कृत्वा वक्रमधिकं सज्याकम् ।
संछिद्यानलपरवं खु करिष्यसि[3]
उद्दीर्घदुःखं नृपवक्रमानसम् ॥

भक्त्यादिवरं दत्त्वा ततो मालाकारभवनान्निष्क्रम्य पुनरपि

---

T— १. 'मत्ता' २. 'सिं दिग्व' ३. 'सि दीर्घदुःखार्णववक्र'

वयस्यैः सह मथुरायां सञ्चरन्तं कंसकल्पिताङ्गरागहस्तायाः त्रिवक्रायाः हस्तादङ्गरागं परिगृह्य तद्दानफलं तदैव दर्शयंस्तां त्रिवक्रां ऋज्वीं पदेन तत्पादं स्थिरीकृत्य चिबुकगताङ्गुलिद्वयेन शरीरमुन्नमय्य ऋज्वीं करिष्यसि । एवं त्रिवक्रां ऋज्वीं कृत्वा धनुश्शालायां गत्वा पूजितं दीर्घधनुरधिकमत्यर्थं वक्रं च कृत्वा तत् सज्याकं च कृत्वा अनल्पो रवो यथा भवति तथा संछिद्य नृपवक्रमानसं नृपस्य कंसस्य वक्रं कुटिलं मानसं मन उद्दीर्घदुःखं दीर्घदुःखाकारेण परिणतमेव करिष्यसीत्यर्थः ।

"रो दीर्घात्" (२. १. २४ ) इति सूत्राद् दीर्घशब्दात् स्वार्थे रो भवति । दीहरं, उद्दिग्घदुःक्खं । णिव इत्यस्य कृपादित्वादित्वम् ॥

णवरिअ भुमअं व दक्खसंठं
तुह भमअं अवरं च चावखंडे ।
धरिअ सुमुह तेहि कामपाळो
तुवमपि रक्खिवहं तणेहिहेस ॥ २८ ॥

छाया—

अनन्तरं भ्रुवमिव दक्षसंस्थां
तव भ्रुवमपरां च चापखण्डौ ।
धृत्वा सुमुख ताभ्यां कामपालः
त्वमपि रक्षिवधं तनिष्यथ ईश ॥

ईश हे ईश सुमुख कृष्ण सलीलचापभञ्जनादनन्तरं तव दक्षसंस्थां भ्रुवमिवापरां चैव भ्रुवं चापखण्डौ धृत्वा ताभ्यां चापखण्डाभ्यां

T— १. ' ष्यथ ॥ '

कामपालो रामस्त्वमपि त्वं च रक्षिवधं गृह्यतां हन्यतामित्यागतानां च[1] रक्षिणां वधं तनिष्यथः करिष्यथ इत्यर्थः । यथा शतमाभ्यां दीयतामिति वाक्याद् विभज्य पञ्चाशत् पञ्चाशद्दीयते एवमिहापि ताभ्यामित्युक्तौ एकेन खण्डेन कामपालः, एकेन खण्डेन त्वमिति सिध्यति । तथा चापखण्डौ धृत्वेत्यत्र च ।

* "त्डुमअडमऔ भ्रुवः" (२. १. २५) इति सूत्राद् भ्रूशब्दात् स्वार्थे उमअ अमअ इत्येतौ डितौ सिध्येताम् । भुमअं, भमअं ॥

इत्यादि कृत्वा पुनरस्तमिते आदित्ये मधुराया उपवने पूर्वमेव शकटैर्विरचितं पितुर्गृहं यास्यथ इत्याह—

हंतूण कंसपहिअं बळमत्तळीळं
तेहिं च्चिआह पुळऊण पुरीसमिद्धिं[2] ।
सक्कुंकुमोज्जळसुगंधसआइरम्मा
तुम्हे पआहिह सुपत्तळ[3]रण्णआणं ॥ २९ ॥

छाया—

हत्वा कंसप्रहितं बलमात्तलीलं
ताभ्यामेव[4]ाथ दृष्ट्वा पुरीसमृद्धिम् ।
स[5]त्कुङ्कुमोज्ज्वलसुगन्धस्रगादिरम्यौ
युवां प्रयास्यथः सुपत्त्रारण्यगानः ॥

* 'डुमअडमऔल् भ्रुवः' मुद्रितपाठः ।

T— १. 'च परमर्क्षिणां वधं' २. 'द्धी'
३. 'त्तउर' ४. 'मेव ह' ५. 'सकु'

तदानीं धनुर्भङ्गादिकं श्रुत्वा भवन्तौ हन्तुं कंसः सुघोरं बहुबलं प्रेषिष्यति । युवां तद् बलं ताभ्यामेव धनुःखण्डाभ्यामेव सलीलं हत्वा तत्र तत्र सञ्चरणेन पुरीसमृद्धिं दृष्ट्वा सुपत्रारण्यगानः प्रयास्यथ इति सम्बन्धः । शोभनपत्रादिसहितोपवनारण्यगतं पितुः शकटं शकट-निर्मितं भवनं प्रयास्यथः गमिष्यथः । सत्कुङ्कुमेति पुरीसमृद्धिदर्शन-कालगतं विशेषणम् । अद्यतनं कर्म कृतमिति त्रिवक्रादत्तेन सत्कुङ्कु-मेन सत्कुङ्कुमोपलक्षितदिव्याङ्गरागेणोज्ज्वलाभिः सुगन्धाभिः सुदाम-दत्ताभिः स्रग्भिर्मालाभिस्तथा रजकापहृतसुमृदुनिर्मलवासोभिश्च विग्रहा-वलङ्करिष्यथः । तेन सत्कुङ्कुमोज्ज्वलसुगन्धस्रगादिभी रम्यौ ।

"लो वा विद्युत्पीतपत्रान्धात्" (२. १. २६) इति सूत्रादेभ्यः स्वार्थे लकारो वा भवति । पत्तळ । [1]अंधळो । शिष्टौ पूर्वमेव 'खे विज्जुळा वारिवहं व पीअळं' (स० ४. श्लो० १३) इति श्लोके दत्तो-दाहरणौ[2] ॥

पिअरगोवसमीवगआ तओ
उपवणे खु णिसाइ पअण्णहू ।
सुसुहमेव्व सुपेहिह दे रिवू
असुहमेव्व विवेअदिअंधळो ॥ ३० ॥

छाया—

पितृगोपसमीपगतौ तत
उपवने खु निशायां पयोन्नभुजौ ।

---

T— १. 'अवंळो' २. 'रणम्'

सुसुखमेव स्वप्स्यथस्ते रिपु-
रसुखमेव विवेकदृगन्धः ॥

ततः शकटप्राप्तेरनन्तरं युवां निशायां पितृगोपसमीपगतौ पितुः वृद्धानां च गोपानां समीपं गतौ प्राप्तौ पयोन्नभुजौ गोक्षीरपक्कमोदनं पित्रा दत्तं भुञ्जानौ सन्तौ पुनः सुसुखं सुतरां यथा सुखं भवति तथा स्वप्स्यथः । तदा ते रिपुः कंसः असुखमेव सुखाभावोपेतमेव स्वप्स्यतीति शेषः । धनुस्तद्रक्षिबलनाशश्रवणेन निश्चितप्रायस्ववधो भीतो दुःखस्वप्नदर्शनेन ततोऽतिभीतोऽत्यल्पनिद्रो निद्राव्यपदेशेन रात्रिमतिवाहयिष्यतीत्यर्थः । तत्र हेतुः- विवेकदृगन्ध इति । विष्णुः परमात्मा स एव च ममात्मा न पुनरसुरो मनुष्यो वाहमित्येवंरूपा विवेकदृग् दृष्टिः अन्धा यस्य स तथोक्तः ॥

ह्णाणं कत्तुं पभाए सुवसणघुसिणोप्पुण्डपिच्छच्छकेसा
सामस्सेआ अ तुम्हे मुरअमुहरअं[1] मळ्ळअं संसुणन्ता[2] ।
दारं पत्तं सळीळं महिअ कुवळआमेळमंबट्ठजुत्तं
रंगं संकाउहासोळ्ळसिअसुवळआमेळआ[3] जाहिहेसा ॥३१॥

छाया—

स्नानं कृत्वा प्रभाते सुवसनघुसृणोत्पुण्ड्रपिञ्छाच्छकेशौ
श्यामश्वेतौ[4] च युवां मुरजमुखरवं मल्लजं संशृण्वन्तौ ।
द्वारं प्राप्तं सलीलं मथित्वा कुवलयपीडमम्बष्ठयुक्तं
रङ्गं शृङ्गायुधावासोल्लसितसुवलयापीडकौ यास्यथः ईशौ ॥

---

T— १. 'महुरअं' २. 'न्ताम्'
३. 'ळसि' ४. 'तौ यु'

श्यामश्वेतौ मरतकवद् रूप्यवच्चातीव शोभमानौ युवां रामकृष्णौ सुखस्वापानन्तरं प्रभाते प्राप्ते स्नानं कृत्वा स्ववर्णानुरूप्येण स्वरूपतश्च शोभने नीलपीते वसने ययोस्तौ सुवसनौ तथा घुसृणेन कुङ्कुमेन उत्पुण्ड्रम् ऊर्ध्वपुण्ड्रं ययोः, पिञ्छोपेताः अच्छाः श्लक्ष्णाश्च केशा ययोरिति च बहुव्रीहिः। सुवसनौ तावेव घुसृणोत्पुण्ड्राविति तथा तौ च तौ पिञ्छाच्छकेशाविति सुवसनघुसृणोत्पुण्ड्रपिञ्छाच्छकेशौ। अत्र मयूरपिञ्छधारणमेव वा विधेयम्। न तु द्वयोस्तदिति। तत्तु रामे छत्रिन्यायेन प्रयुज्यते। स्नात्वा तादृशौ च भूत्वा द्वारप्राप्तं कंसेन स्ववधार्थं मल्लरङ्गद्वारे प्रतिष्ठापितं कुवलयापीडं गजमम्बष्ठयुक्तम्। सलीलमिति क्रियाविशेषणम्। मथित्वा गजम् अम्बष्ठांश्च हत्वा। शृङ्गायुधौ- हस्तिपवधकरणत्वं शृङ्गयोरायुधपदेन सूच्यते। नचिरमृतद्विपशृङ्गोद्धरणादेव आस्योल्लसितावेव सुवलयापीडकौ शोभनसुवर्णनिर्मितवलयतदुपलक्षिताङ्गुलीयाद्यलङ्कारयुक्तौ रङ्गं यास्यथ इत्यर्थः। ईशाविति विस्मयाद् विशेषणम्। स्नानादिसर्वव्यवहारगतं मल्लजं मल्लप्रवर्तितं मुरजादिरवं सम्यक् शृण्वन्ताविति।

"तुमत्तुआणतूणाः क्त्वः" (२. १. २९) इत्यनेन क्त्वाप्रत्ययस्य तुं अत् तुआण तूण इति चत्वार आदेशा विधीयन्ते। कत्तुं, महिअ, घेत्तुआणं। "क्त्वासुपोस्तु सुणात्" (१. १. ४३) इत्यनुस्वारः। "छागशृङ्ग-" (१. ३. १३) इत्यादिना संकेति ककारः। तूण इति दत्तोदाहरणम्। "क्त्वस्तूणं" (१०।१३) इति वाररुचसूत्रात् सिद्धावस्थानुसारेण वलोपेन कत्ता इत्याद्यपि द्रष्टव्यम् (?)॥

गोवाला[1] घेत्तुआणं कुणइ सुसमरं वेळ्ळहळ्ळा णिवत्थं
राअत्थं आम भद्दं कुणिमु करगअं गोसुंपुंछं[2] सुमळ्ळ ॥

T—'पा' २. 'सुअच्छं'

हुं जुद्धं दे सहाहं कुणमि अणुइअं बाळओ हं वि बाळो
इत्थं चे सच्चमित्थं सुणहिमि वअणं तुज्झ चाणूरअस्स ॥

छाया—

गोपालौ (गोर्वालानिति च) गृहीत्वा कुरुतं सुसमरं विलासिनौ नृपार्थं
राजार्थम् आम भद्रं कुर्वः करगतं गोसुपुच्छं सुमल्ल ।
हुं युद्धं त्वया सहाहं करोम्यनुचितं बालकोऽहमपि बालैः
इत्थं चत् सत्यमित्थं श्रोष्यामि वचनं तव चाणूरकस्य ॥

तव रङ्गं प्राप्तस्य चाणूरकस्य चेत्यध्याहारः । इत्थम् इत्थंभूतं वचनम् । तत्रागतोऽहं श्रोष्यामि । कथम्भूतम्—हे गोपालौ हे विलासिनौ । युवयोर्विलासः स्वल्पकालमित्याशयः । नृपार्थं कंसप्रीतये । हस्तादिषु गृहीत्वा सुसमरं शोभनं समरं नियुद्धं कुरुतम् । राजार्थमित्यादि भगवद्वचनम् । आमेत्यनेन तदुक्तिमन्यथाकुर्वन्नङ्गीकरोति । हे सुमल्ल इति परिहासाभिप्रायेण सम्बोधनम् । गोर्वालान् गोवालधीन् गृहीत्वेत्यत्र तद्ग्रहणं कार्यमिति त्वद्वचनं भद्रमित्यर्थः । तथा च युद्धं कार्यमिति यदुक्तं तद्भद्रमिति सिध्यति । उत्तरत्र भगवदुक्तिवशादेव व्याख्यातम् आम भद्रत्वादुचितत्वात् तदङ्गीकुर्मः । आमेत्यनेन द्योतितं स्पष्टयति—राजार्थं गोसुपुच्छं गवां शोभनं पुच्छं पुच्छानीति यावत् । करगतं करगतानीति यावत् कुर्वः । गोपालत्वेऽपि बालत्वान्न दृढग्रहणसामर्थ्यमित्यर्थः । हुमिति भगवदुत्तरोक्तिनिवारणार्थम् । मा मा एवमन्यथीकृत्य ब्रुवीथाः । राजाज्ञया त्वया

---

T— १. 'पा'    २. 'लकः'
३. 'द्धः'    ४. 'पा'

अहं युद्धं करोमि। मुष्टिकेन च राम इति शेषः। इत्थं चेदेवं कुवलयापीडादिहन्तापि त्वं बालश्चेदहमपि बालः। बहिरेव त्वं बालः। अन्तस्तु कठोर एव। रामोऽपि तथेत्यर्थः। सत्यमिति भगवद्वचनम्। सत्यं त्वं बाल एव। यत एवमसाध्यं साधयितुमुद्युक्त इत्यभिप्रायः।

"आम अभ्युपगमे" (२. २. ३२) इति सूत्रादभ्युपगमार्थः। आम इत्यस्य प्रयोगः संस्कृते प्राकृतेऽपीति केचित्। वक्रादित्वात् सुपुंछमिति बिन्दुप्रयोगः॥

णिउ[1]ज्झे आढत्ते पअपअळणाईहि सरए
सकट्ठोत्तीहोणप्पगअणिअसत्तज्जाणिजणे।
मह[2]ामंचारूढप्पबळणिवसंपेक्खअजु[3]ए
इज्जे तुम्हच्चेसा पमइहिह तं मळ्ळजुअळं॥ ३३॥

छाया—

नियुद्धे आरब्धे पदे[4]प्रगलनादिभिः सरवे
सकष्टोक्तिघोणप्रगतनिजसत्त्वर्जानिजने।
महामञ्चा[5]रूढप्रबलनृपसंप्रेक्षकयुते
इज्जे युवा[6]मेवेशौ प्रमथिष्यथ[7]स्तन्मल्लयुगलम्॥

पदप्रगलनादिभिश्चाणूरमुष्टिकाभ्यां भवतोर्नियुद्धे आरब्धे। आदिशब्देन मिथो हस्तबन्धादिसंग्रहः। एवं प्रवृत्ते सरवे सशब्दे

T— १. 'उस्से' २. 'हामचळारू' ३. 'जए'
४. 'पदे प्र' ५. 'ञ्छा'
६. 'वामेवमीशौ' ७ 'ष्यत'

नियुद्धे । इजे पादपूरणे । युवामेव न सहायसहितौ । तत्र हेतुः- ईशाविति । चाणूरमुष्टिकाख्यं मल्लयुगलं प्रमथिष्यथः । नियुद्धमेव विशिनष्टि- सकष्टोक्तीत्यादिना । बालबलवद्युद्धदर्शनेन कष्टोक्तिमभिनयसहिता जनाः करिष्यन्तीत्यर्थः । तर्हि तत्र सम्यक्प्रेक्षकः कोऽपि नेति नेत्याह- महामञ्चेति । राजमञ्चारूढः प्रबलोऽत्यन्तदुष्टो वधाकाङ्क्षी कंसः सम्यक्प्रेक्षक इत्यर्थः ।

"णइचेअचिअच्च एवार्थे" (२. १. ३४) इति सूत्रादवधारणार्थे एते चत्वा[1]रः भवन्ति । तुम्हे[2]च्चेसा । णईति उत्तरश्लोके । शिष्टौ पूर्वमेव दत्तोदाहरणौ ॥

मल्लयुगळवधविभागं प्रदर्शयन् मल्लान्तरवधमाह—

कूडं तो तळहअमुट्ठिओ खु रामो
सम्मुट्ठिप्पहरहअं जहा पकाही ।
चाणूरे भमणहए वि कोसळं तं
संदिण्णं तह णइ हड्ढिउत्तिकंसो ॥ ३४ ॥

छाया—

कूटं ततस्तलहतमुष्टिकः खु रामः
सम्मुष्टिप्रहारहतं यथा प्र[3]कर्ष्यति ।
चाणूरे भ्रमणहतेऽपि कोसलं तं
संदीर्णं तथैव हाधिगुप्तिकंसः ॥

ततोऽनन्तरं तलेन हतो मुष्टिको येन स रामो यथा कूटाख्यं

---

T— १. 'त्वार आदेशा भ' २. 'म्हे' ३. 'प्रकृष्यति'

मल्लं सम्मुष्टिप्रहारहतं सम्यग्भूतसुदृढमुष्टिप्रहारेण हतं यथा प्र[1]कर्क्ष्यति तथैव। खु वितर्के। ननु त्वं कोसलं कोसलाख्यं संदीर्णं सम्यग्दीर्णं विदीर्णकायं प्र[2]कर्क्ष्यसि। इति पुरुषत्रिपरिणामो द्रष्टव्यः। कदाचाणूरेऽपि भ्रमणहते शरीरस्य भ्रमणेन भ्रमणकरणेन हते त्वया। अपिशब्दो विरोधाभासार्थः। चाणूरस्य एवं हननं विरुद्धमिति यावत्। हाधिगुक्तिकंसः इत्युभयोरपि विशेषणम्। हाधिगित्युक्तिर्यस्य स हाधिगुक्तिः। हाधिगुक्तिः कंसः येन सः हाधिगुक्तिकंसः। मल्लानां बलिष्ठानां वधे हाधिगित्युक्तवान् कंस इति यावत्।

"हद्धि निर्वेदे" (२. १. ३६) इति सूत्रान्निर्वेदे हद्धीति प्रयोगसिद्धिः। हद्धिउत्तिकंसो ॥

अणुइअरणदुक्खं एक्कमेक्केण जुज्झं
पअरिअ सव[3]आणं मोत्तमत्तप्पकीळा।
हरिसमहि[4]अअं ते पेक्खआणं च तुम्हे
दिसहिह अह रण्णो वेवरिच्चस्स हेऊ[5] ॥ ३५ ॥

छाया—

अनुचितरणदुःख[6]मेकैकेन युद्धं
प्रकृत्य सवयँ[7]सां मुक्त्वात्तप्रक्रीडौ।
हर्षमधिकं तौ प्रेक्षकाणां च युवां
दास्यथोऽथ राज्ञो वैपरीत्यस्य हेतू ॥

T— १. 'कर्ष्यति' २. 'कर्ष्यसि'
३. 'अणं' ४. 'अअत्ते' ५. 'हेळा'
६. 'खमेकैकं यु' ७. 'यसमुक्त्वा'

अथ मल्लवधानन्तरं तौ एवं सिद्धपराक्रमौ युवां सवयसां समानवयसां गोपानां मध्ये एकैकेन युद्धं प्रकृत्य प्रकर्षेण कृत्वा । तेन किं- प्रेक्षकाणामनुचितरणदुःखं मुक्त्वा अनुचितेन बलवतां युद्धेन जातदुःखं त्यक्त्वा हर्षमधिकं दास्यथः । न च केवलं दुःखमोक्षं सुखं च दास्यथ इत्यर्थः । कथम्भूतौ सन्तौ- आत्तप्रक्रीडौ स्वीकृतप्रकृष्टक्रीडान्तरैरपि मानुषबालोचितैः सर्वदा सुखदातारावित्यर्थः । रामकृष्णावेव विशिनष्टि- राज्ञ इति । राज्ञः कंसस्य यत् प्रेक्षकवैपरीत्यं सुखाभावो दुःखं च । तस्य हेतू ।

"वीप्सार्थात् तदचि सुपो मस्तु" (२. २. १) इति सूत्राद् वीप्सार्थात् पदात् परस्य सुपः स्थाने तस्य वीप्सार्थस्यै सम्बान्धिन्यचि परे मकारो वा भवति । एकमेकेण । पक्षे एकेक्कण इत्यादि सिद्धं सर्वत्रैवम् ॥

एवं स्थिते कंसस्य व्यापारं पश्चाद् भगवद्व्यापारं चाह—

भिच्चे गोपे धणविरहिए णंदगोपं च बद्धं
सेहिं तुळ्ळेहि कुणह इमे ओगए दुट्ठएट्ठे ।
एदाणं तं मह अ पिअरं णट्ठपाणे त्ति उत्ते
मंचं णीओ सुइविवइणा जाहिसीसाहिकंसं ॥ ३६ ॥

छाया—
भृत्यान् गोपान् धनविरहितान् नन्दगोपं च बद्धं
स्वैस्तुल्यैः कुरुतेमावपगतौ दुष्टचेष्टौ ।
एतयोस्तं मम च पितरं नष्टप्राणावित्युक्ते
मञ्चं नीतः श्रुतिविपतिना यास्यसीशाधिकंसम् ॥

T— १. 'त्वा तौ किं' २. 'णमुक्कं दु'
३. 'तां' ४. 'स्य न्यचि' ५. 'ह्णेग'

हे ईश कृष्ण इति भृत्यान् प्रत्युक्ते कंसेनेति विशेषणवशात् सिद्धयति। अधिकंसम् अधिगतकंसं वस्तुतः त्वद्भयात् कंसेन आश्रित-मुत्तुंगमहामञ्चं यास्यसि। कथं— श्रुतिविपतिना नीतः श्रुतिरेव विपतिः तेन नीतः। छन्दोमयेन गरुडेन नीतः। अथवा श्रुतिरिति कंसवचःश्रवणं विवक्षितम्। भगवन्नयनहेतुत्वात्। तस्य विपतित्वमुप-चारितम्। यद्वा भगवदाज्ञाभूता प्रसिद्धा श्रुतिरेव श्रुतिः। तस्या अपि स्वार्थभूतधर्मलङ्घिकंसवधाय भगवन्नयनाद् विपतित्वेनोपचारो युक्तः। इतीत्युक्तमुक्तिप्रकारमाह- गोपानित्यादिना। अयमर्थः- गोपान् धनविरहितान् अपहृतधनान् कुरुतेति। एवं कुरुतेत्यस्य सर्वत्र सम्बन्धः। इमौ रामकृष्णौ स्वैः स्वीयैर्वयसा तुल्यैः सह पुर्या अपगतौ कुरुत इति। अत्र हेतुः- दुष्टचेष्टाविति। धनुर्भञ्जनादिदुराचारचर-णादपसार्यत्वमित्यर्थः। एतयोस्तमुत्पादकं वसुदेवं मम पितरं चोग्रसेनं प्रतिपक्षपक्षपातिनं नष्टप्राणौ कुरुतेति।

"श्लुग्जश्शसोः" (२. २. ३) इति सूत्राज्जश्शसः परयोरेतयो-र्लुक् लोपः। अत्र पूर्वत्र असिद्धं शसो लोपे सिद्धं रूपमुदाहरति- भिंचे इति। "शस्येत्" (२. २. २०) इति सूत्रादतः शसि परे एच्च सिध्यति। गोपेहि "हिं हिँ हि भिसः" (२. २. ५) इति सूत्रात् तृती-याबहुवचनस्य सानुनासिकः सानुस्वारः केवलश्च हिर्भवति। अत्र द्वयो-रेवोदाहरणम् - सेहिं, तुल्लेहि ॥

तन्मञ्चं प्रत्युत्पतनमप्यहं यथावद् द्रक्ष्यामित्याह—

रामाहिंतो ऊ खिइत्तो तुमं हं विप्पेहिंतो रंगदेसट्ठिअत्तो।
संतुट्ठाओ पुण्णभत्तीउ सिग्घं भद्दासुंतो उप्पडंतं च दच्छं ॥

---

T— १. 'स्यापि' २. 'र्थधर्मभूतधर्म'
३. 'लुग्ज' ४. 'भिद्या इ'

छाया—

रामाद् ऊ क्षितेस्त्वामहं विप्रेभ्यो रङ्गदेशस्थितेभ्यः ।
सन्तुष्टेभ्यः पूर्णभक्तिभ्यः शीघ्रं भद्रेभ्य उत्पतन्तं च द्रक्ष्यामि ॥

क्षिते रङ्गभूमेरुत्पतन्तं त्वामहं द्रक्ष्यामि । यदा चैवं तदा रङ्गभूमिगतान् बलभद्रादीनपि अपादानीकृत्य मञ्चं प्रत्युत्पतन्तं त्वां द्रक्ष्यामीत्याह- रामाद् रङ्गदेशस्थितसन्तोषादियुक्तविप्रेभ्यश्चोत्पतन्तं त्वां द्रक्ष्यामीति । ऊ इति विस्मापके । योऽयं तव व्यापारः ।

"हिंतोत्तोदोदु ङसिस्" (२. २. ६.) इति सूत्रात् पञ्चमीविभक्तिमात्रे एते चत्वार आदेशा भवन्ति । परिभाषाप्रकरणे ङसिस् इत्यस्य एकवचने बहुवचने च विहितत्वात् । तत्र रामाहिंतो, खिइत्तो इत्येकवचनोदाहरणम् । दो दु इत्येतयोः पूर्वसिद्धत्वाच्छिष्टानि बहुवचनोदाहरणानि । दो दु इत्येतयोः दकारस्य शौरसेनीगतत्वमिति वृत्तिकारात्रिविक्रमविवक्षा इत्युन्मात्रोक्तिः । संतुट्ठाओ, पुण्णभत्तीउ । "सुंतो भ्यसः" (२. २. ७) इति सूत्राद् भ्यसः पञ्चमीबहुवचनस्यैव सुंतो इत्यादेशः । भद्दासुंतो । पञ्चम्येकवचनस्य ङसेः "ङसेः श्लुक्" (२. २. १५) इति सूत्रात् पूर्वसिद्धमात्वमपि द्रष्टव्यम् । "ङसिसो हि" (२. २. १७) इति सूत्रादुभयत्र हि च भवति ॥

यदर्थं मञ्चारोहणं तं कंसवधमाह—

पुरओ अह सव्वओ असिं कुणमाणं असुरक्खकाळणा ।
चिउरेसु पगेण्हिआसुरं खणओ भूपडिअं च काहिसि ॥३८॥

---

T— १. 'णंसिद्धिभ्यः' २. 'दानी मञ्चं'
१. 'त्यणमा'

छाया—

पुरतोऽथ सर्वतोऽसिं कुर्वाणमसुरमसुरक्षाकारणात् ।
चिकुरेषु प्रगृह्यासुरं क्षणतो भूपतितं च करिष्यसि ॥

अथ मञ्चारोहणानन्तरम् असुरं कालनेम्याख्यं कंसरूपेण जातं चिकुरेषु केशेषु प्रगृह्य गृहीत्वा क्षणतः क्षणेन भूपतितं रङ्गभुवि पतितं करिष्यसि अतितुङ्गान्मञ्चाद् रङ्गभूमौ पातयिष्यसि । स्ववधोद्योगे किं कंसः स्थास्यत्येव तूष्णीम् – तं विशिनष्टि– केशग्रहणायाभिमुख्यं गते भगवति असुरक्षाकारणाद् भगवन्निग्रहेण स्वासुरक्षाकारणात् । असुरक्षणार्थमिति यावत् । पुरतः असिं कुर्वाणं खड्गं प्रयुञ्जानं तं वञ्चयित्वा पार्श्वतः पृष्ठतश्च सर्वत्र सञ्चरति भगवति सर्वतोऽसिं कुर्वाणम् । एवं सर्वत्र विफलासिप्रयोगमित्यर्थः ।

"[1]अतो डो विसर्गः" (२. २. १२) इति सूत्राद् अकरात् परो विसर्गो [2]डिदोकारः सम्पद्यते । पुरओ, सव्वओ, खणओ ॥

भगवद्बाहुबलवशात् पतनसमय एव त्यक्तजीवितः कंसो भगवत्सायुज्यमाप्स्यतीत्याह—

पडंतो रंगे सो उवरि णिवडंतं अहिगओ
　तुमं देहं मोत्तुं भवहिइ अहो वाविपवरो ।
ण चित्तं वेदं से णिअइ सअअं भीइवसओ
　अमू एसो सो एस स महुरिवू ऊ त्ति खु जदो ॥३९॥

छाया—

पतन् रङ्गे स उपरि निपतन्तमधिगत-
　स्त्वां देहं मुक्त्वा भविष्यत्यहो पापिप्रवरः ।

T— १. 'अथो'　　२. 'डित ओ'

न चित्रं वेदं तस्य पश्यति सततं भीतिवशगः
अयमेष स एष स मधुरिपुरू इति खु यतः ॥

स कंसः रङ्गे पतन् उपरि स्वस्योपरि निपतन्तं त्वामधिगतः प्राप्तो भविष्यति । किमेतदिति कथनीयम् । अत आह- देहं मुक्त्वेति । शरीरं त्यक्त्वा त्वत्सायुज्यं प्राप्स्यतीत्यर्थः । अहो आश्चर्यम् । कुत आश्चर्यम् । पापिप्रवरे सज्जनहिंसापरे अत एवानुत्तरनरकार्हे न संभाव्यमेतत् । अथवा नाश्चर्यमिदं त्वत्सायुज्यगमनम् । सर्वपापप्रायश्चित्तस्य कृतत्वादित्याह- न चित्रं वेदमिति । कुतो न चित्रमिदं- यतः ऊ इति सूचयन् असौ कंसः भीतिवशगः त्वत्तो मरणभीतेर्वशगः भीतेः मनो निवारयितुमशक्तः । हेतुगर्भमिदं विशेषणम् । एष पदार्थः स मधुरिपुः । पूर्वं कालनेम्याख्यमाहतवान् विष्णुः । अभ्यासोऽव्यर्थः । इति सततं पश्यति सर्वमपि पदार्थजातमिति सिद्ध्यति । 'चिन्तयानो हृषीकेशमपश्यत् तन्मयं जगदि'ति हि भागवत उक्तम् । यन्नामकीर्तनात् सर्वपापक्षयः प्रसिद्धः किं पुनस्तस्य स्मरणादित्यभिप्रायः ।

"वैतत्तदः" (२. २. १४) इति सूत्राददन्ताभ्यां एतत्तद्भ्यां परस्य सोः डो वा भवति । एसो सो, एस सं ॥

स्वयमत्यन्तानर्थकारिणि कंसे हते देवैः किं कृतमित्यपेक्षायामाह—

कंसे हए सुअउ साअरमग्गओ ते
भद्दा अ वाअउ तहा मरओ मणज्जा ।
ते भाणओ अहव सव्वसुरा सवज्जं
काहिंति ते सिरिवइस्स सवज्जगीअं ॥ ४० ॥

T-- १. 'त्रं चे' १. 'एसो एस ड ॥'

छाया—

कंसे हते शुचयः सादरमग्नयस्ते
भद्राश्च वायवस्तथा मरुतो मनोज्ञाः ।
ते भानवोऽथवा सर्वसुराः सपर्यां
करिष्यन्ति ते श्रीपतेः सवाद्यगीतम् ॥

शुचयः शुद्धिकराः अत एव स्वयमेव वा शुचयः शुद्धाः ते वेद-प्रसिद्धा अग्नयः आहवनीयगार्हपत्यान्वाहार्यपचनाः यागादिनिवारके कंसे हते श्रीपतेः अत एव स्वैश्वर्यस्यापि हेतोः तव सादरं सवाद्यगीतं पूजां करिष्यन्तीति सम्बन्धः । तथा भद्रा वायवश्च आवहप्रवहादि-लक्षणवाय्वभिमानिदेवताविशेषाश्च स्वस्तम्भनादिहेतौ कंसे हते तव पूजां करिष्यन्ति । तथा मरुतः सप्तगणाः ते प्रसिद्धा भानवो द्वादशा-दित्याः । अथवा अलं वा तत्तद्देवताविशेषगणनप्रयासेन । सर्वसुराः सर्वे सुराः विशिष्टां तव पूजां करिष्यन्तीत्यर्थः ।

"पुंसो जसो डउडओ" (२. २. २४) इति सूत्रात् पुल्लिङ्गाद् इदुतः परस्य जसः अउ अओ इत्येतौ डितौ भवतः । इतः- सुअउ, अग्गओ, उतः- वाअउ, भरओ । मरुच्छब्दे अन्त्यहल्लोपादेव रूप-सिद्धिः । अओ इति तु पूर्वमेव सिद्धम् । तथाह्युदाहृतम् - 'सुअओ सिइणो सुहज्जुई पहओ-' (स० ५. श्लो ६) । "उतः" (२. २. २५) इति सूत्रात् पुल्लिङ्गादुतः परस्य जसो डित् अओ इति वा भवति । भाणओ ॥

इत्येकादशः सर्गः ।

---

# द्वादशः सर्गः

अथ द्वादशः सर्गः प्रारभ्यते । शिष्टं चरितं संक्षेप्तुमयमारम्भः—

संमोइएण पिअरेण तुए स णंदो
संबोहिअत्तअगआहिळसप्पं[1]उत्ती ।
वक्काणि तस्स अणिआइ[2] खळुत्ति कोवी
वक्काणि मे सुणिअ होहिइ संतकोवो ॥ १ ॥

छाया—

संमोचितेन पित्रा त्वया स नन्दः
संबोधितात्मजगताखिलस्वप्रवृत्तिः ।
वाक्यानि तस्यानृतानि खल्विति कोपी
वाक्यानि मे श्रुत्वा भविष्यति शान्तकोपः ॥

स भवदनुग्रहपात्रभूतो नन्दः नन्दगोपः त्वया सम्यङ्‌ मोचितेन कंसवधाद्‌ बन्धागमपरिहारेण मोचितेन । पित्रा वसुदेवेन । संबोधितात्मजगताखिलस्वप्रवृत्तिः पुत्रभूतभवद्विषया सा च साखिला समस्ता, मम पुत्रोऽयं कृष्णो जातमात्र एव मया रात्रौ कंसभयाद्‌ यशोदाशयने न्यस्तः, सा खलु कन्यां प्रसूय निद्रामुपगता, सा पुनः कन्या कंसप्रत्ययार्थं मद्‌गृहं नीतेत्यादिरूपा, सैव सा स्वप्रवृत्तिः । तथा संबोधिता आत्मजगताखिलस्वप्रवृत्तिर्यस्य स तथोक्तः । एवम्भूतः स नन्दः किं करिष्यतीत्यपेक्षायामाह—वाक्यानीति । प्रसवानन्तरं यशोदाशयनं दृष्टे त्वयि दृढपुत्रताभिमानो नन्दः तस्य पितुर्वसुदेवस्य वाक्यान्यनृतानि असत्यानि खल्विति मत्वा, राम एव तव पुत्रः कृष्णं चातीव गुणवन्तं दृष्ट्वा अनृतवाक्येन मां वञ्चयित्वा स्वपुत्रं कर्तुमिच्छसि, वृथैव तवैषा

---

T—१. 'व्व' २. 'आणि'

श्रद्धेति कोपी सञ्जातकोपो भविष्यति। तदानीं मया तयोर्वृत्तान्तं ज्ञात्वा तत्र ह गतेन'वेत्सि त्वमस्य मित्रत्वाद्विशेषेण पुत्राणां मरणम्' इत्यादिवाक्यैः वसुदेववचः सत्यमेवेति बोधितस्तानि मे वाक्यानि श्रुत्वा कथञ्चिच्छान्तकोपो भविष्यतीत्याह—वाक्यानीति।

"श्निंशिशिङ् जश्शसोः"(२-२-३१) इति सूत्रान्नैप इत्यनुवृत्तेः नपुंसकात् परौ जस् शस् इत्येतौ श्निं शिं शिङ् इत्येतांस्त्रीनादेशान् सानुबन्धानापद्येते। शकारोऽचः परस्य दीर्घार्थः। जसि वक्काणि। अणिआइ इति तु पूर्वसिद्धमप्युदाहृतम्। ङकारः सानुनासिकोच्चारणार्थः। शसि वक्काणि सुणिअ॥

एवं कंसं हत्वा पित्रोर्मोचनं च कृत्वाभिवाद्य ता'वम्ब ताते' त्यादिगिरा प्रीणयित्वा नन्दाय पित्रे कंसाज्जितं धनं भूरि यशोदाभरणाद्यर्थं दत्तवति भगवति नन्दगोपस्यावस्थामाह—

तत्तो से से णंदगोवस्स दत्ते
विते से से धण्णदाए घरस्स।
बुद्धीए ते विप्पओए विरत्ती
चित्तं णेदं होहिइत्तीस [6]विण्हू॥ २॥

छाया—

ततस्तस्यास्य (एतस्येति वा) नन्दगोपस्य दत्ते
वित्ते तस्या अस्याः (एतस्या इति वा) धन्यताया गृहस्य।
बुद्ध्या ते विप्रयोगे विरक्तिः
चित्रं नेदं भविष्यतीति ईश विष्णो॥

---

T—१. 'माया' २. 'शीङ्जम्शस' ३. 'नवैत्य' ४. 'सइं इइ इत्ये' ५. 'आणआइ' ६. 'वण्ह' ७. 'द्ध्या एते'

नन्दगोपस्य ते विप्रयोगे विरहे विषये, अस्य विप्रयोग इदानीं भवतीति या बुद्धिः तया हेतुना दत्ते वित्ते त्वया विश्राणिते धने विरक्तिर्भविष्यतीतीदं न चित्रम् । कुतः- तस्य जन्मान्तरकृतपुण्यव्रतः अत एवेदानीं त्वयि दृढपुत्रत्वाभिमानिनः अत एव तस्याः प्रसिद्धाया एतस्या इदानीं नन्दगोपाश्रयतया शिष्टलोकप्रसिद्धाया धन्यताया गृहस्य । एवम्भूतस्य नन्दगोपस्यापायरहितपरमपुरुषार्थभूतपरमधनस्य योगिनामपि दुर्लभस्य लब्धस्य तत्र विरहात्यन्तासहिष्णुतया व्ययनाशादियुक्ते हिरण्यादिबहुधनेऽपि विरक्तिर्युक्तैवेत्यर्थः ।

"तदिदमेतदां सेसिं तु ङसामा" (२-२-८४) इति सूत्रादेतेषां ङसामा च सह यथासंख्यं से सिं इत्येतावादेशौ सिध्यतः [1]पुंस्त्रयविशेषेण । पुंसि से [2]से णंदगोवस्स । [3]स्त्रियां से से धण्णदाए । अत्र अस्य एतस्य इति च तन्त्रेणोक्तम् । तथा अस्या एतस्या इति च । [4]सिमित्यप्यत्र द्रष्टव्यम् ।

एवं धनमनिच्छया गृहीत्वा गृहगमनमनिच्छयापि कर्तुमशक्नुवन्तं नन्दं प्रति भगवद्वचनम्—

तुज्झे [5]व्व पुत्तो अहअं ति ताअ मे
बुज्झी सआ बंधुसुहे कए तओ ।
पेच्छेसि [6]मं तं ति तुए समीरिओ
गच्छेहिए सो पडिऊँळपादओ ॥ ३ ॥

---

T—१. 'पुंस्यारविशेषेण' २. 'सि' ३. 'स्त्रियो' ४. 'सिमित्याव्यामिसत्र द्र' ५. 'व' ६. 'मत्तंति' ७. 'ऊहुपा'

छाया—

तवैव पुत्रोऽहमिति तात मे
बुद्धिः सदा बन्धुसुखे कृते ततः।
पश्यसि मां त्वमिति त्वया समीरितो
गमिष्यसि स प्रतिकूलपादकः॥

हे तात पितः तवैव पुत्रोऽहं न वसुदेवस्यापीति मे सदा बुद्धिः। वर्तत इति शेषः। अयं भावः—त्वय्येव मे पितृशब्दप्रयोगः आद्यो जातः। तथा च कदाचिदपि अप्रयुक्तपितृशब्दे[2] मया वसुदेवे कथं पितृबुद्धिः। तदभावे च नास्य पुत्रोऽहमिति मे मतिरिति। तर्हि मया सहागन्तव्य इति बुद्धिं निवारयन्नाह—बन्धुसुख इति। तत्र बन्धवो वसुदेवाद्याः ममापि बन्धवः। अतो बन्धूनां कंसभयाद् विदेशवासकर्शितानाम् अन्येषामप्यनुभूतभृशदुःखानां स्वदेशस्थापनादिना सुखे कृते ततस्तस्मादनन्तरं शीघ्रमेव मां पश्यसि त्वं वर्तमानसमीप एव काले इति त्वया समीरित उक्तो गमिष्यति स नन्दः। गोपैः सह गृहमिति शेषः। तस्य गमनकालीनविशेषणम् प्रतिकूलपादक इति। यद्विरहासहिष्णु मनः बलात्तदानीं तस्य पुरः क्षिप्तोऽपि पादः नपुः पृष्ठं प्राप्स्यतीत्यर्थः। अतः कृच्छ्रेण गमिष्यतीति यावत्।

"ङिटाभ्यां तुमए तुइ तुए तुमाइ तुमे" (२-३-७) इति सूत्राद् युष्मदित्यनुवृत्ते युष्मदि सप्तम्येकवचने तृतीयैकवचने च एते पञ्चादेशाः सिध्यन्ति। तुए। शेषोपलक्षणमेतत्। वररुचिमते तु [3]तइ तए इत्यादिरूपतेति शेषः॥

T—१. 'तवै (थै) व' २. 'युक्तं पितृ' ३. 'ततइ ततए इत्या.'

सावा भीअस्स [1]सिंहासणमभयपओ उग्गसेणाय रण्णे
पच्छा [2]कप्पेहिसित्तं महिअहिअणि[3]वं पक्खआणं वहाइ।
जोग्गो[4] तं णो खु होहि [5]च्चिअ अहिवइवए भिच्चठाणे मए रे
चिट्ठते देवराओ वि तुह वअजुए साहुमित्थं वअन्तो ॥४॥

छाया—

शापाद्भीताय सिंहासनमभयप्रद उग्रसेनाय राज्ञे
पश्चात्कल्पयिष्यसि त्वं मथित्वाधिकं[6]नृपं पक्षगानां वधाय।
योग्यस्त्वं नः खु भव एवाधिपतिपदे भृत्यस्थाने मयि[7] रे
तिष्ठति देवराजोऽपि तव पदयुगे साधुमित्थं वदन् ॥

त्वं पश्चाद् राज्ञे उग्रसेनाय उग्रसेनार्थं सिंहासनं कल्पयिष्यसि। वयसा योग्यत्वात् स्वयमेवासने उपविशतु[8] किमन्यकल्पनयेति। [9]नेत्याह-ययातिशापात्सिंहासने भीताय। तर्हि मत्कल्पनयापि किमिति न वाच्यमित्याह—अभयप्रद इति। तवाभयप्रदानसामर्थ्यादित्यर्थः। कस्य पश्चादित्यपेक्षायामाह—मथित्वा अधिकं नृपम्। अधिकं प्र[10]धानं नृपं कंसं मथित्वा। तन्मथनं किमर्थम्—पक्षगानां भूभारभूतानां तत्पक्षगतानां वधाय। तद्वधजनितामर्षाणां जरासन्धादीनां वधार्थमित्यर्थः। किं कुर्वन् सिंहासनं कल्पयिष्यामि—साधुं दैवीं प्रकृतिं प्राप्तं कंसवधान्निरसनानर्हमुग्रसेनमित्थं वदन् तस्मै सिंहासनं कल्पयिष्यसि। कथं वदन्नित्याह—योग्य इति। त्वमेव योग्यः। खु, निश्चितमेतत् नः अस्माकं, स्वामित्वमिति शेषः। अतो नः अधिपतिपदे भव। अथवा त्वं नोऽस्माकम्

---

T—१. 'सीहा' २. 'कव्वेहिसत्तं' ३. 'णिवप्पक्ख' ४. 'ग्गोत्तणो' ५. 'च्चअ' ६. 'कं नृपं' ७. 'मए रे' ८. 'शतु अन्य' ९. 'रेत्या' १०. 'धानन्नृ'

अधिपतिपदे भव। कुतः, यतस्तत्र योग्य[1]: इति योजना। वयसैवाहं योग्यः पराक्रमशक्यत्वात् त्वमेवेति शङ्कितमनसं प्रत्याह–भवैव[2]। यत्पुनः शङ्कितं नाहं शक्त इति तत्राह–मयि भृत्यस्थाने स्थिते सति देवराजोऽपि तव पदयुगे। पतिष्यतीति शेषः।

"तादर्थ्ये ङेस्तु" (२-३-३६) इति सूत्रात् तादर्थ्ये विहितस्य ङेः चतुर्थ्येकवचनस्य तु वा षष्ठी भवति। भीअस्स उग्गसेणाय रण्णे। 'वधाड्डाइ च' (२-३-३७) इति सूत्राद्वधशब्दात्परस्य ङेः स्थाने तादर्थ्ये आइ च भवति। वहाइ। चकारात् पूर्ववत् षष्ठयादि च। "सोस्तु हि' (२-४-३७) इति सूत्रात् सोः मध्यमपुरुषैकवचनस्य स्थाने विध्याद्यर्थेषु विकल्पेन हि इत्यादेशः सिध्यति। होहि। पक्षे द्विविधसूत्रसिद्धं[3] सु इति भवति ॥

होमाण दुक्खं[4] तअ धम्मळोओ
होन्तासुहं होज्ज भअं च होज्जा।
कंसो ठिओ ए पहु सुट्ठु जाअं
विप्पा वएहिंति तुमं हरि त्ति ॥ ५ ॥

छाया—

अभविष्यद् दुःखं तथा धर्मलोपः
[5]अभविष्यदशुभमभविष्यद् भयं चाभविष्यत्।
कंसः स्थितश्चेत् प्रभो सुष्ठु जातं
विप्रा वक्ष्यन्ति त्वां हरे इति ॥

---

T—१. 'यय: यो' २. 'भवतैव' ३. 'सिद्धयाद्वासु' ४. 'क्खन्त अ' ५ 'अभिषदशुभं...कंसः'

हे हरे[1] विप्रा ब्राह्मणाः इति इत्थं त्वां वक्ष्यन्ति। कंसवधानन्तरमिति सिध्यति। कथं वक्ष्यन्ति—हे प्रभो निग्रहानुग्रहशक्त! कंसः स्थितश्चेद् दुःखमभविष्यत्। सर्वासामपि प्रजानां हिंसापरत्वात्। तथा श्रुतिस्मृतिविहितधर्मलोपोऽभविष्यत्। कंसेन तन्निवारणात्। न केवलं शर्माभावः किन्त्वशुभं पापकर्म चाभविष्यत्। तत्प्रवर्तकत्वात् कंसस्य। भयं चाभविष्यत्। दुष्टः किं करिष्यति धनापहारं जीविताप्रहारं वेति। अत इहलोकपरलोकोपद्रवहेतोः तस्य भवता हननं जातमिति यत् तत् सुष्ठु जातमिति यावत्।

"[2]माणन्तौल्ङ् च लङः" (२-४-४१) इति सूत्रात् क्रियातिपत्तेः[3] यौ तिप्तौ तत्स्थाने माण न्त इत्येतौ भवतः। चकाराद् जर्जारौ च। होमाण, होन्तः होज्ज, होज्जा॥

गग्गा पत्तदिअत्तणा बअ पभू संदीविणिं संगआ
पत्तुं विज्जसअं अपुव्वमह[4] से सद्दक्खिणं देहिह।
[5]चिट्ठान्ता महुराइ सूरमहुरा ऊ सोरसेणीउ तो
तुम्हे सुंदर सामिआ सुचरिअं तेअस्सि किं काहिह॥ ६॥

छाया—

गर्गात् प्राप्तद्विजत्वौ बत प्रभू सान्दीपनिं सङ्गतौ
प्राप्तुं विद्याशतमपूर्वमथ तस्मै सद्दक्षिणां दास्यथः।
तिष्ठन्तौ मधुरायां शूरमधुरौ ऊ शौरसेन्यां ततो
युवां सुन्दर स्वामिन् सुचरितं तेजस्विन् किं करिष्यथः॥

---

T—१. 'ह हरे' २. 'माणंतौ च लुङः' ३. 'पत्तिस्थाने'
४. 'अवुव्व' ५. 'चिट्ठरत्ता'

हे स्वामिन् हे तेजस्विन् कृष्ण युवां कृष्णरामौ शूरमधुरौ रामः शूरः त्वं मधुरः। यद्वा उभावपि शूरमधुरौ अधृष्यत्वाभिगम्यत्वगुणयुक्तौ। गर्गाद् यदुकुलाचार्यात् प्राप्तद्विजत्वौ। स्वाम्यं प्राप्तेन पित्रा सञ्चोदितेन गर्गेण कृतोपनयनसंस्कारौ प्रभूतसर्वैश्वर्यौ सर्वविद्योत्पत्तिस्थानभूतौ सन्तौ विद्याशतं सकला अपि विद्याः प्राप्तुमवन्तिपुरवासिनं सान्दीपनिं सङ्गतौ। बत। महानत्र विस्मयो मे। अथ विद्याग्रहणानन्तरं तस्मै सान्दीपनये अपूर्वां पूर्वमन्यैरदत्तजातीयाम्। अत एव सद्दक्षिणां साधुभूतां दक्षिणां मृतपुत्रलक्षणां संयमन्या आनीय दास्यथः। ततोऽनन्तरं शौरसेन्यां 'शूरसेनो यदुपतिः मधुरामावसत् पुरीम्' इति दर्शनात् शूरसेनसम्बन्धिन्यां मधुरायामाचार्यसकाशादागम्य तिष्ठन्तौ सुचरितं शोभनं चरितं जरासन्धेन सह युद्धादिकं करिष्यथः। किमिति प्रश्ने। एतत्सर्वं निरूप्य जातं विस्मयमाह-ऊ इति।

"[२]निरप्पथक्कठाचिट्ठाः"(२-४-१२७) इति सूत्रात् तिष्ठतिधातोः निर[३]प्प थक्क ठा चिट्ठा इति चत्वार आदेशा भवन्ति। चिट्ठान्ता। उपलक्षणमेतत्। शौरसेनी इति शौरसेनी भाषा आरभ्यत इति सूचितम्। "[४]आत्सावामन्त्र्य इनो नः" (३-२-२१) इति सूत्रात् शौरसेन्यां भाषायां इनो नकारस्य[५] आमन्तये सौ परे आत्वं वा भवति। सामिआ। पक्षे ते[६]अंस्सि॥

जामाआभिहणणरोसणोइणाद्दो
पत्तो तो भुवहिइ सो जराइसंधो।

---

T—१. 'सर्वैश्वरौ' २. 'निरप्पंकठाचिभ्रा' ३. 'रप्पं क्कठा चिटि'
४. 'आसावामन्त्य' ५. 'स्यामन्त्ये' ६. 'अंस्सि'

तुम्हे रे भअवमधम्महाइसेणो
सोच्छं एदु भवमहग्गअत्ति वक्कं ॥ ७ ॥

छाया—

जामात्रभिहननरोषनोदनात्
प्राप्तस्ततो भविष्यति स जरादिसन्धः ।
युवां रे भगवन्नधर्महन्नतिसेनः
श्रोष्याम्येतु भवानग्रजेति वाक्यम् ॥

अस्तिप्राप्तिभ्यां पुत्रीभ्यां स्वभर्तृकंसवधनिवेदनानन्तरं सेनासम्पादनादिव्यग्रत्वादिना कञ्चित्कालमतिवाह्य सः प्रसिद्धः महाबलो जरादिसन्धो जरेत्यादिः पूर्वं यस्य सन्धस्य सन्धशब्दस्य तेनाभिहितः जरासन्ध इति यावत् । जामातुः दुहितृपतेः कंसस्याभिहननेन यो रोषस्तेन नोदनात् प्रेरणाद् अतिसेनः प्रभूतसेनायुक्तो युवां प्राप्तो भविष्यति । भगवन् ऐश्वर्यादियुक्त अधर्महन् एवंभूत त्वत्सकाशाज्जयाग्रहो जरासन्धस्य व्यर्थ एवेत्यभिप्रायः । अनन्तरं किं भविष्यतीत्यपेक्षायामाह—अथ तत्प्राप्त्यनन्तरं हे अग्रज बलभद्र एतु गच्छतु युद्धार्थम् इति वाक्यं श्रोष्याम्यहमित्यर्थः ।

'मः' (३–२–२२) इतिसूत्राद्-'आमन्त्र्य इनो नः' (३–२–२१) इत्यनुवृत्तेः नकारस्य मकारो वा भवति । भअवं, अधम्मह ॥

---

T—१ 'प्रहाजरा' २. 'त्रादामन्त्र्येनन्म इत्य'

भअवं मघवं कअवं व तुवं
जळवासमहो सरवासमह ।
मुसळी मुसळप्पहरं च [1]सआ
करिअस्स बळं पमहेहिह हु ॥ ८ ॥

छाया—

भगवान् मघवान् कृतवानिव त्वं
जलवर्षमथो शरवर्षमथ ।
मुसली मुसलप्रहरं च सदा
कृत्वास्य बलं प्रमथिष्यथः हुं ॥

एवमुक्त्वा युद्धाय पुराद् बहिर्निर्गमनानन्तरं भगवान् त्वदनुग्रहेण प्राप्तभगवद्भावः सोऽयं मघवान् जलवर्षं कृतवानिव यथा कृतवान् तथा त्वं शरवर्षं कृत्वा मुसली रामो मुसलप्रहारं च कृत्वा अस्य जरासन्धस्य सेनां प्रमथिष्यथः । हु निश्चितोऽयमर्थः ।

'भवताम्' (३-२-२३) इति सूत्राद् भवत्प्रकाराणां सौ परे नकारस्य मो भवति। भअवं। मघवं। कअवं ॥

बद्धो सो बळववुणा तुहोत्तिमोत्तो
भेत्तुं तंबळमवरं भविस्सिदित्ति ।
अच्छेरं ण सअळबंधमोक्खहेऊ
माआए तुवमिह[6] विज्जसत्तिआए ॥ ९ ॥

---

T—१. 'सदाआ' २. 'ह इह' ३. 'प्रहारं' ४. 'हु अथ ॥' ५. 'विस्सदि' ६. 'ह शसत्ति'

छाया—

बद्धः स बलवपुषा तवोक्तिमुक्तो
भेत्तुं तद्बलमपरं भविष्यतीति ।
आश्चर्यं न सकलबन्धमोक्षहेतु—
र्मायया त्वमिह विद्याशक्तिकया ॥

सः जरासन्धः तव बलवपुषा बलभद्राख्यशरीरेण बद्धः युद्धे बन्धनं प्राप्तः। तवोक्तिमुक्त इति च तवशब्दो योज्यः। तवोक्त्या मुञ्च मुञ्चेत्यनया मुक्तः भविष्यतीति नाश्चर्यम्। कुतो नाश्चर्यमित्यत आह—यत इत्यर्थात् सिध्यति। यतस्त्वमिह भुवनत्रये मायया, विद्याशक्तिकया स्वार्थे कः, विद्याशक्त्या च सकलानां लोकानां बन्धमोक्षहेतुः। मायया बन्धहेतुः विद्यया मोक्षहेतुः इति विभागः। तर्हि बन्धमोचने कोऽभिप्रायः लोकानां स्थितिभेत्तुः शत्रोः इति। अत आह—भेत्तुमिति। अपरं हतादन्यद् अहतं—भूभारभूतं—तद्बलं तस्य जरासन्धस्य बलं पुनरपि पुनरपि तेनानेष्यमाणं भेत्तुं तवोक्तिर्भविष्यति। अतस्तया हेतुना मुक्ता भविष्यति। तदिदं मुक्ताद्धेतोर्नाश्चर्यमिति।

'भविष्यति स्सिः'(३–२–२४) इति सूत्रात् शौरसेन्यां भविष्यदर्थे विहिते प्रत्यये परे स्सि इति भवति। हिस्साह्यादीनामपवादोऽयम्। भविस्सिदि ॥

एवं बहुवारं जरासन्धानीतबहुबलोत्सदाने कृते "अष्टादशमसंग्रामे आगामिनि तदन्तरा। नारदप्रेषितो वीरो यवनः प्रत्यदृश्यत ॥" इति श्रीभागवतोक्त्यनुसारेण यवनवचनप्रकारमाह—

---

T'—१. 'मवरं' २. 'बहुलो'

कण्हो वण्हिवई खु वत्तदि पुरे [1]अस्सिं सआ सोहदे
सो कण्डुं समरे हरेदि धरदे चत्तारि हत्थे अ दे।
उत्ते एव मए त्ति दुट्ठजवणे पत्तुं पुरिं आअदे
सव्वस्सेट्ठणिआणुरूवणअरिं रक्खच्छळा काहिसि ॥१०॥

छाया—

कृष्णो वृष्णिपतिः खु वर्तते पुरेऽस्मिन् सदा शोभते
स कण्डूं समरे हरति धरति चतुरो हस्तांश्च ते।
उक्ते एव मयेति दुष्टयवने प्राप्तुं पुरीमागते
सर्वश्रेष्ठनिजानुरूपनगरीं रक्षाच्छलात् करिष्यसि॥

अनेन प्रकारेण मयोक्ते सत्येव पुरीं मधुरां प्राप्तुं दुष्टयवने दुष्ट एव यवनः तथा, तस्मिन् अत्यन्तखले म्लेच्छजनेश्वरे आगते सर्वश्रेष्ठस्य स्वस्यानुरूपां नगरीं द्वारवतीं, मधुरा नैतादृशीति, करिष्यसि। ननु यवनोऽयमागतः अनेन युद्धे क्रियमाणे यदि मागध आगमिष्यति तर्हि बन्धूनां वधं नयनं वा करिष्यति। अतो जलदुर्गेणात्यन्तदुष्प्रापम् अन्तःसमुद्रे नगरं करिष्यामीति रक्षार्थं द्वारका निर्मितेति भागवत-प्रसिद्धिः। तत्र मनुष्यानुकरणमात्रं सर्वेश्वरत्वेन दुर्गरक्षाया अपि हेतुत्वादित्याह—रक्षाछलादिति। इतीत्युक्तमुक्तिप्रकारं दर्शयति—कृष्ण इति। मम युद्धकण्डूत्यपनयनसमर्थः किं कोऽपि विद्यते। सर्वत्र सञ्चरता त्वया दृष्ट इति यवनेनोक्तस्य नारदस्येदं वचनमिति वचनविन्यासवशात् सिध्यति, कृष्णो नाम वृष्णिपतिः स्वस्मिन् स्वीये मधुराख्ये पुरे वर्तते। न वर्तनमात्रम् अपितु सदा शोभते सर्वदा कंसादिजयश्रिया दीप्यते। भवतु नाम न मां प्रत्यायुधप्रयोगे समर्थः इति। नेत्याह—स कृष्णः

T—१. 'सस्सी स' २. 'स्सेट्ठिणि' ३. 'अरीर' ४. 'च्च' ५. 'त्या....प्रयो'

समरविषये ते कण्डूं हरति शीघ्रं विनाशयति। तर्हि तस्य किं लक्षणमिति चोदित आह—चतुरो हस्तान् धरति च। चशब्दाद् वनमालाद्यपि धरति अतिसुन्दरश्चेत्यादिसंग्रहः। बहुबाहुधारणोक्त्या कण्डूत्यपनयने सौकर्यं च द्योत्यत इति ॥

'इचेचोर्दः[1]' (३–२–२५) इति सूत्राद् वर्तमानप्रथमपुरुषैकवचने इ ए इत्येतयोः प्राकृते विहितयोः शौरसेन्यां दकारो भवति। तत् तु टित्त्वादादौ। तस्य—वत्तदि, सोहदे। तिपः—हरेदि, धरदे। "दस्तस्य शौरसेन्यामखावचोऽस्तोः" (३–२–१) इति सूत्रात् खुस्तुशब्दयोः परिभाषाप्रकरणे आदिसंयुक्तवाचकत्वेन सिद्धत्वाद् अनादौ वर्तमानस्य असंयुक्तस्य तकारस्याचः परस्य दकारो भवति। आअदो। उत्तरश्लोके[2]ऽस्य प्रपञ्चनं भविष्यति ॥

संकप्पादिकआंबुहिप्पगादिसग्गिव्वाणतच्छाअदि-
द्दातण्णिम्मिदिदारएण खु तुए जोएण णीदे जणे।
सीए तं सिविणोत्ति धी उवगदे दे पिट्ठदो धाविरो
दट्ठो होसिदि सो मुउंद मुउउंदोज्जंतणेइग्गिणा ॥ ११ ॥

छाया—

सङ्कल्पादिकृताम्बुधिप्रगतिसद्गीर्वाणतक्षागति-
द्राक्तन्निर्मितिद्वारकेण खु त्वया योगेन नीते जने।
स्वीये तां स्वप्न इति धियमुपगते ते पृष्ठतो धाविता
दग्धो भविष्यति स मुकन्द मुचुकुन्दोद्यन्नेत्राग्निना ॥

T—१. 'दर्श' २. 'श्लोकस्य'

हे मुकुन्द मुक्तिप्रद ! ते पृष्ठतो धावनशीलः स यवनः मुचुकुन्दोद्यन्नेत्राग्निना दग्धो भविष्यति। अयमर्थः—यवनं दृष्ट्वा मत्स्पर्शानर्होऽयम् अत एवोपायान्तरेणैनं वधिष्यामीति पुगान्निरायुधो धाविष्यसि त्वम्। तदा नारदोक्तलक्षणयोगात् कृष्णोऽयं धावति। अतोऽनेनायुधसहायापेतेनाहमपि तथैव योत्स्य इति निश्चित्य स्वीयं बलं म्लेच्छकोटित्रयं हित्वा स्वयमेव ते पृष्ठतो धाविष्यति। तदा त्वयि गिरिकन्दरं प्राप्य तिरोहिते तत्र देवप्रार्थनयासुरनिग्रहं कृत्वा चिरकालनिरूढनिद्रां सेवमानं शयानं मुचुकुन्दं कृष्णोऽयमिति पादेन ताडयिष्यति। अतः केनाहं प्रबोधित इति रुषोत्थितस्य तस्य क्रोधवशादुद्यता उत्पन्नेन नेत्राग्निना दग्धो भविष्यति इति। कदा एवं भविष्यति—द्वारकानिर्माणानन्तरं चेत् तर्हि तावन्तं चिरकालं प्रतीक्ष्य स्थितो यवन इति न श्लिष्यते, नैवम्। अचिरेण कालेन निर्माणात्। कथं तदित्युपपादयति—सङ्कल्पादिकृतेति। अम्बुधिप्रगतिश्च सद्गीर्वाणतक्षागतिश्चेति द्वन्द्वः। ते सङ्कल्पादिकृते सङ्कल्पमात्रेण आदिकृते येन स त्वं सङ्कल्पादिकृताम्बुधिप्रगतिसद्गीर्वाणतक्षागतिः। स एव द्राक्तन्निर्मितिद्वारकश्चेति कर्मधारयः। तेन विश्वकर्मणागतिकर्त्रा निर्मितिः निर्माणं यस्याः सा तथा। द्राक् तन्निर्मितिः द्वारका यस्य सः त्वं तथोक्तः। तेन त्वया खु संभावितमेवैतत्। तव सङ्कल्पादेव सर्वजगत्सृष्ट्यादिकर्तुः योगेन मधुरायाः तद्द्वारकां नीते स्वीये जने, "तत्र योगप्रभावेन नीत्वा सर्वजनमि"ति हि भागवत उक्तम्। तस्मिन् स्वीये जने तदा किमवस्थे—स्वप्नधियमुपगते। केयं महती अपूर्वा पुरी, नूनं स्वप्नोऽयमिति बुद्धिं प्राप्ते सति यवनो दग्धो भविष्यति।

"पृष्ठेऽनुत्तरपदे" (१–२–७७) इति सूत्रात् पृष्ठशब्दे उकारस्य उत्तरपदत्वाभावे इत्वं वा भवति। ते पिट्ठदो ॥

---

T—१. 'णप्रग' २. 'त्वा वानिति हि भा'

स्वस्याशक्त्या यवनवधोऽन्येन कारित इति मन्दमतीनां शङ्कामपनयन्नाह—

[1]सफंसाणहे घादिए तेण रण्णा
णमंदेण णाओ [2]णिअंदेउरं तं।
गओ द्दारआए सुहं सव्ववंओ
[3]परक्खिस्ससे दाव भूमिं जहाव ॥ १२ ॥

छाया—

स्वस्पर्शनेहे घातिते[4] तेन राज्ञा
नमता ज्ञातो निजान्तःपुरं त्वम्।
गतो द्वारकायां सुखं सर्ववन्द्यो[5][6]
प्ररक्षिष्यसि[7] तावद् भूमिं यथावत्॥

स्वस्पर्शनेहे अत्यन्तवेदबाह्यम्लेच्छजातित्वात्। तत एव घातिते यवने सति। तेन यवनहन्त्रा राज्ञा नमता ज्ञातो निजान्तःपुरम्—अत्यक्षिदिव्यविग्रहं देहप्रभया गिरिगुहायां तं कुतश्चिदेव इति शङ्कया कस्त्वमिति पृच्छतेति सिद्ध्यति। अन्यथा विशेषतो भगवज्ज्ञानायोगादेवंभूतेन श्रीविष्णुरयम् अगण्यावतारकर्मेति ज्ञातः। त्वं तस्मै भक्तिं वरं दत्त्वा इति शेषः। द्वारकायां निजान्तःपुरं गतः सर्ववन्द्यः तस्यां द्वारकायां वसन्तं त्वां सर्वे राजानो वन्दिष्यन्ते इत्यर्थः। तथाभूतः सर्वेषां

---

T—१. 'सहसाणएये' ४. 'ते राज्ञां'
२. 'णिअदेउरं' ५. 'तां ततो'
३. 'धरं मांखणसे' ६. 'सर्पवद्यो' ७. 'पूरयिष्यसि'

सुखं यथा भवति तथा। यथावद् भूमिं तावत् प्ररक्षिष्यसि। तावच्छब्दः प्राथम्यार्थः। परिपालनं स्वधर्मं चरिष्यसीत्यर्थः।

"अधः क्वचित्" (३-२-२) इति सूत्रात् तकारस्य संयोगेऽधो वर्तमानस्य लक्ष्यानुसारेण क्वचिद्दकारो भवति। णमंदेण, अंदेउरं। महंदो इत्याद्यप्युपलक्षितम् ॥

नारदोक्तेऽर्थे सम्मतिं कृत्वा भगवानपि स्वयं कश्चिद् भविष्यन्तमर्थमाह—

एव्वं देवेसि सव्वं मह दिअघडिए ताव वेदब्भिजोए
णीअं णीइळ्ळ देवी मइ रहवरअं तं पुळंतं णिरासं।
चेइज्जं वत्थोज्जमे ते अपुरुवकरणे हंत राअण्णवय्ये
पेच्छंतस्सोच्छहासो तुह करविहिओ देइ अज्जावि
सोक्खं ॥ १३ ॥

छाया—

एवं देवर्षे सर्वं मम द्विजघटिते तावद् वैदर्भीयोगे
नीतां नीतिमन् देवीं मया रथवरगां तां पश्यन्तं निराशम्।
चैद्यं व्यर्थोद्यमांस्तानपूर्वकरणान् हन्त राजन्यवर्यान्
पश्यत उच्चहासस्तव करपिहितो ददात्यद्यापि सौख्यम् ॥

हे देवर्षे! एवं सर्वं यथा त्वयोक्तं तथैव सर्वं मम कर्म भविष्यति, तत् तिष्ठतु। मध्ये किञ्चिद् वदामः—मम तावत् प्रथमम् अन्यासां भार्याणां परिग्रहात् पूर्वं द्विजघटिते भ्रात्रा रुक्मिणा शिशुपालाय

T—१. 'इर' २. 'वु' ३. 'तं सो' ४ 'यो' ५. 'णाद्धन्त' ६. 'रचि'

स्वदानमारब्धमसहमानया वैदर्भ्या स्वाभिलाषनिवेदकपत्रेण सह प्रस्थापितो यो द्विजो ब्राह्मणः तद्दत्तपत्रवाचनानन्तरं मया राक्षसेन विधिना परिगृहीता भविष्यति सा। अतो द्विजेन हेतुना घटिते सम्बन्धे जाते वैदर्भीयोगे तव उच्चहासः उच्चैर्हासः। अद्यापि तदवस्थाया उत्पत्तेः प्रागपि। महेत्यत्रापि योज्यम्, महमित्यर्थः। सौख्य ददाति। एवं सुखजनकत्वे हेतुः—करपिहित इति। मयि पक्षपातेन सहसोत्थिते हासे परान् वञ्चयितुं तस्य हस्ततलेन [2]पिधानं करिष्यसि। तथापि ध्वनि-सहिता हासशोभा बलाद् बहिः प्रसरिष्यति। भक्तस्य तवैतां व्यग्रदशां निरूप्य अद्यापि सुखितोऽस्मीत्यर्थः। हासकारणमाविष्कुर्वन् मया नीतां तां देवीं वैदर्भीं रथवरगां पश्यन्तम्[3]। अत एव निराशं कार्यस्य[4] कृतत्वाद् रुक्मिण्यां[5] निर्गताशं चैद्यं बहुसहायबलसम्पदुपेतश्चेदिभूपतिरहमित्यभि-मानं वहन्तं पश्यतः। तां तत्पक्षीयांश्चैद्याय रुक्मिणीं बाधयितुम् आगतान् राजन्यवर्यांश्च पश्यतः। किं तद्दर्शनमात्रेण हासः—नेति तान् विशिनष्टि व्यर्थोद्यमानिति। निष्प्रयोजनयुद्धोद्यमान्, न केवलं युद्धासमर्थान् मद्भीत्या जरासन्धागमने बहुकृत्वः पलायने जातेऽपि ततोऽप्यपूर्व-करणान् अपूर्वस्याङ्गुलीवादनादिलक्षणस्य करणं येषां ते तथा तान्। हन्त भ्रष्टोऽस्मि तवेत्यादिव्यापारान्।

"तावति [6]खोर्वा" (३–२–३) इति सूत्रात् तावच्छब्दे खोरा-देस्तकारस्य दकारो वा भवति। पूर्वश्लोके दाव-ताव। "र्यो य्य" (३–२–८) इति सूत्रेण र्य इत्यस्य य्य इति भवति। वय्ये। "पूर्वस्य

---

T—१. 'हतो' २. 'वि' ३. 'न्तीं' ४. 'शंकां यस्यकृ' ५. 'ण्या नि' ६. 'चोर्वा'

*पुरुवः'' (३-२-९) इति सूत्रात् पूर्वशब्दस्य पुरुव इति भवति। अपुरुवं ॥

इदानीं भगवतः प्रमञ्जितां दारप्राप्तिमुपपादयति—

इत्थं भत्तिळळवच्छळळजुअ कदुअ तं रुप्पिणिं रुप्पभूसं
दारे दारेण [2]दूरं किणवि गदुअ तं जंबपुव्वं वइं तं।
कण्णं कण्णादिजंबूणदसुविळसिअं हत्थगं कण्ह पच्छा
‡[पच्छातावेण भत्तं ताणिहिसि समणिं सच्चभामं च भाळू ॥१४॥]

छाया—

इत्थं भक्तिमद्वात्सल्ययुत ! कृत्वा तां रुक्मिणीं रुक्मभूषां
[3]दारान् द्वारेण दूरं केनापि गत्वा [4]त्वं जाम्बपूर्वां वतीं ताम्।
कन्यां कर्णादिजाम्बूनदसुविलसितां हस्तगां कृष्ण पश्चात्
पश्चात्तापेन भक्तं तनिष्यसि समणिं सत्यभामां च भामतीम् ॥

हे कृष्ण इत्थम् एवं भक्तिमद्वात्सल्ययुत सर्वसमस्यापि भगवतो मम भक्तिवशलेशादेवं प्रसाद इत्यनेन द्योत्यते। तां प्रकृतां रुक्मभूषां रुक्मविकारकुण्डलादिभूषायुक्तां रुक्मिणीं दारान् कृत्वा इत्थं प्रतिपक्ष-मथनेन दारान् कृत्वेति वा। केनापि अवाच्यद्वारेण सत्राजिन्मणिलुण्ठ-नाभियोगसम्पादनरूपेण दूरं गत्वा प्रसेनसिंहपदाङ्कितभूप्रदेशमतिक्रम्य

* 'पुरवः' मुद्रितपाठः ‡ चतुर्थपादोऽयमादर्शे नास्ति।

T—१. 'तः तदार' २. 'दूरंकि' ३. 'द्वाराद्वारेण' ४. 'तज्जा'

मणिहेतोर्जाम्बवतः पातालं गत्वा त्वं तां युद्धे ज्ञातंतत्त्वयाथार्थ्येन जाम्बवता प्रसादार्थं पुत्र्याः श्रेयोर्थं मणिना स्यमन्तकेन सह दत्तां कन्यां जाम्बपूर्वां वतीं जाम्बवतीति नाम्नाभिहितां हस्तगतां तनिष्यसि करिष्यसि। कथम्भूतां—कर्णादिजाम्बूनदसुविलसितां कर्णग्रीवादिगतैः काञ्चनमयैः कुण्डलाद्यैः सुविलसितां सुतरां विशेषणे लसितां शोभितां पश्चात् सभायाम् उग्रसेनराजसन्निधौ प्राप्तिकथनपूर्वकं यत् सत्राजितो मणिप्रदानं पश्चात् कष्टं महापुरुषे मिथ्याभिशापो मया कृत इति पश्चात्तापेन भगवत्प्रसादार्थं सत्राजिता दत्तां समणिं सत्यभामां च हस्तगतां तनिष्यसि। तां विशिनष्टि—भामतीं शोभावतीं सर्वाङ्गसुन्दरीमित्यर्थः।

[2]"कृगमोर्ऽदुअः" (३-२-११) इति सूत्रात् कृञ् गम् इत्येताभ्यां परस्य [3]क्त्वाप्रत्ययस्य [4]डित् अदुअ इत्यादेशो भवति। कदुअ, गदुअ॥

काळिंदिं इंदुवत्तं रविसुअमपि ता सा जदो सत्तिकामा
हत्थे कत्ता सभत्तं जिणिअ तह णिवे मित्तविंदं अमंदं।
सत्तं तं सत्तदेहो जुअप वळवसे सत्त बंधूण सिग्घं
सच्चं सच्चक्खरं णं तह ळहहिसि तं भोअसोक्खं
पुरीए॥ १५॥

छाया—

कालिन्दीमिन्दुवक्त्रां रविसुतामपि तस्मात् सा यतः स्वाप्तिकामा
हस्ते कृत्वा स्वभक्तां जित्वा तथा नृपान् मित्रविन्दाममन्दाम्।

---

T—१. 'तं त्वद्यतार्थेन' २. 'कृगमोस्सदुअ'
३. 'त्वप्रत्य' ४. 'सित्'

सक्तां तां सप्तदेहो युगपद् बलवृषान् सप्त बद्ध्वा शीघ्रं
सत्यां सत्याक्षरां ननु तथा लप्स्यसे त्वं भोगसौख्यं पुर्याम् ।।

पुर्यां रविसुतामपि इन्दुवक्त्रां-अनिन्दुपुत्र्या अपि इन्दुसदृशवक्त्रत्वं विरुद्धमिवेत्यपिशब्दार्थः। एवंभूतां कालिन्दीं तस्माद्धेतोः हस्ते कृत्वा परिगृह्य। कस्मात्—यस्मात् सा का त्वमित्यर्जुनेन पृष्टा सती सवितुर्देवस्य दुहिता अहं विष्णुमेव पतित्वेन प्राप्तुकामा यमुनायां पित्रा निर्मिते भवने तप आचरन्ती तिष्ठामि इति वदिष्यन्ती स्वाप्तिकामा स्वस्य विष्णोराप्तिकामा प्राप्तिकामा तस्मात्। कां हस्ते कृत्वा—स्वभक्ताम् अमन्दां मित्रविन्दां, तज्जिघृक्षून् नृपान् जित्वा हस्ते कृत्वा। तां कोसलराजपुत्रस्य नग्नजितः पुत्रीम्। सक्तां स्वस्मिन् सक्तां भक्तामिति यावत्। सत्याक्षरां सत्याक्षरवदनशीलाम्। त्वत्प्राप्तिनियमानुष्ठानतत्परां नाम्ना सत्यां सप्तदेहः सप्तसंख्याकशरीरो भूत्वा सप्त खलवृषान्। य एतान् बध्नाति तस्मै अत्यन्तवीर्यवते मम पुत्री देयेति पित्रा कल्पितान् दुर्दान्तान् वृषान् सप्त युगपत् शीघ्रं बद्ध्वा तथा हस्ते कृत्वा ननु त्वं पुर्यां द्वारवत्यां भोगसौख्यं लप्स्यसे। 'आत्मारामस्य तस्येमा वयं वै गृहदासिकाः' इत्याद्युक्तेः आत्मारामोऽपि भक्तानां तासामनुग्रहाय ताभिः सह पुर्यां क्रीडिष्यसीत्यर्थः।

"तस्मात् ता" (३-२-१३) इति सूत्रात् तस्माच्छब्दः ता इत्यादेशमापद्यते। रविसुअमपि ता। "णं नन्वर्थे" (३-२-१४) इति सूत्रात् ननुशब्दार्थे शौरसेन्यां णं इति प्रयोक्तव्यम्। सच्चक्खरं णं ॥

---

T—१. 'प्रा' २. 'तां' ३. 'न्दां तज्जि' ४. 'स्मादत्य'

भद्दं मद्देसवुत्ति जळपुळिअझसं ळक्खरूवं तळत्तं
सिग्घं भत्तूण एव्वं करिअ करगअं ळक्खणं ळक्खणड्ढं ।
पच्छा धम्मद्दिमुक्खासुरमुरणरओम्मद्दणत्तच्छळादो
कण्णाणं छस्सहस्सं ळहहिसि अउदं चब्भुदं अम्महे तं ॥१६॥

छाया—

भद्रां मद्रेशपुत्रीं जलदृष्टझषं लक्षरूपं तलाप्तं
शीघ्रं भङ्क्त्वा एवं कृत्वा करगतां लक्षणां लक्षणाढ्याम् ।
पश्चाद्धर्मद्विण्मुख्यासुरमुरनरकोन्मर्दनात्मच्छलात्
कन्यानां षट्सहस्रम् लप्स्यसेऽयुतं चाद्भुतं अम्महे त्वम् ॥

श्रुतकीर्तियुतां भद्रां करगतां कृत्वेत्युत्तरत आकृष्टव्यम् । एवं यथा भद्राम् एवं मद्रेशपुत्रीं लक्षणाढ्यां सामुद्रिकोक्तशुभलक्षणयुतां लक्षणां नाम कन्यां करगतां कृत्वा पश्चात् त्वं कन्यानां युद्धे नरकेणापहृतानां—राजकन्यानामित्यभिप्रायः—षट्सहस्रमयुतं च लप्स्यसे। कथम्भूतम् अद्भुतम् । अम्महे इति हर्षे। कथं लक्षणायाः परिग्रहप्रकार इत्यपेक्षायामाह—जलदृष्टझषं भङ्क्त्वा। जल एव प्रतिबिम्बरूपेण दृश्यमानमत्स्यमेव विशिनष्टि—तलाप्तं लक्षरूपं तलं प्राप्तं, लक्षरूपात्मकम् । अयमर्थः— स्वयंवरे राजपरीक्षार्थं कल्पितं स्थले दीर्घस्तम्भस्योपरि स्थिरस्थितम् । धर्मद्विण्मुख्यासुरमुरनरकोन्मर्दनात्मच्छलादिति । धर्मद्विषां मुख्ययोर्मुरनरकसंज्ञयोर्यदुन्मर्दनं विनाशनं तदेवात्मा स्वरूपं यस्य तस्माच्छलादित्यर्थः।

"अम्महे हर्षे" (३-२-१५) इति सूत्राद् हर्षेऽर्थे शौरसेन्यां अम्महे इति निपातः प्रयोक्तव्यः। अम्महे तं ॥

ता दासीहिं पुरिं[1] सं पुण अवि णरआ भीइसंति[2] पकाउं
णित्ता सग्गं खअत्तो गदुअ हरिअ[3] तं पारिजाअं सजाओ ।

T. १. 'पुरी' २. 'सत्ती' ३. 'अप्पारि'

**कत्ता सप्पारिजाओ वि तुवमह पुरे कण्णआणं विवाहं**

**कादूणं विग्गहेहिं[1] रमहिसि णडसंभूदहीहीरवादी ।। १७ ।।**

छाया—

ता दासीभिः पुरीं स्वां पुनरपि नरकाद्भीतिशान्ति प्रकर्तुं

नीत्वा स्वर्गं खगाग्रो गत्वा हृत्वा तं पारिजातं सजायः ।

कृत्वा सत्पारिजातोऽपि त्वमथ पुरे कन्यकानां विवाहं

कृत्वा विग्रहै रंस्यसे[2] नटसंभूतहीहीरवादिः ।।

अथ ता राजकन्याः स्वां पुरीं द्वारवतीं नीत्वा। किं कर्तुं नित्यतृप्तस्य कन्यानां तत्रापि बह्वीनां पुरीनयनमित्यपेक्षायामाह—पुनरपीति। तासां भक्तानां बहुजन्मसु सेवामाचरन्तीनां केनाप्यल्पेन दोषेण नरकरुद्धानां तद्बधेन तस्माद्भीतिशान्ति प्रकर्तुं प्रकर्षेण कर्तुं पुनरागमनवर्जनेन कर्तुम्। अत्यन्तसेवाबलेन मोक्षं दातुमिति यावत्। भवतु। तर्हि ताः पुरं नीत्वा किं करिष्यामीत्याह—स्वर्गं खगाग्रो विहगेश्वरं गरुडं प्राप्तः तमारूढः सजायः जायया सत्यभामया सहितो गत्वा दितेः देवमातुः नरकापहृतं कुण्डलं च दत्त्वेति शेषः। तं सत्यभामया प्रार्थितममरद्रुमश्रेष्ठं पारिजातं हृत्वेत्यनेन देवान् जित्वेति द्योत्यते। सत्पारिजातोऽपि सतामभीष्टप्रदानेन पारिजातोऽपि द्वितोयमिव पारिजातं मधुलुब्धस्वर्गागतभ्रमरजुष्टं सुरभिवासितदिगन्तं पुरे द्वारवत्याख्ये सत्यभामागृहोद्याने[3] कृत्वा पूर्वं दासीभिः नरकार्जितबहुधनभारानतग्रीवैश्च भटैर्नीतानां कन्यकानां विवाहमेकस्मिन्नेव मुहूर्ते कृत्वा। कथमेकेन मयैवं करिष्यते। नैवमित्याह—विग्रहैरिति। इच्छाकृतैस्तावद्भिर्विग्रहैः शरीरैः। यथा रासक्रीडायामित्यर्थः। एवं कृत्वा किं करिष्यामि—

T. १. 'ही' २. रमिष्यसे ३. 'मापुरोद्या'

नटसंभूतहीहीरवादिः हास्यादिरसंप्रदविदूषकादिभूमिकामापन्नेभ्यो नटेभ्यः संजातहीहीरवादिः[1] सन् रंस्यसे[2]। वैदिकानि च कर्माणि लोकसंग्रहार्थं करिष्यसीति वाक्यशेषः।

'ही ही वैदूपके'[3] (३–२–१६) इति सूत्राद् विदूषकसम्बन्धिनि हर्षे हीहीति निपातः प्रत्योक्तव्यः। हीहीरवादी॥

तस्मिन् कालेऽपि भवन्तं द्रष्टुमहमागमिष्यामि इत्याह—

**हीमाणहे अण्णगई णिरत्था**
**हीमाणहे दारवदी सुपुण्णा।**
**दारेहि कण्हस्स खु दंसणत्थं[4]**
**कय्या[5] गइत्ति च्चिअ आगमिस्सं॥ १८॥**

छाया—

हीमाणहे अन्यगतिर्निरर्था
हीमाणहे द्वारवती सुपूर्णा।
दारैः कृष्णस्य खु दर्शनार्थं
कार्या गतिरित्येवागमिष्यामि॥

दर्शनार्थं कार्यैव गतिर्गमनमित्यभिप्रायेणागमिष्यामि। तदैवं विशेषेणाभिप्राये को हेतुरिति चेच्छृणोतु भवानित्याह—हीमाणहे इत्यादि। तत्र सनिर्वेदमाह—हीमाणहे अन्या गतिर्निरर्था इति। पुनः सविस्मयमाह—हीमाणहे द्वारवतीत्यादि। निरर्था निष्प्रयोजना। अन्या गतिः द्वारवत्याः स्थलान्तरगतिः। अतः सा न कार्या। हीमाणहे अहो बत। कृष्णस्य दारैः भार्यादिभिः द्वारवती सुपूर्णा खु। सम्भावितोऽयमर्थः। अतस्तद्दर्शनार्थं तत्र गतिः कार्यैव।

---

T. १. 'वादिभिः सन्' २. 'रमिष्यसे' ३. 'षकात्'
४. 'दस्स' ५. 'कंया'

"हीमाणहे निर्वेदविस्मये" (३-२-१७) इति सूत्रान्निर्वेदे विस्मये च शौरसेन्यां हीमाणहे इति प्रयोक्तव्यम्। निर्वेदे—हीमाणहे अण्णगई। विस्मये—हीमाणहे दारवदी॥

त्वां च तव योगप्रभावं च तत्राहं द्रक्ष्यामीत्याह—

**एक्को एव्व भवं कहिंचि[1] भवणे भय्याइ[2] संवीजिओ**
**वीअंतो अईहिं[3] कहिंवि[4] समरक्कीळं कुणंतो कइ।**
**अण्णस्सि सुअळाळणं अह कहिं हंजेत्ति सद्दादरो[5]**
**दिट्ठो होस्सिदि मंदहासकहिदस्सव्वावई[6] मे मए॥१९॥**

छाया—

एक एव भवान् कस्मिंश्चिद्भवने भार्यया संवीजितः
बीजन्नतिथिं कस्मिन्नपि समरक्रीडां कुर्वन् क्वचित्।
अन्यस्मिन् सुतलालनमथ कस्मिन् हञ्जे इति शब्दादरः
दृष्टो भविष्यति[7] मन्दहासकथितस्वव्याप्तिर्मे मया॥

वस्तुत एक एव भवान् कस्मिंश्चिद्भवने भार्याणां भवनेष्वन्यतमस्मिन् भवने भार्यया संवीजितो मया दृष्टो भविष्यति। तथा कस्मिन्नपि भवने अभ्यागतमतिथिं तच्छ्रमापनुत्त्यर्थं स्वयमेव वीजन् मया भवान् दृष्टो भविष्यतीत्याह। एवमुत्तरत्रापि मया दृष्टो भवान् भविष्यतीति योजनीयम्। क्वचिद्भवने समरक्रीडां युद्धक्रीडां वृष्णिभिः सह कुर्वन्, अन्यस्मिन् भवने सुतलालनम्। कुर्वन्नित्यनुषज्यते। अथ कस्मिन् भवने कस्याश्चिद्भार्यायाः कस्मिंश्चिद्गृहे हञ्जे इति शब्दादरः। कयाचिदत्यन्तमिष्टया भार्यया चेटीं प्रति प्रयुक्ते हञ्जे इति शब्दे आदरो यस्य तादृगवस्थो

T. १. 'कहोचि'
२. 'भंआइ'
३. 'इहो'
४. 'कहोपि'
५. 'सत्ता'
६. 'वइम्मे'
७. 'प्यसि'

मे मह्यम् मन्दहासकथितस्वव्यापृतिः मन्दहासेन उपचारतः कथिता स्वस्य व्यापृतिर्व्यापारो येन स तथाभूतो मया दृष्टो भविष्यति। भवान् मन्दहासेत्यादि सर्वत्र योज्यम्।

"एवार्थे एव्व" (३-२-१८) इति सूत्रात् तत्र एव्व इति निपातः प्रयोक्तव्यः। एक्को एव्व। "हंजे चेट्याह्वाने" (३-२-१९) इति सूत्रात् चेट्याह्वाने हंजे इति प्रयोक्तव्यः। हंजे।

बहुविग्रहपरिग्रहे भगवद्विषयाश्चर्यबोधं साम्प्रतिकं जातमुपपत्त्या गमिष्यन्नाह नारदः—

**वुण वुण अवि मागहीइ पुव्वं**
**शळहगणाह हुदाशणे जहा वा।**
**णिअहिइ विअओ शअण्णआहं**
**तुइ वअणाइ गइं खु वीसरूवे ॥ २० ॥**

छाया—

पुनः पुनरपि मागध्याः पूर्वं
शलभगणस्य हुताशने यथा वा।
द्रक्ष्यति विजयः स्वान्येषां
त्वयि पृतनाया गतिं खु विश्वरूपे ॥

विजयोऽर्जुनः त्वयि विश्वरूपे विश्वरूपधारिणि स्वान्येषां स्वस्यान्येषां च दुर्योधनप्रभृतीनां पृतनायाः सेनाया गतिं दंष्ट्राकरालवदनद्वारप्रवेशं द्रक्ष्यति। महाभारतयुद्धारम्भकाल इति शेषः। अतस्तव विश्वरूपस्य किमिह भार्यासंख्यातनुत्वे चित्रमित्युत्तरश्लोकस्य सम्बन्धः। तत्र तावद् 'भेत्तुं तद्बलमपरं भविष्यतीति मुक्तो जरासन्ध' इति (स० १२-श्लो ६)पूर्वमुक्तम्। तत्प्रकारमुपपादयन् कुरुपाण्डवसेनाया विश्वरूपगतिमेव विशिनष्टि—पुनः पुनरपीति। पूर्वं यवनवधात् पूर्वं पुनःपुनरपि

एकवारमानीतायां सेनायां त्वया भग्नायां पुनःपुनरानीताया विनाशोदर्काया मागध्याः पृतनायाः त्वयि गतिं यथा—यथा वा शलभगणस्य हुताशने गतिः।

मागहीइ इत्यनेन मागधीभाषा आरभ्यत इति सूच्यते। "त्वाड्डाहो ङसः" (३-२-२८)इत्यनेन तु विकल्पेन आद् अवर्णात् परस्य ङसो मागध्यां भाषायां आह इत्यादेशो ङिद्भवति। शलहगणाह। पक्षे तु प्रसिद्ध एव। किन्तु सकारस्य शकारो भवति *आगामिसूत्रात्। "आमो[1] डाहङ्"(३-२-२६) इति सूत्रेण अवर्णात् परस्य आमो विकल्पेन आह इति भवति[2] ङित्त्वात् सानुनासिक उच्चारः। शअण्णआहँ॥

इतोऽपि न विस्मयस्त्वयि देवदेवे इत्याह—

**अवि अ शुळअणे शे शव्वयज्ञप्पदेशे**
**युवअ बहुअणूही[3] यादि यादप्पमोदे।**
**अणहिहदणिअच्छे ळे तिळोहाणशत्ते**
**किमिह खु तुह चित्तं भय्यसंखातणुत्ते[4] ॥ २१ ॥**

छाया—
अपि च सुरजनः स सर्वयज्ञप्रदेशाद्
युगपद् बहुतनुभिर्याति जातप्रमोदः।
अनभिहत[5]निजाक्षो रे तिरोधानशक्तः
किमिह खु तव चित्रं भार्यासंख्यातनुत्वे॥

अपि च स प्रसिद्धः सुरजनः सर्वयज्ञप्रदेशात् सर्वेषां बहूनामेककालप्रवृत्त-यागानां ब्राह्मणादीनां यज्ञभूमेः[6] युगपद् बहुतनुभिः भूतवशित्वेन इच्छाकृतैरनेकशरीरैः

T. १. 'आमो ङित्व'
२. 'ति शअण्णआहं'
३. 'बणू'
४. 'भंअरंबातणु'
५. 'हित'
६. 'भूमिः'

* "स्रोः श्लौ" (३-२-३६)

जातप्रमोदो याति। ननु महीमहीभृद्व्यवहितनयनत्वात् कुतस्तेषां यज्ञप्रदेशदर्शनोपपत्तिः। नैष दोषः। असक्तदृष्टित्वादस्माकं काचाभ्रपटलादिभिरिव तैरप्रतिहतनयनरश्मित्वात् तेषां महाप्रभावानामित्याह—अनभिहतेति[1]। रे इति पादपूरणे। ळे इति तु मागध्याम्। तर्हि यागशालायामृत्विज इव किमिति न दृश्यन्ते ते इत्याह—तिरोधानेति। मनुजा अप्यञ्जनादिना तिरोधीयन्ते, एवं च देवेषु कात्रानुपपत्तिरिति भावः। अत इह द्वारवत्यां तव सर्वेश्वरस्य सर्वजगदुपादानभूतस्य भार्यासंख्यातनुत्वे किं चित्रम्। भार्याणां संख्यैव संख्या यासां तास्तनवो यस्य भावस्तत्त्वम्। तस्मिन्नियमित्यर्थे किमाश्चर्यमित्यर्थः।

"स्रोः श्लौ" (३-२-३६) सकाररेफयोर्यथासंख्यं शकारलकारौ भवतः। शुल। "सौ पुंस्येलतः" (३-२-३०) इति सूत्रात् पुल्लिङ्गे सौ परे अतोऽकारस्य लित् ए इति भवति। शुळअणे शे, लित्त्वान्न विकल्पः।

भवत्वेवम्। तदा मद्वृत्तान्तदर्शनानन्तरं भवान् किं करिष्यति। अत आह—

हगे[2] णमेमीस[3] पअंबुअं दे
हगे खु धञ्ञा[4] तुह दंशणादो।
पुञ्ञं[5] च पञ्ञा[6] च कअञ्ञळीणं
कअञ्ञ[7] दे कुञ्ञळ[8]ळाजशत्तू॥ २२॥

छाया—

अहं नमामीश पदाम्बुजं ते
वयं खु धन्यास्तव दर्शनात्।
पुण्यं च प्रज्ञा च कृताञ्जलीनां
कृतज्ञ ते कुञ्जरराजशत्रो॥

T. १. 'हिते'
२. 'हग्गे'
३. 'मिस'
४. 'धञ्ञा'
५. 'पुञ्ञा'
६. 'पञ्ञा'
७. 'ञ्ञ'
८. 'कुन्तळ'

हे ईश अहं ते पदाम्बुजं नमामि। वयं धन्याः खु निश्चितमेतत्। कुतः। यतः पुण्यं प्रज्ञा ज्ञानं च ते कृताञ्जलीनां स्तुतिनमस्कारार्चनादिमताम्। हे कृतज्ञ पत्रपुष्पफलादिना[1] स्वल्पामपि पूजां कृतां जानासि। तत्फलं महत् प्रयच्छसीति यावत्। हे कुञ्जरराजशत्रो। अनेन कंसवधादिस्मारकेण गुणवर्णनलक्षणा स्तुतिरेव क्रियते इति।

'हगेऽहंवयमोः'(३-२-३१) इति सूत्रान्मागध्यामहंवयमोः स्थाने हगे इत्यादेशः सिध्यति। अहमि—हगे णमेमि। वयमि—हगे खु धञ्ञा[2]। "न्यण्यज्ञञ्जां ञर्[3]" (३-२-३७) इति सूत्राद् न्य[4] ण्य ज्ञ ञ्ज इत्यतेषां ञ्ञकारो विधीयते। धञ्ञा-पुञ्ञं-पञ्ञा-अञ्ञलीणं।

यणअ सुयगदीये यश्शमेवं पुळीए
णमिअ पदयुगं दे शग्गमुय्यंतशक्कं।
शअणुअळणशीळं मच्छळा दूअवक्का
गदुअळिखुडिअं[5] तं पोण्डअं काहिसीस[6] ॥ २३ ॥

छाया—

जनक सुजगत्या यास्याम्येवं पुर्याः
नत्वा पदयुगं ते स्वर्गमुद्यच्छक्रम्।
स्वानुकरणशीलं मत्सराद्[7] दूतवाक्याद्
गत्वारिखण्डितं[8] त्वं पौण्ड्रकं करिष्यसीश[9] ॥

हे सुजगत्याः शोभनाया जगत्या जनक एवमुक्तप्रकारेण ते पदयुगं नत्वा पुर्या द्वारवत्या उद्यच्छक्रं तवासुरवधप्रवृत्त्या उद्यता स्फुरता शक्रेण युक्तं स्वर्गं

---

T. १. 'तत्रादिपुष्पफणादिना'
२. 'ज्ञा'
३. 'व्यज्ञज्ञा ज्ञन्'
४. ण्य ज्ञ ञ्ज इत्येतेषां ज्ञकारो विधीयते। धज्ञा-पुज्ञं-पज्ञा—अज्ञळिणं॥
५. 'अं पोडअं'
६. 'सम्'
७. 'रा दूत'
८. 'तं पौ'
९. 'शम्'

यास्यामि। एवं मागधीभाषामवलम्ब्य हास्यरसेन बालवपुषं भगवन्तं तोषयन् नारदो हास्योपेतं चरितान्तरमाह—हे ईश दूतवाक्याद् अहमेवावतीर्णो वासुदेवः त्वं तु मिथ्यावासुदेवः। अतस्त्वं वासुदेवाभिमानं परित्यज्य मां शरणं याहि। नो चेद् देहि ममाहवमित्येवंरूपात् पौण्ड्रकप्रहितस्य दूतस्य वाक्याद्धेतोर्गत्वा त्वं पौण्ड्रकमरिखण्डितं श्रीसुदर्शनेन खण्डितं खण्डितशिरसं करिष्यसि। तत्र पौण्ड्रकस्य किं वाङ्मात्रेण वासुदेवत्वमथवा तत्र किञ्चिन्निमित्तमस्तीत्याह—मत्सरात् स्वानुकरणशीलं स्वस्य कृष्णस्य तवानुकरणं कृत्रिमशङ्खचक्रादिशोभितचतुर्बाह्वादीनां नटवद्धारणं[1] तच्छीलम्। तथा च भगवद्वेषधारणनिमित्तमित्यर्थः[2]।

"जयद्यां यः" (३–२–३८) इति सूत्राद् जकारयकारद्यकाराणां यकारो मागध्यां भवति। जस्य–यणअ, यस्य–यश्शं, द्यस्य–उय्यन्त। यकारस्य यकारविधिः जकारनिषेधार्थम्। इतः परं मागध्युदाहरणं न भविष्यति॥

**तत्तो कस्सिं[3]पि काळे रमिअ पिअगिराहिं[4] पिआहिं[5] णिसाए**
**धीरो णोमाळिआदिग्गहिअसअधरो कुंकुमाळित्तगत्तो।**
**पच्चूसे तं जहन्तो सअणमह विहिल्लाण[6]विक्खेपहोमे**
**दाणं[7] कत्तुं सभाओ णिअहिसि जअडन्तं[8] पहू राअदूअं ॥२४॥**

छाया—

ततः कस्मिन्नपि काले रन्त्वा[9] पिकगीर्भिः (प्रियगीर्भिरिति वा) प्रियाभिर्निशायां
धीरो नवमालिका[10]दिग्रथितस्रग्धरः[11] कुङ्कुमालिप्तगात्रः[12]।
प्रत्यूषे त्वं जहत् शयनमथ विधिस्नानविक्षेपहोमान्
दानं कृत्वा सभागो द्रक्ष्यसि त्वरमाणं प्रभू राजदूतम् ॥

---

T. १. 'रणः'
२. 'त्यर्थः। इति सू'
३. 'स्सीपि'
४. 'राही'
५. 'आही'
६. णषिउक्षेखेप'
७. 'दाणीकत्तुं'
८. 'ढत्तप्पहू'
९. 'रमित्वा'
१०. 'काग्रथि'
११. 'रधरं'
१२. 'त्रम्'

ततः भार्याभिश्चिरकालरमणानन्तरं कस्मिन्नपि काले रन्त्वा[१] ताभिः सह पिकगीर्भिः प्रियाभिः सह । कदा—निशायाम् । कथंभूतः सन्—धीरः । अनङ्ग[२]-बाणा यस्येन्द्रियं विमथितुं न शेकुरिति भागवत उक्तम् । धीरः सन् रन्त्वा[३] । अधैर्यनटने तु को दोषः । पुनरपि कथंभूतः सन्नित्याह—नवमालिकेत्यादि । स्वतः सुगन्धदेहोऽपि मालाकुङ्कुमादिभिः विशेषेण सौलभ्यात्तङ्कारयुक्तः सन् । एवं रन्त्वाहं[४] किं करिष्यामीति चोदित आह—प्रत्यूषे शयनं जहत् त्यजन् । अथ श्रुतिस्मृतिसिद्धविध्य[५]नुसारेण स्नानादीन् दानं च कृत्वा सभागः सभां गतः । ऐहिकरूपेणे[६]त्यौचित्यात् सिध्यति । एवं दारुकानीतरथेन स्वभवनाद् गत्वा सुधर्मा-ख्यायां देवसभायां काञ्चनमयपरमासन उपविष्टः सर्ववृष्णिभिः परिवृतस्त्वं त्वरमा-णम्—आगतमिति सिध्यति—राजदूतं राज्ञां जरासन्धनिरुद्धानां दूतं द्रक्ष्यसि । प्रभुः जरासन्धवधे राजरक्षणे च समर्थ इत्यर्थः ।

"नवमालिकाबदरनवफलिकापूगफलपूतर ओल्" (१-३-४) इति सूत्रा[७]-देष्वादेरचः परेण साञ्झला सह ओत्वं भवति । लित्त्वान्न विकल्पः । णोमाल्लिआदि शेष[८] उपलक्षणम् । पूतरो धवः । "तुवरजअडौ त्वरेः" (२-४-१४८) इति सूत्रात् जअडन्त इत्यस्य सिद्धिः । 'त्वरेस्तुवर' इति वाररुचेऽप्युक्तम् ॥

अम्हे रक्खेहि बद्धे खु मगहपइणा णाह णाहो ण अण्णो
राआणं वक्कमित्थं[९] ति णमिअ भणिए तेण तो राअसूए ।
हं पत्थप्पत्थणादो तुह पअजुअळं पत्तुमत्थं च वोच्छं
इंदप्पत्थं तुमं सो तुरिअबहुबळं जंतमिच्छाइ दच्छं ॥ २५ ॥

---

T. १. 'रमित्वा'
२. 'ङ्गबाणैर्यस्ये'
३. 'रमित्वा'
४. 'रमित्वा'
५. 'विधानु'
६. 'ऐकरू'
७. 'त्राजअडं वा भवति, ल्त्विा'
८. 'षोपलक्षणम्'
९. 'त्थत्ति'

छाया—

अस्मान् रक्ष बद्धान् खु मगधपतिना नाथ नाथो न[1] अन्यो
राज्ञां वाक्यमित्थमिति नत्वा भणिते तेन ततो राजसूये।
अहं पार्थप्रार्थनात् तव पदयुगलं प्राप्यार्थं च वक्ष्यामि
इन्द्रप्रस्थं त्वां स त्वरितबहुबलं यान्तमिच्छया द्रक्ष्यामि ॥

ततो विज्ञापनानन्तरं प्रतिहारैः प्रवेशितेन तेन राजदूतेन नत्वा हे नाथ मगधपतिना बद्धानस्मान् रक्ष। खु संशयेन विना रक्ष[2]। संसारपाशबद्धानां विशेषेणैतेन बद्धानामप्यस्माकं त्वत्तोऽन्यो नाथो नास्ति च। तस्माद्रक्षैव। इत्थं वाक्यमिति भणिते सति राजसूये विषये पार्थप्रार्थनात् पार्थेन युधिष्ठिरेण ममापेक्षितं राजसूयकरणमत्यन्तेष्टभवन्मुखेन तन्निर्वोढा भगवान् विज्ञापनीय[3] इति प्रार्थनादहं तव पदयुगलं प्राप्य अर्थं युधिष्ठिरापेक्षितं वक्ष्यामि च। सोऽहं पुनस्त्वां मागधं घातयिष्यामीति निवर्तितदूतं राजरक्षा[4]राजसूयनिर्वाहोन्मुखम् इन्द्रप्रस्थं यान्तं द्रक्ष्यामि। अनुगम्य वीणावादेन सेवमानो द्रक्ष्यामीत्यर्थः। त्वरितबहुबलमिति भगवद्यानविशेषणम्।

"अतिङि तुरः" (२-४-१४६) इति सूत्रात् तिङ्वर्जिते प्रत्यये परे तुर इत्यादेशो भवति। तुरिअबहुबल्म्।

पहे[5] वीणावादे मह मुदमहं[6] दे मुहसुअं
मुणंतो भत्तीए सविहपगओ[7] तो जहविही।
पुरं पत्तं दच्छं महमहिअगंधड्ढकुसुमं
तुमं पच्छा[8] भीमज्जुणविळसिअं मागहपुरे ॥ २६ ॥

---

T. १. 'न चान्यो'
२. 'क्षत्'
३. 'याम्'
४. 'क्षां'
५. 'बहे'
६. 'मुह'
७. 'बग'
८. 'चक्षो'

छाया—

पथि वीणावादे मम मुदमहं ते मुखश्रुतं
जानन् भक्त्या सविधप्रगतस्ततो यथाविधि।
पुरं प्राप्तं द्रक्ष्यामि प्रसृतगन्धाढ्यकुसुमं
त्वां पश्चाद्भीमार्जुनविलसितं मागधपुरे॥

पथि मम वीणावादे विषये ते मुदं ते मुखश्रुतं मुखविकासप्रकटितं जानन्नहम्। दूरगतस्य तव समाधिराहित्ये कथं तज्ज्ञानमिति न वाच्यम्। यतोऽहं भक्तिपारवश्येन सविधप्रगतः समीपं प्राप्तः। एवं मय्यनुग्रहसूचनीं विकसच्छ्रीमुखकमलव्याख्यातां मुदं जानन् सुखमनुभवन् अहं ततः प्रसृतगन्धोपेतकुसुमयुतं पुरमिन्द्रप्रस्थं यथाविधि प्राप्तं त्वां द्रक्ष्यामि। यथाविधीत्यस्यायमर्थः—सर्वेषामप्यात्मत्वेन प्रियतमस्य विशेषतो बान्धवत्वेनात्यन्तमिष्टस्य स्वस्य स्नेहपारवश्यात् सहसानुज्येष्ठपरिष्वङ्गे कृते पुनर्विध्यनुसारेण अर्जुनेन परिष्वक्तो नकुलसहदेवाभ्यामभिवादितश्च भविष्यसीति। पश्चादिति। सुखेन तत्र इन्द्रप्रस्थे निवासस्य अर्जुनेन सह खाण्डवदाहादेरेकदा युधिष्ठिरेण स्वयमेव राजसूयसम्पादनप्रार्थनकरणस्य तदङ्गतया भगवदाज्ञया भ्रातृभिर्दिग्विजये कृते जरासन्धो न जित इति धर्मपुत्रसखेदवेदनस्य भीमार्जुनाभ्यां सह तज्जयार्थं गमनस्य पश्चादित्यर्थः। भीमार्जुनाभ्यां विलसितं विशेषेण शोभितं त्वां द्रक्ष्यामीति।

"महमहो गन्धे" (३-१-११) इति सूत्रात् प्रसरतेर्गन्धविषये महमह[१] इत्यादेशो भवति। महमहिअ॥

जरासन्धवधप्रकारमाह—

धअविप्पतणूहि जाइए
पहु तुम्हेहि रणे जरासुओ।
उवदेसपए भुवेहिए
तुह आअड्[२]डिअहीममारिओ॥ २७॥

T. १. 'मह इत्यादेशो' २. 'इडि'

छाया—

धृतविप्रतनुभिर्याचिते
प्रभो युष्माभी रणे जरासुतः।
उपदेशपदे भविष्यति
तव व्याप्रुतभीममारितः॥

हे प्रभो छलं विना जरासन्धमपि हन्तुं समर्थः तथापि तं भीमसेनेन घातयितुं छलप्रयुक्ते युष्माभिर्धृतविप्रतनुभिः अङ्गीकृतब्राह्मणवेषैर्युष्माभिरातिथ्यवेलायां कामदानप्रतिज्ञां तेन कारयित्वा युद्धं नो देहि इति द्वन्द्वयुद्धे याचिते जरासुतो भीमसेनेन मारितो भविष्यति। भीमसेनेन मारित इत्यनेन तर्हि यूयं न विप्रा इति वदन् भगवता विज्ञापितो भीमो मत्समबल इति भीमसेनेन सह द्वन्द्वयुद्धे प्रवृत्ते इति सूच्यते। भीमोऽपि न स्वमहिम्ना तं हनिष्यतीत्याह—तव उपदेशपदे उपदेशविषये व्याप्रुतेति। समशिक्षाबलतया निर्विशेषे युद्धे जातेऽश्वत्थपत्रं भित्त्वा अन्यतरस्य विदलस्याग्रेण अन्यतरस्य मूलं सन्धाय देहभेदेन एवं सन्धानवधोपायः इति संज्ञया भावित उपदेशे कृते तच्छरीरभेदनादिना भीमो हनिष्यतीत्यर्थः।

"व्याप्रेराअड्डः[1]" (३-१-१३) इरि सूत्राद् व्याप्रेर्धातोः आअड्ड[2] इत्यादेशो भवति आअड्डिअ[3]॥

शिशुपालवधमाह—

इअ ककुहजए संपापिए[4] अंतमंगे
तुइ णइ गडिए तो राअसूए पवुत्ते।
तुह हु सअळपूआपुज्ज पूआपकोवा
असुहरणकरो[5] सो[6] चक्कथिंपीइ चेज्जो॥ २८॥

---

T. १. 'स्थः'
२. 'डुढः'
३. 'आअड्ढिअ'
४. 'सपा'
५. 'गसु'
६. 'रो चक्कथिप्पीइ'

छाया—

इति ककुब्जये संप्रापिते अन्तमङ्गे
त्वया एवं घटिते ततो राजसूये प्रवृत्ते ।
तव हु सकलपूजापूज्य पूजाप्रकोपा-
द[1]सुहरणक[2]रः स चक्रतृप्त्या चैद्यः ॥

इति उक्तजरासन्धवधप्रकारेण ककुब्जये दिग्विजये अङ्गे त्वयैव अन्तं संप्रापिते। ततः अनन्तरं त्वयेत्यत्रापि सम्बध्यते। त्वया बद्धराजमोचनसत्का[3]रघटितराजसूये प्रवृत्ते च सत्यङ्गिनि स जयः वैकुण्ठलोकवासिनस्तव द्वारपालः सनकादिभिः स्वापचारात् शप्तस्तृतीयजन्म प्राप्तश्चैद्यः शिशुपालः चक्रतृप्त्या चक्रस्य श्रीसुदर्शनस्य त्वया प्रयुक्तस्य निजरुधिरासुप्रदानेन या तृप्तिस्तया प्रायश्चित्तरूपया तव पूजायामग्रपूजायां सहदेवेन कृतायां यः प्रकोपः। तल्लक्षणस्य दुर्भाषणव्यक्तीकृतस्य दोषत्वं स्फोरयन् सम्बोधयति—हे सकलपूजापूज्य सकलानां देवतानां या पूजा तयापि पूज्य। येऽप्यन्यदेवता यजन्ते तेऽपि मामेव यजन्तीति वक्ष्यमाणाद्भगवद्वचनादेव प्रमाणभूतात् ।

"घटेर्गडः" (३-१-५८) इति सूत्राद् घटेर्धातोः गड इत्यादेशो विकल्पेन भवति। गडिए ॥

पुनरपि लोकस्थितिहेतुभूतश्रुतिस्मृतिविहितधर्मपरिपालनं तद्विघ्नभूतजनसंहारेण करिष्यसि। तथा त्वत्कीर्तिशोधितमनसां स्वस्वरूपभूतब्रह्मज्ञानं च मोक्षफलमुपदेक्ष्यसीत्याह—

**साळ्ळं कळ्ळं वि[4]रहिसि तहा दन्तवक्कं च वक्कं**
**कट्ठं दुट्ठं [5]परणिवकुळं धम्मविग्घं अविग्घं ।**

T. १. 'गसुह'
२. 'रक्षक'
३. 'राघटि'
४. 'रहिडि'
५. 'चर'

**दारादारा सउळमपि तं बम्हसावाहि बम्हो**

**णाणं णाणं उवदिसिहिसे [1]फग्गुणाफग्गु णाणं ॥ २९ ॥**

छाया—

साल्वं कल्यं भङ्क्ष्यसि तथा दन्तवक्त्रं च वक्रं
कष्टं दुष्टं परनृपकुलं धर्मविघ्नमविघ्नम् ।
द्वाराद्द्वारात् स्वकुलमपि त्वं ब्रह्मशापाद् ब्रह्मन्
[2]नृणां नृणामुपदेक्ष्यसि फल्गुनादफल्गु ज्ञानम् ॥

कल्यमिति क्रियाविशेषणम् । [3]कल्यः साल्वप्रदर्शितमायानिरसनसमर्थो यथा भवसि [4]तथा । अनेन [5]प्रपञ्चेन्द्रजालहेतुभूतमायायाः स्वज्ञानमात्रेण निरसनसमर्थे त्वय्येतन्नाश्चर्यं नाश्चर्यमिति ध्वन्यते । तादृशब्रह्मभूतस्त्वं कल्यं साल्वं भङ्क्ष्यसि । तथा वक्रम् आर्जवपरित्यागेन सनकादिविरोधप्राप्त्या तल्लब्धशापं विजयाख्यं [6]जयाख्यचैद्यवत् तृतीयजन्मप्राप्तं दन्तवक्त्रं च भङ्क्ष्यसि । धर्मविघ्नं धर्मविघ्नभूतत्वादेव दुष्टम् । तत्रापि धर्मभङ्गो अत्यन्तसाहसिकत्वेन कष्टम् । परनृपकुलं । उक्तेतरराजकुलम् । द्वाराद् अर्जुनादिद्वारेण अद्वाराद् द्वाराभावात् स्वयमेव चेत्यर्थः । निरङ्कुशैश्वर्येण अविघ्नं भङ्क्ष्यसि क्रियाविशेषणमेतत् । कांश्चिद् घातयिष्यसि कांश्चिद्धनिष्यसीत्यर्थः । अन्ते ब्रह्मशापाद् विश्वामित्रारुणिकण्वदुर्वासःप्रभृतिब्राह्मणशापात् तच्छापव्याजेन स्वकुलमपि दुष्टमेतत् पुनर्मयि गते धर्मभङ्गाय भविष्यतीति भङ्क्ष्यसि । एवं धर्मप्रतिकूल[7]ासुरराजन्यवधं कृत्वा युधिष्ठिरादीन् धर्मं कारयित्वा स्वयमपि लोकसंग्रहार्थं कृत्वा ब्रह्मज्ञानमपि युद्धार[8]म्भादावर्जुनादेरुपदिष्टं तद्द्वारा सर्वेषामप्युपदेक्ष्यसीत्याह—नृणां नृणामिति । प्रपञ्चस्य फल्गुत्वं अकृत्रिमगीः शंसति, तद्विपरीतं च [9]ब्रह्मणः शंसति, तथा च फल्गुज्ञानं प्रपञ्चविषयं ज्ञानं,

---

T. १. 'हग्गु'
२. 'ऋणं'
३. 'का'
४. 'तदा'
५. 'प्रबरं चेन्द्रं'
६. 'रुयं'
७. 'सुरो जन्य'
८. 'म्भावर्जना'
९. 'ब्राह्मणः'

अज्ञानं चाफल्गुज्ञानम् । फल्गुनाद् अर्जुनात् । सर्वेषामप्यधिकारिणां फल्गुन-पदमुपलक्षणम् । उद्धवादित्यपि द्रष्टव्यम् । एतद्द्वारा तत्तच्छिष्यपरम्परया नृणां नृणां सर्वेषामपि मनुष्याणाम् उपदेक्ष्यसीत्यर्थः ।

"भञ्जेर्वेमअमुसुमूरंमूरपविरज्जसूरसूडकरञ्जनिरञ्जविराः" (३ - १ - ४६) इति सूत्राद् भञ्जेर्धातोः एते नव आदेशा भवन्ति । विरहिसि ॥

इदानीं पृथग् रामचरितवर्णनपूर्वकं कृतावतारकार्यस्य भगवत इच्छयैवोत्पादितविग्रहद्वयस्येच्छयैवोपसंहारमाह—

**जण्णग्घग्घे विविदमहणे रेवईजाणिरामे**

**सीआजाणिप्पसमविसमे मोसळे मोत्तदेहे ।**

**मूरंते तं सअळसअणे अण्णमण्णं च मत्ते**

**पादप्पत्ते मुसळअसरे गच्छिसे छण्णभावं ॥ ३० ॥**

छाया—

यज्ञघ्ने विविदमथने रेवतीजानिरामे

सीताजानिप्रसमविषमे मौसले मुक्तदेहे ।

भञ्जति त्वं सकलस्वजने अन्यमन्यं च मत्ते

पादप्राप्ते मुसलजशरे गमिष्यसि छन्नभावम् ॥

रेवती जाया यस्य स रेवतीजानिः । अनेन आनर्तेश्वरेण रैवतेन विरिञ्चवचनाद्दत्ता स्वसुता रेवती रामभार्या भविष्यतीति सूचितम् । एवंभूते रेवतीजानिरामे मौसले वयमेषां व्यवहितविप्रकृष्टादिज्ञानमपास्य कुर्म इति क्रीडन्तो यदुकुमारकाः संभूय सर्वे निश्चित्य तदुपायत्वेन साम्बं स्त्रीवेषेण वेषयित्वा मार्गेणागच्छतो

T. १. 'असुमूरं मूरं वविरज्ज'
२. रज्जनिरज्जं वि'
३. 'जाणि वसमपिस'
४. 'त्तळेहे'
५. 'णणअण्णच्च'
६. 'च्छतौ'

विश्वामित्रादीनुपगम्य हे भगवन्तः इयं गर्भिणी पुत्रं पुत्रीं वा जनयिष्यतीति प्रक्ष्यन्ति[१]। ततस्तैः स्वनिराकरणेन कुपितैः मूर्खाः न पुत्रं पुत्रीं वा जनयिष्यति किन्त्वायसं मुसलं युष्मत्कुलनाशनं जनयिष्यतीति भवदिच्छानुसारेणोक्त एव साम्बस्योदरं विदार्य जातेन[२] लेशावशेषं चूर्णीकृतेन[३] समुद्रे प्रक्षिप्तेन[४] तत्तीरे लहर्यानीतेन पुनर्वज्रसारैरकरूपेण[५] संभूतेन कुलनाशनेन जातेन मुसलेन यदु यदूनां मिथो युद्धं तन्मौसलमित्युक्तम्। यः रेवतीजानिरामे एवंभूते मौसले प्रवृत्ते मुक्तदेहे योगेन त्यक्तदेहे सति बालाश्वत्थस्याधस्तात् स्थितस्त्वं[६] मुसलजशरे मुसल-चूर्णावशिष्टदाशदत्तमत्स्योदरगतायःखण्डनिर्मिते शरे पादप्राप्ते जराख्यव्याधेन मृदुमृगशङ्कया क्षेपणात् तवारुणश्रीपादाम्भोरुहोदरं प्राप्ते। प्राप्त इत्यनेन वेधने जातेऽन्येषामिव प्रसक्तदुःखनिषेधः। ततः किम्। छन्नभावं गमिष्यसि अत्यन्तरमणीयां स्वां तनुमस्मद्भाग्याभावेन[७] नयनागोचरभूतां करिष्यसीत्यर्थः। कदा पुनर्मौसले प्रवृत्ते मुक्तदेहो राम इत्यपेक्षायामाह—भङ्गतीति। सकलस्वजने सकलयादवजने एरक-प्रधानैरायुधैरन्यमन्यं च, अन्यस्मिन्नन्यास्मिन्निति सिध्यति, भङ्गं कुर्वति सति। तत्र हेतुगर्भं[८] मत्त इति विशेषणम्। शापप्रायश्चित्तापदेशेन त्वन्नियोगात् प्रभासतीर्थ-स्नानं कृत्वा विप्रान् भोजयित्वा स्वयमप्युपभुज्य मनसि त्वत्प्रेरणाद् भोजनानन्तरमेव मद्यपानेन मत्ते परस्परज्ञानशून्ये। यत एवंभूतः सकलस्वजनः परस्परं हनिष्यतीत्यर्थः। तदा रामोऽपि एरकप्रहारं लब्ध्वा योगेन देहं त्यजति। तदा त्वमपि छन्नभावं गमिष्यसीति। राममेव विशिनष्टि सीताजानिप्रसमविषमे इति। तयोः साम्यवैषम्ये दर्शयति—यज्ञघ्नघ्न इति। यथा—विश्वामित्रयज्ञघ्नस्य सुबाहोर्हन्ता दाशरथिः। बल-भद्रोऽपि यज्ञघ्नस्य वल्वलस्य हन्ता इति साम्योक्तिः। वैषम्यमाह—विविदमथने इति।

---

T. १. 'प्रत्यच्छन्ति'
२. 'जातौ लेशा'
३. 'कृतौ समु'
४. 'क्षिप्तौ त'
५. 'ासाख...रक'
६. 'त स्वं'
७. 'ग्यभावेन'
८. 'गर्भमुक्तमिति'

